अग्नये शुचये । [12]यदग्नये पवमानाय निर्वपति । पुनात्येवैनम् । यदग्नये पावकाय । पूत एवास्मिन्नन्नाद्यं दधाति । यदग्नये शुचये। ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति ॥ ४४ ॥

एनमाहवनीयं धत्तेऽश्वत्वं वर्तयति कुरुत इति रुद्रो दधाति यदग्नये शुचय एकं च ॥५॥

दिता पञ्चधा पुनरग्नेर्विक्रान्तिः । अत्राप्यैन्द्राग्नादित्याभ्यां अनुनिर्वाप्याभ्यां सह पञ्च हवींषि भवन्ति । त्रिग्रहणमुपलक्षणम् । यद्वा—'सा ततः प्राच्युदक्रामत्'* इत्यत्र प्रतिपादितं अन्नप्रजापश्वादिसम्पादनसामर्थ्यं विक्रान्तिः । तत्सामर्थ्यवान्भवति यजमानः एतैर्हविर्भिस्त्रिभिरेव ॥

[12]तामेव विक्रान्तिं दर्शयति—यदग्नय इत्यादि ॥ प्रथमेन तावदेनं पुनाति, द्वितीयेन प्रथमभूतेऽस्मिन्नन्नाद्यमादधाति । तृतीयेन चास्मिन् ब्रह्मवर्चसं दधाति । उपरिष्टात्पूते अन्नाद्यवति च सम्पन्ने तदुपरि ब्रह्मवर्चसं चास्मिन् स्थापयतीत्येके । अन्नस्यादनं अन्नाद्यं अन्नादनसामर्थ्यं, भावे यत् । ब्रह्मणो वर्चो बलं ब्रह्मवर्चसम्, 'ब्रह्महस्तिभ्याम्' इत्यच् समासान्तः ॥

इति प्रथमे पञ्चमोऽनुवाकः.

---

*ब्रा. १-१-१०.

[1]देवासुराः संयत्ता आसन्न् । ते देवा विजयमुपयन्तः । अग्नौ वामं वसु सं न्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । [2]तदग्निर्नोत्सहम-शक्नोत् । तत्त्रेधा विन्यदधात् । पशुषु तृतीयम् । अप्सु तृतीयम् । आदित्ये तृतीयम् ॥ ४५ ॥ [3]तद्देवा विजित्य । पुनरवारुरुत्सन्त । तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं निरवपन् । पशवो वा अग्निः पवमानः । यदेव पशुष्वासीत् । तत्तेनावारुन्धत । तेऽग्नये पावकाय । आपो वा अग्निः पावकः । य-

[1]देवासुरा इत्यादि ॥ व्याख्यातम्* ॥

[2]तदग्निर्नोत्सहामिति ॥ तत् वामं वसु अग्निः उत्सहं उत्सोढुं उद्वोढुं नाशक्नोत् । 'शकि णमुल्कमुलौ' इति कमुल् । तत् त्रेधा विभज्य पश्वादिषु एकैकं भागं विनिहितवान् पृथक्स्थापितवान् अग्निः । तृतीयमिति । 'पूरणाद्भागे तीयादन्' इति स्वार्थेऽन्प्रत्ययः, तेनाद्युदात्तः ॥

[3]तद्देवा इति ॥ तत् वामं देवा विजित्य असुरान् पुनरवरोद्धुमैच्छन् । अथ ते वाममवरुरुत्समाना देवाः पवमानादिभ्यो हविर्निरुप्य पश्वादिषु स्थितं यद्यदग्नेस्तृतीयं तत्तदलभन्त ।

*सं. १-६-५.

देवाप्स्वासीत् । तत्तेनावारुन्धत ॥ ४६ ॥ तेऽग्नये शुचये । असौ वा आदित्योऽग्निश्शुचिः । यदेवादित्य आसीत् । तत्तेनावारुन्धत । ‘ब्रह्मवादिनो वदन्ति । तनुवो वावैता अग्न्याधेयस्य । आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति । यत्तं निर्वपेत् । नैतानि । यथाऽऽत्मा स्यात् ॥ ४७ ॥ नाङ्गानि । तादृगेव तत् । यदेतानि निर्वपेत् । न तम् । यथा-

पशवो वा इत्यादि । पवमानत्वात्पशुहेतुत्वात् ताच्छब्द्यम् । आपो वा इति । शोधकत्वात्पावकत्वाद्वा ताच्छब्द्यम् । असौ वा इति । शुद्धिहेतुत्वाद्दीप्तिहेतुत्वाद्वा ताच्छब्द्यम् ॥

‘ब्रह्मवादिन इत्यादि ॥ एतानि पवमानादीनि हवींषि तनुवः अङ्गानि अग्न्याधेयस्य अग्नेः । आग्नेयः खलु अष्टाकपालः स्वयमग्न्याधेय इति ब्रह्मवादिन आहुः । भवतु किं नश्छिन्नमित्याह— तत्र यदि तं आग्नेयमेव निर्वपेत् न तु एतानि हवींषि निर्वपेदित्येव । यथा आत्मा शरीरं स्यात् नाङ्गानि हस्तपादशिरांसि न स्युः । लौकिकोऽनुषङ्गः । तादृक्तत् केवलाग्नेयनिर्वपणम् । अथ यदि एतानि निर्वपेत् न तु तं आग्नेयं निर्वपेदित्येव । यथाऽङ्गानि हस्तपादादीनि स्युः नात्मा स्यात् । तत्तुल्यं केवलाङ्गनिर्वपणम् । तस्मात् उभयानि अङ्गी चाङ्गानि सह निरूप्याणि अविकल्पेन निर्वप्तव्यानि । सहग्रहणेन अ-

ऽङ्गानि स्युः । नात्मा । तादृगेव तत् । उभयानि सहनिरुप्याणि । यज्ञस्य सात्मत्वाय । [5]उभयं वा एतस्यैन्द्रियं वीर्यमाप्यते ॥४८॥ योऽग्निमाधत्ते । ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत् । आदित्यं चरुम् । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । ताभ्यामेवास्मा इन्द्रियं वीर्यमवरुन्धे । आदित्यो भवति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । [6]धेन्वै वा एतद्रेतः ॥ ४९ ॥ यदाज्यम् । अ-

---

न्यतरत्यागो निवार्यते, न युगपद्भावो विधीयते अनिष्टत्वात् । छान्दसः क्यप् । सात्मत्वं सबलत्वं सकलत्वं वा ॥

[5]उभयं वा इत्यादि ॥ एतस्य आधातुः । अनुनिर्वपेदिति । आग्नेयस्यानुनिर्वाप्यः कार्यः । आदित्यमिति । अदितिर्देवता अस्यादित्यम् । 'दित्यदित्यादित्य' इति ण्यः । अयातयामानौ सारभूतौ । अयातयाम्नी अयातयाम्न्यौ । 'अन उपधालोपिनः' इति ङीप्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ताभ्यामित्यादि । गतम् ॥

[6]धेन्वै वा इत्यादि ॥ चरुस्तुतिः । धेन्वा विकारः आज्यम् । अनडुहो विकारः तण्डुलाः, तच्छ्रमप्रभवत्वात् ।

नडुहस्तण्डुलाः । मिथुनमेवावरुन्धे । घृते भवति । यज्ञस्यालूक्षान्तत्वाय । [7]चत्वार आर्षेयाः प्राश्ञन्ति । दिशामेव ज्योतिषि जुहोति । [8]पशवो वा एतानि हवीꣳषि । एष रुद्रः । यदग्निः ॥५० ॥ यत्सद्य एतानि हवीꣳषि निर्वपेत् । रुद्राय पशूनपि दध्यात् । अपशुर्यजमानस्स्यात् । यन्नानुनिर्वपेत् ।

तस्माद्धृते चरुर्मिथुनलाभाय । घृते भवतीत्यादि । घृतसम्बन्धेन लूक्षान्तत्वाभावमिश्रितो [....भावः । लूक्षः रूक्षः मिश्रितो] वा तादृशोऽन्तः परित्यागो यस्य स तथोक्तः । तद्भावो मा भूदिति घृते चरुः कार्यः ॥

[7]चत्वार इति ॥ दिशामधीना[1]श्चत्वारः । आर्षेयाः प्राश्नन्तीति । य आत्मीयान् ऋषीन् जानन्ति त आर्षेयाः । तैः प्राशितं दिशां ज्योतिषि दिशां सम्बन्धिन्यग्नौ हुतमेव भवति ॥

[8]पशवो वा इत्यादि ॥ गतम् । सद्यः समाने एकस्मिन्नहनि यस्मिन्नाग्नेयस्तत्रैवाह्नि यदि एतानि निर्वपेत् । रुद्रायेत्यादि । गतम् । अथैतद्दोषपरिजिहीर्षया एतानि हवींषि नानुनिर्वपेत् पशवो वाऽनवरुद्धाः स्युः । द्वादशास्वित्यादि । द्वादशसु रात्रीषु गतासु द्वादशमासात्मकसंवत्सरप्रतिमाः द्वाद-

[1]प्रतिदिशमासीना.

अनेवरुद्धा अस्य पशवस्स्युः । द्वादशसु रात्रीष्व-
नु निर्वपेत् । संवथ्सरप्रतिमा वै द्वादश रात्रयः।
संवथ्सरेणैवास्मै रुद्रꣳ शमयित्वा । पशूनवरुन्धे ।
यदेकमेकमेतानि हवीꣳषि निर्वपेत् ॥ ५१ ॥ य-
था त्रीण्यावपनानि पूरयेत् । तादृक्तत् । न प्रजनं-
नमुच्छिꣳषेत् । एकं निरुप्य । उत्तरे समस्येत् ।
तृतीयमेवास्मै लोकमुच्छिꣳषति प्रजननाय । तं
प्रजया पशुभिरनु प्रजायते । अथो यज्ञस्यैवैषाऽ-

---

शरात्रयः । उपमानपूर्वपदप्रकृतिस्वरत्वम् । संवत्सरेणेति । अ-
पवर्गे तृतीया । शाखान्तरे—'संवत्सरे निरुप्याणि' इत्युक्तम् ।
तस्याप्येवमनुग्रहः कृतो भवति । यदेकमेकमित्यादि । यद्येतानि
हवींषि पृथक्तन्त्राण्येव निर्वपेत् न कश्चिदवकाश एभिः शून्य-
स्स्यात्, ततश्च यथा त्रीण्यावपनानि कोष्ठानि उदरैकदेशाना-
पूरयेदशनादिभिः । ततश्च निरुच्छ्वासो म्रियेत । तत्तुल्यदोषमे-
षां पृथङ्निर्वपणं स्यात् । कथमित्याह—न प्रजननमित्यादि । न
हि प्रजननावकाशमुच्छिष्यात् । विकरणव्यत्ययेन श्नमः परः शप् ।
ततश्च प्रजननाभावात् प्रजापशुहीनस्स्यात । तस्मात् एकं पवमा-
नाय निरुप्य उत्तरे हविषी समस्येत् समानतन्त्रेण कुर्यात् ।
एवं हि तृतीयं लोकं अवकाशं प्रजननाय उच्छिनष्टि । तत-
स्तं लोकमनु तेन लोकेन हेतुना प्रजया पशुभिः प्रजायते यज-

भिक्रान्तिः । [9]रथचक्रं प्रवर्तयति । मनुष्यरथेनैव दैवरथं प्रत्यवरोहति ॥५२॥ [10]ब्रह्मवादिनो वदन्ति । होतव्यमग्निहोत्रां३ न होतव्या३मिति । यद्यजुषा जुहुयात् । अयथापूर्वमाहुती जुहुयात् । यन्न जुहुयात् । अग्निः पराभवेत् । तूष्णीमेव होतव्यम् । यथापूर्वमा-

---

मानः । लक्षणेऽनोः कर्मप्रवचनीयत्वम् । अथो अपिच यज्ञस्याभिक्रान्तिरेषा यदुत्तरयोः समसनं उपर्याक्रमणं आभिक्रमणम् ॥

[9]रथचक्रमिति विधिः ॥ गार्हपत्यान्वाहार्यपचनाहवनीयक्रमेण प्रवर्तयति । मनुष्यरथेन अनेन चक्रेण गत्वा देवरथं प्रत्यवरुह्य तमधिष्ठाय देवीभूतो गच्छति, न पद्भ्यां व्रजति ॥

[10]ब्रह्मवादिन इत्यादि ॥ पवमानहविर्भ्यः प्राग्विचार्यते । 'विचार्यमाणानाम्' इत्युभयत्र प्लुतः । यदि मन्त्रेण जुहुयात् अयथापूर्वं यथानुपूर्व्यामाहुतिं न जुहुयात् । अग्नेस्संस्कारमसमाप्य मन्त्रानन्तर्गतान् [तन्त्रानन्तर्गतं] पूर्वं येऽग्निहोत्रं जुह्वति तत्प्रतिक्रियाऽ [तत्प्रक्रियाऽ] तिलङ्घनेन आहुती हुते स्याताम् । अथैतद्दोषो मा प्रसंजीति यदि न जुहुयात् तदा अग्निः पराभवेत् नश्येत् । तस्मात्तूष्णीं होमेनोभयदोषनिवृत्तिः । यथापूर्वमिति । न कश्चिदयथापूर्वानुष्ठानदोषः, तूष्णीं होमस्य अकृतप्रायत्वात् । यद्वा यथापूर्वं क्रमानतिक्रमेण । अयमेव क्रमः इदानीमयममन्त्रेग हूयत इति होमस्य च वृत्तत्वात् न पराभवोऽग्नेः ॥

हुती जुहोति । नाग्निः पराभवति । [11]अग्नीधे ददाति ॥ ५३ ॥ अग्निमुखानेवर्तून्प्रीणाति । उपबर्हणं ददाति । रूपाणामवरुद्ध्यै । अश्वं ब्रह्मणे । इन्द्रियमेवावरुन्धे । धेनुꣳहोत्रे । आशिष एवावरुन्धे। अनड्वाहमध्वर्यवे । वह्निर्वा अनड्वान् । वह्निरध्वर्युः ॥ ५४ ॥ वह्निनैव वह्नि यज्ञस्यावरुन्धे । मिथुनौ गावौ ददाति । मिथुनस्यावरुद्ध्यै । वासो ददाति । सर्वदेवत्यं वै वासः । सर्वा एव देवताः प्रीणाति । आ द्वादशभ्यो ददाति । द्वादश मासास्संवथ्सरः । संवथ्सर एव प्रति तिष्ठति । काममू-

---

[11]अग्नीध इत्यादि ॥ अग्निना सह आग्नेयानृतून् प्रजाता वा प्रजाः प्रीणाति । यद्वा—स्वयमग्निरेवाग्नीत् तस्मादग्नीधः पूजया अग्निमुखाः अग्निप्रधानाः सर्वे भृत्यादयः प्रजाः प्रीता भवन्ति । उपबर्हणं सर्वसूत्रोपधानं सर्वरूपलाभाय भवति । अश्वो ब्रह्मणे दीयमानो वीर्यवत्त्वादिन्द्रियलाभहेतुः । धेनुर्होत्रे दीयमाना कामप्रदत्वादाशिषां लाभाय । अनोवहनसमर्थोऽनड्वान् अध्वर्यवे दीयमानः वहित्वाद्वोढृत्वाच्च तादृशमात्मनो वोढृ यज्ञफलं यजमानो लभते । मिथुनौ स्त्रीपुंसौ दीयमानौ गावौ मिथुनलाभाय भवतः । सङ्ख्यान्तराणामनन्तर्भावात् । द्वादशमासात्मकस्य संवत्सरस्य लाभः । द्वादशभ्य ऊर्ध्वं कामं यथेष्टं देयं

ध्वर्वे देयम् । अपरिमितस्यावरुद्ध्यै ॥ ५५ ॥

आदित्ये तृतीयमप्स्वासीत्तत्तेनावारुन्धत स्या-
दाप्यते रेतोऽग्निरेकमेकमेतानि हवीꣳ-
षि निर्वपेत्प्रत्यवरोहति ददात्य-
ध्वर्युर्देयमेकं च ॥ ६ ॥

[1]घर्मश्शिरस्तदयमग्निः । सं प्रियः पशुभिर्भु-

---

यथाकथाचित्सङ्ख्यया सङ्ख्येयं देयं अपरिमितामिति यावत् । अपरिमितस्य फलस्य लाभाय भवति ॥

इति प्रथमे षष्ठोऽनुवाकः.

[1]अतःपरमाधानमन्त्राः—घर्मशिरांस्याग्नेयमेव काण्डम् । तत्र गार्हपत्यमादधाति—घर्मश्शिर इति परोष्णिहा ॥ घर्मः प्रवर्ग्यः सोऽस्य शिरस्थानीयः प्रधानत्वात् । ब्राह्मणं च भवति—'शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः'* इति । स एवाधीयमानो गार्हपत्योऽग्निः । लिङ्गव्यत्ययः । तदिति वा हेतुः । तदात्माऽयमिति शेषः । सोऽयमेवंमहानुभावः पशुभिस्सम्प्रियः सह प्रीयमाणो भुवत् भवतु । भवतेर्लेटि शपो लुकि 'लेटोऽडाटौ' इत्यडागमे 'भूसुवोस्तिङि' इति गुणाभावः । यद्वा—उवङ् । छर्दिः दीप्तिः

---

*आ. ८-६.

वत् । छर्दिस्तोकाय तनयाय यच्छ । [2]वातः प्राण-
स्तदयमग्निः । सं प्रियः पशुभिर्भुवत् । स्वदितं
तोकाय तनयाय पितुं पच । [3]प्राचीमनु प्रदिशं प्रेहि
विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा
दीद्यानो विभाहि । ऊर्जं नो धेहि द्विपदे चतुष्पदे॥
५६॥ [4]अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः । संप्रियः

---

औणादिक इसिप्रत्ययः । तोकाय पुत्राय तनयाय तत्पुत्राय च यच्छ वर्धयतु दीप्तिम् । पुरुषव्यत्ययः । यद्वा—निजगुण-कीर्तनेन प्रसन्नां देवतां प्रत्यक्षेण दृष्ट्वा प्रार्थयते ॥

[2]अन्वाहार्यपचनमादधाति—वात इति परोऽनुष्टुभा ॥ "तनयाय" इति चतुर्थादिः । वातः प्राणः सर्वेषां प्रधानभूतः । तदयमित्यादि । गतम् । स्वदितं स्वादुरसं पितुं अन्नं तोकाय तनयाय पच सम्यङ्निर्वर्तय ॥

[3]प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति—प्राचीमिति त्रिष्टुभा ॥ व्याख्यातेयमग्निकाण्डे* । प्रधानां दिशमनुक्रमेण गच्छ विद्वान् । हे अग्ने! अङ्गनादिगुण! अश्व! अग्नेः पुरोग्निः अग्नेः पुरो गन्ता भव । इह अस्मिन् कर्मणि । विश्वा दिशः दीद्यानः दीपयन् विभाहि विशेषेण दीप्यस्व । ऊर्जं अन्नं रसं वा अस्माकं द्विपदे चतुष्पदे च धेहि इति ॥

---

* सं. ४-६-५.

पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चश्शुक्रा तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वाऽऽदधे । अग्निनाऽग्ने ब्रह्मणा । [5]आनशे व्यानशे सर्वमायुर्व्यानशे । [6]ये ते अग्ने शिवे तनुवौ । विरा-

[4]आहवनीयमादधाति—ताभ्यां विराड्बृहतीभ्यां अर्कश्चक्षुरिति ॥ अर्कचक्षुषोरन्योन्यात्मत्वमुच्यते । स्वयं अर्कश्चक्षुः तत् एव चक्षुः असौ सूर्यः सर्वेषां दर्शनस्य तद्भावे हेतुत्वात् ताच्छब्द्यम् । तत् तादृशचक्षुस्स्थानीयोऽयमित्यादि । गतम् । अथ पूर्ववत्प्रत्यक्षेणाह—यत्त इति । अजस्रं सन्ततं [अजस्रमित्यन्तं] वा यजुः । हे शुक्र ! निर्मल ! वीर्यस्य वा कारणभूत ! यत् तव शुक्रं तादृशं वर्चः बलं तादृशी च तनूः शरीरं तादृशं च ज्योतिः तेजः अजस्रं नित्यं तेन मे मां दीदिहि दीपय । तेन इत्थंभूतं त्वां आदधे । अग्निना अङ्गनादिगुणेन ब्रह्मणा परिबृढेन तेनोपलक्षितम् । यद्वा—अनेन ब्रह्मणा घर्मशिरस्संज्ञेन मन्त्रेण त्वामादधे हे अग्ने ! ॥

[5]आहवनीयमाधीयमानं यजमानोऽभिमन्त्रयते—आनश इति ॥ द्विपदा गायत्रीत्येके । आनशे व्याप्तवान् विश्वम् । व्यानशे विशेषेण व्याप्तवान् । सर्वं च आयुः जीवितं हविर्वा व्यानशे लब्धवान् । छान्दसो लिट् 'अश्नोतेश्च' इति नुट् ॥

[6]आहवनीयाधाने यजमानः शिवा जपति—ये ते अग्न इत्याद्याः ॥ एते गायत्रीप्रकाराः । यजूंषीत्येके । हे अग्ने ! ये ते तव शिवे

ट्टु स्वराट्टु । ते मा विंशतां ते मां जिन्वताम् ॥
7 ये ते अग्ने शिवे तनुवौ । सम्राट्टाभिभूश्च । ते
मा विंशतां ते मां जिन्वताम् । ये ते अग्ने शिवे
तनुवौ । विभूश्च परिभूश्च । ते मा विंशतां ते मां
जिन्वताम् । ये ते अग्ने शिवे तनुवौ । प्रभ्वी च
प्रभूतिश्च । ते मा विंशतां ते मां जिन्वताम् । या-
स्ते अग्ने शिवास्तनुवः । ताभिस्त्वाऽऽदधे । यास्ते

तनुवौ शान्ते तनुवौ विराट् तन्नाम्नी स्वराण्णाम्नी च विविधं राजतीति विराट् । स्वायत्तं राजतीति स्वराट् । ते मा विशतां प्राप्नुताम् । ते च जिन्वतां प्रीणयताम् । जिवि प्रीणने । इदि-त्वान्नुम् ॥

7 ये इत्यादि ॥ गतम् । संराट् सङ्गतं राजतीति 'सत्सूद्विष' इत्यादिना क्विप्, 'मोराजिसमः क्वौ' इति मस्य मः । अभिभ-वति सपत्नानिति अभिभूः । 'क्विप्च' इति क्विप् । विविधं भा-वयति विश्वं व्याप्नोतीति विभूः । परितो भवति विश्वमधितिष्ठ-तीति परिभूः । प्रभ्वी प्रकर्षेण भवतीति "विप्रसम्भ्यः" इति डुः ; "ओतो गुणवचनात्" इति ङीप् । प्रभूतिः प्रभूयते विश्वमनयेति करणे क्तिन् । 'तादौ च' इति गतेः प्रकृतिस्वर-त्वम् । याश्शिवाः ताभिः सहितं त्वां आदधे । याः पुनः घोराः अश्रुतापादिव्यसनहेतवः[1] ताभिः सह त्वं अमुं अस्मद्द्वेष्यं गच्छ ।

[1]अरातिनिरसनहेतवः.

अग्ने घोरास्तनुवः । ताभिरमुं गच्छ ॥ ५८ ॥
चतुष्पदे जिन्वतां तनुवस्त्रीणि च ॥ ७ ॥

[1]इमे वा एते लोका अग्नयः । ते यदव्यावृत्ता आधीयेरन्न् । शोचयेयुर्यजमानम् । घर्मशिशर इति गार्हपत्यमादधाति । वातः प्राण इत्यन्वाहार्यपचनम् । अर्कश्चक्षुरित्याहवनीयम् । तेनैवैनान्व्यावर्तयति । तथा न शोचयन्ति यजमानम् । [2]रथ-

इति द्वेष्याय अग्निं प्रहिणोति । स पराभूतो भवति । अमुमिति द्वेष्यार्थं सर्वनामपदम् ॥

इति सप्तमोऽनुवाकः.

---

[1]इमे वा एत इत्यादि ॥ घर्मशिरसां ब्राह्मणम् । अतः प्रभृति त्रयोऽनुवाकाः आधानब्राह्मणम् । आग्नेयमेव काण्डम् । यज्ञद्वारेण लोकानां स्थितिहेतुत्वादेते अग्नयो यदि अव्यावृत्ताः अविलक्षणाः आधीयेरन् यजमानं शोचयेयुः विलक्षणस्वभावत्वाल्लोकानाम् । विलक्षणतया अग्निलोकवैलक्षण्यात् लोकानां स्थितये अग्नयो न स्युः । तस्मात् 'घर्मशिरः'* इत्यादिमन्त्रभेदेनाग्नीनां व्यावृत्तिः क्रियते. ॥

[2]रथन्तरमित्यादि ॥ सम्भारस्य च व्यावृत्तिः क्रियते रथन्तरं

*ब्रा. १-१-७.

न्तरमभिगायते गार्हपत्य आधीयमाने। राथन्त-
रो वा अयं लोकः ॥ ५१ ॥ अस्मिन्नेवैनं लोके
प्रतिष्ठितमाधत्ते। वामदेव्यमभिगायत उद्ध्रियमा-
णे। अन्तरिक्षं वै वामदेव्यम्। अन्तरिक्ष एवैनं
प्रतिष्ठितमाधत्ते। अथो शान्तिर्वै वामदेव्यम्। शा-
न्तमेवैनं पशव्यमुद्धरते। बृहदभिगायत आहवनी-
य आधीयमाने। बार्हतो वा असौ लोकः। अमु-
ष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते। [3]प्रजापतिरग्नि-

साम उद्गाता अभिगायते आभिमुख्येन गायति। व्यत्ययेनात्मनेप-
दम्। राथन्तर इति। प्राथम्यात् तत्सम्बन्धी। उत्सादित्वादञ्।
'अस्य जगतः'* इति लिङ्गाच्च रथन्तरसम्बन्धी अयं लोकः। तस्मात्
अस्मिन् लोके प्रतिष्ठितं अविचलितमाधत्ते। वामदेव्यमित्यादि।
क्रमात्ताच्छब्द्यम्—रथन्तरं वामदेव्यं बृहदिति। 'कया, कस्त्वा'†
इति वानिर्ज्ञातत्वलिङ्गादन्तरिक्षस्य च तादृक्स्वरूपत्वात्। अथो
अपिच शान्तिहेतुर्वामदेव्यं, अग्नेस्सखित्वादिसङ्कीर्तनालिङ्गात्। प-
शव्यं पशुभ्यो हितम्। बृहदित्यादि। बार्हतत्वं क्रमाद्द्युलोकस्य
सूर्यतासंस्तवाच्च ॥

[3]प्रजापतिरित्यादि॥ सः अग्निः अश्वो भूत्वा पराङैत् प्रजा-
पतिसकाशादपुनरावृत्तोऽगच्छत्। कीदृशः अवारः वारयितुमश-

*सं. ३-४-१५. †आ. ७-४२.

मसृजत ॥ ६० ॥ सोऽश्वोऽवारो भूत्वा पराङैत् । तं वारवन्तीयेनावारयत । तद्वारवन्तीयस्य वारवन्तीयत्वम् । श्यैतेनं श्येती अंकुरुत । तच्छ्यैतस्यं श्यैतत्वम् । यद्वारवन्तीयमभिगायते । वारयित्वैवैनं प्रतिष्ठितमाधत्ते । श्यैतेनं श्येती कुरुते । 'घर्म-

क्यः अन्येनोपायेनैव । तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरत्वं प्राप्नोति, बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तस्मात् वारणीयोऽश्वविशेषो वारः कर्मणि घञ् । गुणविशेषो वा; यथा 'अश्वं नत्वा वारवन्तम्' इति । यो महावेगतया निवर्तयितुं न शक्यते तादृशोऽश्वो भूत्वा पराङैत् । वारवन्तीयेन साम्ना अवारयत न्यवर्तयत । तत्तस्मात् वारवन्तीयत्वं साम्नः । वारयित्वा वननं सम्भजनमश्वस्य कृतमनेनेति वारवन्तीयम् । पृषोदरादिः । अनुप्रवचनादित्वात् प्रयोजने छः । यद्यपि वारवन्तमिति शब्दोऽस्मिन्सामन्यस्तीति 'मतौ छस्सूक्तसाम्नोः' इति छः क्रियते । तथाऽपि व्युत्पत्त्यन्तरमिदं दर्शितमिति वेदितव्यम् । श्यैतेन साम्ना अश्वं श्येतीकृतवान् । तस्मात् साम्नः श्यैतत्वम् । श्येतश्शितः श्यातः औणादिकस्तत्प्रत्ययः । अश्येतं श्येतं कुरुते इति अभूततद्भावे च्विः । ईषा अक्षादित्वात् संहिताऽभावः । तस्माच्छ्येतीकरणसाधनत्वेन श्येतसम्बन्धाच्छ्यैतत्वम् । श्यैतेन दृष्टमिति व्युत्पत्त्यन्तरम् । यदित्यादि । गतम् ॥

श्शिर इति गार्हपत्यमादधाति । सशीर्षाणमेवै-
नमाधत्ते ॥ ६१ ॥ उपैनमुत्तरो यज्ञो नमति । रुद्रो
वा एषः । यदग्निः । स आधीयमान ईश्वरो यज-
मानस्य पशून् हिꣳसितोः । संप्रियः पशुभिर्भुव-
दित्याह । पशुभिरेवैनꣳ संप्रियं करोति । पशूना-
महिꣳसायै । छर्दिस्तोकाय तनयाय यच्छेत्याह ।
आशिषमेवैतामाशास्ते । वातः प्राण इत्यन्वाहार्य-
पचनम् ॥ ६२ ॥ सप्राणमेवैनमाधत्ते । स्वदितं
तोकाय तनयाय पितुं पचेत्याह । अन्नमेवास्मै
स्वदयति । प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह ।
विभक्तिरेवैनयोस्सा । अथो नानावीर्यावेवैनौ कुरु-

'घर्मश्शिर इत्यादि ॥ मन्त्रावयवस्तुतिः । उपैनमिति । एवं ह्ययमग्निश्शिरोयुक्तो भवति । इतरथा देहमात्रवानिव स्यात् । रुद्रो वा इत्यादि । 'सम्प्रियः पशुभिर्भुवत्'* इति मन्त्रावयवस्तुतिर्गता । हिंसितोः । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन्। सम्प्रियं सङ्गतं प्रियं करोति । छर्दिस्तोकायेत्यादि । गतम् । सप्राणं सबलम् । अन्नमेवेति पितुशब्दस्यार्थ उक्तो भवति । विभक्तिरेवेत्यादि । 'प्राचीमनु प्रदिशं प्रेहि'† इति प्राञ्चोऽश्वमथ- मा अभिव्रजन्ति । सा गतिः एनयोः गार्हपत्याहवनीययोः वि-

*ब्रा. १-१-७. †सं. ४-६-५.

ते । ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याह । आशिषमेवैतामाशास्ते । [5]अर्कश्चक्षुरित्याहवनीयम् । अर्को वै देवानामन्नम् ॥ ६ ३ ॥ अन्नमेवावरुन्धे । तेनं मे दीदिहीत्याह । समिन्ध एवैनम् । आनशे व्यानश इति त्रिरुदिङ्गयति । त्रयं इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । तत्तथा न कार्यम् । वीङ्गितमप्रतिष्ठितमादधीत । उद्धृत्यैवाधा-

भक्तिः विभागः कृतः आहवनीयो गार्हपत्यमित्यादिना प्रतिपादितमर्थं मन्त्रेऽपि प्रदर्शयति—अथो इत्यादि । व्याख्यातमेव । ऊर्जं न इत्यादि । गतम् ॥

[5]अर्को वा इति ॥ अन्नस्थानीयः अर्कः आदित्यस्सर्वैरर्चनीयत्वात् । तेन इत्यादि । गतम् । त्रिरुदिङ्गयति- त्रिरुद्भ्रमयति । ऊर्ध्वं क्रमेण त्रिरुद्भ्रमयति । इगि गतौ इदित्त्वान्नुम् । लोकत्रये ऊर्ध्वं क्रमेणावस्थिते प्रतिष्ठितो भवति । एतद्दूषयति—तदित्यादि । तत् त्रिरुदिङ्गनं तथा न कार्यम् । कथं? उद्धृत्य आधाय समिध्य पश्चाच्च कर्तव्यमित्यर्थः । तथा करणे दोषमाह—वीङ्गितं विविधं कम्पितं विचालितमुत्पादितमत एव अप्रतिष्ठितमादधीत आहितवान् स्यात् । आधायोच्चलनादप्रतिष्ठितो लोकेषु स्यात् । तस्मात्तथा न कार्यमिति । कथं

याभिमन्त्रियः । अवीङ्क्तमेवैनं प्रतिष्ठितमाधत्ते ।
[6]विराड्व स्वराड्व यास्ते अग्ने शिवास्तनुवस्ताभि-
स्त्वाऽऽदध इत्याह । एता वा अग्नेश्शिवास्तनुवः ।
ताभिरेवैनꣳ समर्धयति । यास्ते अग्ने घोरास्तनुव-
स्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात् । ताभिरेवैनं
पराभावयति ॥ ६४ ॥

लोकोऽसृजतैनमाधत्तेऽन्वाहार्यपचनं
देवानामन्नमेनं प्रतिष्ठितमाधत्ते
पश्च च ॥ ८ ॥

---

तर्हि उदिङ्गनं कर्तव्यं किं वा न कर्तव्यमेव? तत्राह—उद्धृ-त्यैवेति । न ब्रूमः न कर्तव्यमुदिङ्गनमिति; अपि तु उद्धृत्यैव उद्धरणानन्तरमेव त्रिरुद्गमयितव्यः । आधानात्प्रागेव 'आनशे व्यानशे'* इत्यनेन किं तदानीमुदिङ्गनं? नैव, तूष्णीमुदिङ्ग्य आ-धायाभिमन्त्रयः अग्निरनेन मन्त्रेण । एवं हि क्रियमाणे अवीङ्क्तं स्थापयित्वा अनुत्पादितं एवैनं अविचालनीयं प्रति-ष्ठितमाधत्ते आहितवान् भवति ॥

[6]अथ शिवानां ब्राह्मणम्—विराड्वेति ॥ गतम् * ॥

इत्यष्टमोऽनुवाकः.

---

*ब्रा. १-१-७.

[1]शमीगर्भाद्ग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति । [2]अदितिः पुत्रकामा। साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्यां उच्छेषणमददुः । तत्प्राश्ञात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् । सा द्वितीयमपचत्॥ ६५ ॥ तस्यां उच्छेषणमददुः । तत्प्राश्ञात् । सा रेतोऽधत्त । तस्यै मित्रश्च वरुणश्चाजायेताम् । सा तृतीयमपचत् । तस्यां उच्छेषणमददुः । तत्प्राश्ञात् । सा रेतोऽधत्त । तस्या अꣳशश्च भगश्चाजायेताम् । सा चतुर्थमपचत् ॥ ६६ ॥ तस्यां उ-

[1]शमीगर्भादग्निमित्यादि ॥ 'अश्वो रूपं कृत्वा । सोऽश्वत्थे संवत्सरमतिष्ठत्'* इति अश्वत्थान्मन्थने कर्तव्ये तत्र विशेषमाह—शमीगर्भादश्वत्थादिति । शम्यावेष्टितत्वात् शम्या गर्भस्थादश्वत्थविकारेणारणिना अग्निं मन्थति 'यो अश्वत्थश्शमीगर्भः । आरुरोह'† इति च लिङ्गात् । एषा खलु शमीगर्भा अश्वत्थात्मिका अग्नेर्यज्ञिया यज्ञार्हा तनूः या अश्वरूपेणाश्वत्थं प्रविष्टा । तामेवास्मै अग्नये जनयति शमीगर्भमन्थनेन ॥

[2]अदितिः पुत्रकामेत्यादि ॥ ब्रह्मौदनस्तुतिः । साध्या नाम देवविशेषाः । साधयन्तीति ण्यन्तात्कर्तर्यचो यत्, 'यतो नावः' इ-

*ब्रा. १-१-३. †ब्रा. १-२-१.

च्छेषणमददुः । तत्प्राश्ञ्ञात् । सा रेतोऽधत्त । तस्या इन्द्रश्च विवस्वाꣳश्चाजायेताम् । [3]ब्रह्मौदनं पचति । रेत एव तद्दधाति । प्राश्ञ्ञन्ति ब्राह्मणा ओदनम् । यदाज्यमुच्छिष्यते । तेन समिधोऽभ्यज्यादधाति । उच्छेषणाद्वा अदिती रेतोऽधत्त ॥६७
उच्छेषणादेव तद्रेतो धत्ते । अस्थि वा एतत् । य-

---

त्याद्युदात्तत्वे उदात्तनिवृत्तिस्वरेण यत एवोदात्तत्वम् । ब्रह्मणे निर्वपणात् ब्रह्मौदनः । तस्या इत्यादि । गतम् । द्वितीयमित्यादि क्रियाविशेषणम् ॥

[3]ब्रह्मौदनं पचतीति विधिः ॥ एवं नाम प्रशस्तोऽयं यस्योच्छेषणप्राशनेनाप्यदितिः ईदृशान् पुत्रान् जनयामासेति । रेत एवेति । जनिष्यमाणस्याग्नेर्बीजस्थानीयोऽयमिति । प्राश्नन्तीति विधिः । तस्य प्रभूतेन सर्पिषोपसिक्तस्य यदाज्यमुच्छिष्यते अवशिष्यते अतिरिच्यते तेनाभ्यज्य समिधस्तिस्र आदधाति । उच्छेषणाद्वा इत्यादि उच्छेषणाभ्यञ्जनस्तुतिः । अस्थि वा इत्याद्यभ्यञ्जनस्तुतिः । रेतोविकारे शरीरे अस्थि स्थापयति ॥

[4]तिस्र इति ॥ सङ्ख्यास्तुतिः । मिथुनाधीनत्वात् बीजपरिणामस्य । इयतीरिति परिमाणस्तुतिः । इयत्यः प्रादेशमात्र्यः । प्रादेशमुद्रया वेदार्थं दर्शयति इदं परिमाणमासां 'किमिदंभ्यां वोघः' इति वतुपो घत्वं च 'इदंकिमोरीश्की' इति ईशा-

थ्समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोऽभ्यज्यादधाति । अस्थ्येव तद्रेतसि दधाति । [4]तिस्र आदधाति मिथुनत्वाय । इयतीर्भवन्ति । प्रजापतिना यज्ञमुखेन संमिताः ॥ ६८ ॥ [5]इयतीर्भवन्ति । यज्ञपरुषा संमिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमिताः । [6]आर्द्रा भवन्ति । आर्द्रमिव हि रेतस्सिच्यते । चित्रियस्याश्व-

देशः, 'यस्य' इति लोपे उदात्तनिवृत्तिस्वरेण प्रत्ययादेरुदात्तत्वम्, 'उगितश्च' इति ङीप्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। प्रजापतिनेति। यज्ञात्मनः प्रजापतेर्मुखं यज्ञमुखं तेन सम्मिता भवन्ति यज्ञमुखानां प्रादेशप्रमाणत्वात् प्रजानां पालकत्वात् यज्ञमुखस्यैव प्रजापतित्वेन स्तुतिः, 'सर्वं वा मुखमतः' इति मुखस्यैव प्राधान्यात् ॥

[5]एवं प्रशस्तमिदं प्रमाणमिति गुणान्तरप्रदर्शनार्थं पुनर्विधानम्—इयतीरिति ॥ यज्ञात्मनः पुरुषस्य परुः पर्व हस्तादिसन्धिः तेन सम्मिता इति प्राशस्त्यम् । अथ तृतीयं विदधाति गुणान्तरार्थं—इयतीरिति । एतावत् प्रादेशमात्रं पुरुषे वीर्यं वीर्यं आत्मातिदेशः मुखं हृदयं वा तेनैव सम्मिता भवन्ति ॥

[6]आर्द्रा इत्यादि ॥ गतम् । चित्रियस्येति । ग्रामनगरादिचिह्नभूतोऽश्वत्थश्चित्र्यः चित्रश्चायनीयः ख्यातः स एव चित्र्यः ।

त्थस्यादधाति । चित्रमेव भवति । घृतवतीभिरादधाति ॥ ६९ ॥ एतद्वा अग्नेः प्रियं धाम । यद्घृतम् । प्रियेणैवैनं धाम्ना समर्धयति । अथो तेजसा । [7]गायत्रीभिर्ब्राह्मणस्यादध्यात् । गायत्रछन्दा वै ब्राह्मणः । स्वस्य छन्दसः प्रत्ययनस्त्वाय । त्रिष्टुग्भी राजन्यस्य । त्रिष्टुप्छन्दा वै राजन्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय ॥ ७० ॥ जगतीभिर्वैश्यस्य । जगतीछन्दा वै वैश्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय । तꣳ संवथ्सरं गोपायेत् । संवथ्सरꣳ हि

स्वार्थिको यत् । तस्य सम्बन्धिनीरादधाति । चित्रमिति । आधातुससम्बन्धि सर्वं गृहादिकं चित्रं चायनीयं प्रख्यातं भवति। घृतवतीभिरिति ।[6]घृतशब्दवतीभिः ऋग्भिः 'समिधाऽग्निं दुवस्यत'* इत्यादिभिः तिसृभिर्वा ब्राह्मणादीनां त्रयाणामप्यादधाति । धाम स्थानम् । प्रियेण धाम्ना समृद्धं करोति । अथो अपिच तेजसा समर्धयतीत्यर्थः ॥

[7]गायत्रीभिरिति ॥ पूर्वोक्ताभिः । गायत्रछन्दाः ब्राह्मणः उभयोरपि प्रजापतेर्मुखजातत्वेन सहजातत्वात् । स्वस्य आत्मनः छन्दसः प्रत्ययनस्त्वाय । एतेः कर्मणि ल्युटि सकारोपजनः। त्रिष्टुग्भिरिति । 'समिध्यमानः प्रथमः'* इत्यादिभिः । त्रिष्टुब्राजन्ययोः उरसो जातत्वात् सहजातत्वम् । जगतीभिः 'त्वामग्ने

*मा. १-२-१.

रेतो ह्नितं वर्धते । [8]यद्येन१ संवथ्सरे नोपनमेत् । समिधः पुनरादध्यात् । रेत एव तद्धितं वर्धमानमेति । [9]न मा१ंसमश्नीयात् । न स्त्रियमुपेयात् । ७१ ॥ यन्मा१ंसमश्नीयात् । यथ्स्त्रियमुपेयात् । निर्वीर्यस्स्यात् । नैनमग्निरुपनमेत् । श्व आधास्य-

समिधानम्'* इत्यादिभिः । जगतीवैश्ययोर्मध्यजातत्वेन सहजातत्वम् । तामिति । ब्रह्मौदनाग्निं संवत्सरं रक्षेत् । 'गुपू धूप' इत्यायप्रत्ययः । निर्मन्थ्यस्याग्नेः बीजभूतं यस्मात् हितं निहितं संवत्सरं वर्धते ॥

[8]यद्येनमित्यादि ॥ अथ संवत्सरादर्वागग्न्याधेयं नोपनमेत् द्रव्यादिवैकल्येनाधातुमसमर्थस्स्यात् पुनस्संवत्सरे पूर्णे समिध आदध्यात् ब्रह्मौदनं पचेदित्यर्थः । ताभिस्तस्य लक्षणतः तद्धि रेतस्थानीयं निहितं यावत् संवत्सरं वर्धमानं पुनरपि एति गच्छति, कालोत्कर्षापेक्षया उपचयं भजते गर्भवत् । तस्मात् संवत्सरे ब्रह्मौदनं पचेत् यावदुपनमति । अर्वागपि संवत्सराद्यदैनमुपनमति तदैवादधीतेति ॥

[9]न मांसमित्यादि ॥ संवत्सरं व्रतम् । निर्वीर्य इति । क्षीणबीजस्स्यात् अग्न्याधेयं च एनं नोपनमेत् । श्व इत्यादि । सर्वेष्वपि पक्षेषु अयं द्वितीयो ब्रह्मौदनविधिरिति केचित् । अन्ये संवत्सरे वा द्वादशाहे वा त्र्यहे वा श्वो वेति ब्रह्मौ-

* ब्रा. १-२-१.

मानो ब्रह्मौदनं पचति । [10]आदित्या वा इत उत्त-
मास्सुवर्गं लोकमायन्न् । ते वा इतो यन्तं प्रतिनु-
दन्ते । एते खलु वावादित्याः । यद्ब्राह्मणाः । तैरेव
संत्वं गच्छति ॥ ७२ ॥ नैनं प्रतिनुदन्ते । [11]ब्रह्म-
वादिनो वदन्ति । क्वा सः । अग्निः कार्यः । योऽ-
स्मै प्रजां पशून्प्रजनयतीति । शल्कैस्ताꣳ रात्रि-
मग्निमिन्धीत । तस्मिन्नुपव्युषमरणी निष्टपेत् ।

---

दनकालविकल्प इति । अनद्यतनेऽपि व्यत्ययेन लुट् न प्रवर्तते ॥

[10]आदित्या वा इत्यादि ॥ उत्तमा अदितेः पुत्रा देवा इतो लोकात् स्वर्गं गताः । ते इतो यन्तं स्वर्गं गच्छन्तं प्रति नुदन्ते प्रतीपं प्रेरयन्ति प्रत्यापयन्ति । तस्मात् ब्राह्मणान् प्राशयेत् ब्राह्मणाः खलु आदित्याः । वावशब्दः प्रसिद्धौ 'ब्राह्मणो वै सर्वा देवताः'* इति । तस्मात् ब्राह्मणसन्तर्पणेन तैरेवादित्यैः संत्वं सङ्गतत्वं संश्लेषं गच्छति । ततस्तैर्न प्रणोद्यो भवति । संशब्दात् ससाधनक्रियावचनात् त्वप्रत्ययः ॥

[11]ब्रह्मवादिन इत्यादि ॥ योऽस्मै यजमानाय प्रजां पशून् प्रजनयति प्रजापशुभावेन संपत्स्यते । तदर्थं रेत एव निधीयते। रेत एव तद्दधातीति । तेन च † ब्राह्मौदनिकः अग्निः एष निर्मन्थ्योऽग्निः स क्व कार्यः कस्मिन्नुपाये स एवात्र निर्मन्थ्यस्स्यात्।

---

* ब्रा. १-४-४. † स च.

**यथर्षभाय वाशिता न्याविच्छायति। तादृगेव तत्। अपोदूह्य भस्माग्निं मन्थति ॥ ७३ ॥ सैव साऽग्नेस्सन्ततिः। तं मथित्वा प्राञ्चमुद्धरति । संवथ्सर-**

कः पुनस्स उपाय इत्युपायं पृच्छन्ति ब्रह्मवादिनः । सांहितिकं दीर्घत्वं छान्दसम् । इदानीं येनायं स एव भवति तमुपायं दर्शयति—शल्कैरित्यादिना । श्व आधास्यमानो यस्यां निशायां ब्रह्मौदनं पचति तां सर्वां शल्कैः दारुशकलैः अग्निमिन्धीत संदीपयेत् । ततः किमित्याह—अथ तस्मिन् अग्नौ उपव्युषं उषस्समीपे काले 'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यच् समासान्तः अव्ययानां भमात्रे टिलोपः । अरणी निष्टपेत् गोस्थानीये अरणी ऋषभस्थानीयेन समिद्धेनाग्निना योजयति निष्टपनच्छलेन। ततश्च एकारणियोनिनिषिक्तवद्ववतीर्णे निर्मन्थनेन प्रजनिष्यत इति स एवाग्निः उत्पन्नो भवतीत्ययं स उपाय इति उत्तरं ब्रह्मवादिभ्यः । अत्र निदर्शनमाह—यथेति । वाशिता उपसर्या सा हि शब्दयन्ती गौर्गर्भग्रहणकाले पुंस्कामा गौर्वाशिता सा ऋषभाय यथा न्याविच्छायति नियमेनागच्छति । यद्वा—नियतमात्मानमृषभाय गमयति निभृतं वा आत्मानमर्पयति । विच्छ गतौ, 'गुपूधूप' इत्यायप्रत्ययः 'यद्वृत्तान्नित्यम्' इत्याख्यातस्य निघाताभावे धातोरन्तोदात्तत्वम् । तादृक्तत् अग्नौ निष्टपनमरण्योः। तद्भस्म अपोदूह्य अपनीयाग्निं मन्थति । सैषा सैव साऽग्नेस्सन्ततिः । तदेव निहितं रेत एवमेषोऽग्निर्जायते। तं प्रथमं मथित्वा प्राञ्चं उद्धरति आहवनीयमुद्धरति । यद्वा—जघनेन गार्हपत्यं मथित्वा प्राञ्चमुद्धरति गार्हपत्ये एवंक्रियमाणे

मेव तद्रेतो हितं प्रजनयति । [12]अनाहितस्तस्याग्नि-
रित्याहुः । यस्समिधोऽनाधायाग्निमाधत्त इति ।
तास्संवथ्सरे पुरस्तादादध्यात् । संवथ्सरादेवैनम-
वरुध्याधत्ते । यदि संवथ्सरेऽनादध्यात् । द्वादश्यां
पुरस्तादादध्यात् । संवथ्सरप्रतिमा वै द्वादश रा-
त्रयः । संवथ्सरमेवास्याहिता भवन्ति । यदि द्वा-
दश्यां नादध्यात् । त्र्यहे पुरस्तादादध्यात् । आहि-
ता एवास्य भवन्ति ॥ ७४ ॥

द्वितीयमपचच्चतुर्थमपचददिती रेतोऽधत्त संमिता
घृतवतीभिरादधाति राजन्यस्त्वस्य छन्दसः प्र-
त्ययनस्त्वायैयाग्निरृच्छति मन्थति रात्रयश्च-
त्वारि च ॥ १ ॥

---

संवत्सरं गर्भनिहितं रेतो जनयति प्रागुद्धरणस्य जन्मस्थानीयत्वात् ॥

[12]अनाहित इत्याद्यास्तमिदाधानविकल्पाः । संवत्सराधानगर्भ-तुल्यमग्निं संवत्सरात् परिगृह्य आधत्ते उत्पादयति । अथ यदि कुतश्चित्कारणात् संवत्सरे आधातुं न शक्नुयात् द्वादश्यां पुरस्तादादध्यात् संवत्सरेण तुल्या द्वादशरात्रय इति । संवत्सरं सर्वमस्याग्नय आहिता भवन्ति । अथ यदि द्वादश्यामपि आधातुं नाशक्नोत् स खल्वेतं त्र्यहे पुरस्तादादध्यात् । एवमपि आहिता एव अस्य अग्नयो भवन्ति आहिता भवन्त्येव ॥

इति नवमोऽनुवाकः.

[1]प्रजापतिः प्रजा असृजत । स रिरिचानोऽमन्यत । स तपोऽतप्यत । स आत्मन्वीर्यमपश्यत् । तदवर्धत । तदस्मात्सहसोर्ध्वमसृज्यत । सा विराडभवत् । तां देवासुरा व्यगृह्णत । सोऽब्रवीत्प्रजापतिः । मम वा एषा ॥७५॥ दोहा एव युष्माकमिति । [2]सा ततः प्राच्युदक्रामत् । तत्प्रजापतिः

[1]प्रजापतिरित्यादि ॥ प्रजास्सृष्टवान् प्रजापतिः रिरिचानः रिक्तो भवन् वीर्येण हीनमात्मानं अमन्यत । लिटः कानच् । अथ तथा मन्यमानः स प्रजापतिः वीर्यार्थं तपोऽतप्यत । अथ तपस्तप्यमानः प्रजापतिरात्मनि वीर्यं पुनरुपचितं सृष्टिसामर्थ्यं अपश्यत् । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'नङ्सम्बुद्ध्योः' इति नलोपप्रतिषेधः । अथ तत् वीर्यं अस्मात् प्रजापतेः सहसा प्रसह्य ऊर्ध्वमसृज्यत निरगच्छत् । 'सृज विसर्गे' दैवादिकः अनुदात्तेत् । सा विराट् या अन्नस्तनूः अभवत् । अथ देवासुरास्तां व्यगृह्णत विविधं गृहीतवन्तः अस्माकमियमस्माकमियमिति । अथ तैर्विगृह्यमाणां तां पश्यन् प्रजापतिरब्रवीत् ममैषा विराट् युष्माकं अस्या ये दोहाः विकारभूता अन्नयः त एव युष्माकं न त्वेषेति ॥

[2]अथ तां दर्शयति—सा तत इत्यादि ॥ सा विराट् प्राची भूत्वा ऊर्ध्वं पदविक्षेपं कृतवती । अथ तां प्रजापतिः

पर्यगृह्णात् । अथर्वं पितुं मे गोपायेति । सा द्वितीय-मुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । नर्यं प्रजां मे गोपायेति । सा तृतीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । शंस्य पशून्मे गोपायेति ॥ ७६ ॥ सा चतुर्थमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । सप्रथ सभां मे गोपायेति । सा पञ्चममुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अहे बुध्निय मन्त्रं मे गोपायेति । अग्नीन् वाव सा तान्व्यक्रमत । तान्प्रजापतिः पर्यगृह्णात् । अथो पङ्क्तिमेव । पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा ॥ ७७ ॥ तामात्मनोऽधि नि-

'अथर्वपितुं मे गोपाय' इति पर्यगृह्णात् । 'नर्य प्रजां मे' इति द्वितीयम् । 'शंस्य पशून्मे गोपाय' इति तृतीयम् । 'सप्रथ सभां मे' इति चतुर्थम् । 'अहे बुध्निय' इति पञ्चमम् । सा खलु विराट् तान् इमान् अग्नीन् व्यक्रमत अन्वाहार्यपचनान्तान् पञ्चाग्नीन् विविधेन पदविहारेण उत्पादितवती । 'पञ्चाधाऽग्नीन्व्यक्रमत्'* इति मन्त्रपदम् । 'वेः पादविहरणे' इत्यात्मनेपदम् । मन्त्रे तु व्यत्ययेन न प्रवर्तते । तान् अग्नीन् प्रजापतिः परिगृह्यात्मनि स्थापितवान् । अथो अपिच खलु पङ्क्तिमेव छन्दः पञ्चत्वान्वयात् आत्मनि स्थापितवान् । यस्मादेवं तस्मात् एषा खलु प्रजापतिपरिगृहीता पङ्क्तिः अग्निपञ्चकलक्षणा

* ब्रा. १-२-१.

मिमीते । [3]यद॒ग्निरा॑धी॒यते॑ । तस्मा॑दे॒ताव॑न्तो॒ऽग्नय॒ आधी॑यन्ते । पाङ्क्तं॑ वा इ॒दꣳ सर्व॑म् । पाङ्क्ते॑नै॒व पाङ्क्तꣳ स्पृणोति । [4]अथ॑र्व पि॒तुं मे॑ गोपा॒येत्या॑ह । अन्न॑मे॒वै॒तेन॑ स्पृणोति । नर्य॑ प्र॒जां मे॑ गोपा॒येत्या॑ह । प्र॒जा॒मे॒वै॒तेन॑ स्पृणोति । शꣳस्य॑ प॒शून्मे॑ गोपा॒येत्या॑ह ॥ ७८ ॥ प॒शूने॒वै॒तेन॑ स्पृणोति । सप्र॑थ स॒भां मे॑ गोपा॒येत्या॑ह । स॒भामे॒वै॒तेनेन्द्रि॒यꣳ स्पृणोति ।

---

ब्राह्मणे ब्रह्मणः पुत्रेऽपि प्रविष्टा पितृद्वारेण उत्पत्तेः प्रभृति स्थिता । तां इदानीमथमाधानेन अधिनिर्मिमीते बहिरुत्पादयति ॥

[3]यदिति ॥ अग्निरिति जातावेकवचनम् । यस्मादेवं प्रजापतिः पञ्चैव पर्यगृह्णात्तस्मात् एतावन्तः एव पञ्चैव अग्नय आधीयन्ते न न्यूनाः नाधिकाः । इदं विश्वं पाङ्क्तं पञ्चकादागतम् । 'पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः'* इत्यनुवाकेन आधिभौतिकाध्यात्मिकाधिदैविकपाङ्क्तप्रभवत्वं विश्वस्य द्रष्टव्यम् । तस्मात् पाङ्क्तेन अग्निपञ्चकप्रभवेनाधानेन पाङ्क्तं अधिभूतादिपञ्चकप्रभवं विश्वं स्पृणोति प्रीणयति रक्षति । स्पृ प्रीतौ प्राप्तिकर्मा वा—पाङ्क्तं विश्वं प्राप्नोति विधेयीकरोति ॥

[4]इदानीं 'अथर्वपितुं मे गोपाय'† इत्यादिभिर्मन्त्रैरुपस्थानस्याम्नादिसाधनत्वेन स्तुतिः क्रियते । अथ 'प्रवसथमेष्यन्नेवमुपाति-

---

*उ. १-७. †ब्रा. १-१-१०².

अहे बुध्निय मन्त्रं मे गोपायेत्याह। मन्त्रमेवैतेन श्रियꣳ स्पृणोति। [5]यदन्वाहार्यपचनेऽन्वाहार्यं पचन्ति। तेन सोऽस्याभीष्टः प्रीतः। यद्गार्हपत्य आज्यमधिश्रयन्ति संपत्नीर्याजयन्ति। तेन सोऽस्याभीष्टः प्रीतः। यदाहवनीये जुह्वति ॥ ७१ ॥ तेन सोऽस्याभीष्टः प्रीतः। यत्सभायां विजयन्ते। तेन सोऽस्याभीष्टः प्रीतः। यदावसथेऽन्नꣳ हरन्ति। तेन सोऽस्याभीष्टः

---

ष्ठेत'* इत्यतिदेशं वक्ष्यति। अतोऽवगम्यते एभिरत्रोपस्थानं कर्तव्यमिति। अन्नमेवेति। पितुशब्दस्यार्थमाचष्टे। इन्द्रियमिति। वीर्यवत्तया हि सभामाधितिष्ठति। श्रियामिति। श्रिया हि मन्त्री भवति॥

[5]इदानीमिवमाहितानां अग्नीनां सर्वात्मनोपकारकत्वं प्रतिपादयति—यदित्यादि॥ अन्वाहार्यः ओदनः पच्यते अस्मिन्निति अन्वाहार्यपचनो दक्षिणाग्निः। तत्र यदन्वाहार्यं पचन्ति तेन अन्वाहार्यपाकेन सः अग्निः अस्य यजमानस्य एवंनाम अभीष्टः सुहृद्भूतः यदाराध्यः पाकाधिकारः क्रियते। किञ्च—प्रीत एव भवति यजमानविनयैः। प्रदर्शनं चैतत्, फलीकरणहोमादीनां कर्मणाम्। एवं गार्हपत्य आज्याधिश्रयणं हविश्श्रपणादीनां प्रदर्शनम्। यदाहवनीये जुह्वति। इन्द्रादिभ्योपि। अत्रापि होमग्रहणं प्रदर्शनमिध्मसन्नहनादीनां प्रक्षेपस्य। विजयन्ते क्रीडन्ति अक्षैर्दीव्यन्ति। आवसथेऽन्नं हरन्ति भुञ्जते। तथेत्यादि। यथोक्तं

---

*ब्रा १-१-१०.

प्रीतः । तथाऽस्य सर्वे प्रीता अभीष्टा आधीयन्ते । [6]प्रवसथमेष्यन्नेवमुपतिष्ठेतैकमेकम् । यथा ब्राह्मणाय गृहेवासिने परिदाय गृहानेति । तादृगेव तत् । [7]पुनरागत्योपतिष्ठते । साभागेयमेवैषां तत् ।

अन्वाहार्यादिकर्मेषु क्रियत इति तथा यजमानस्य सर्वेऽप्यग्नय इष्टाः प्रीता आधीयन्ते आधानेन तादृशाः क्रियन्ते ॥

[6]अथ प्रवसथं प्रवासं उपैष्यन् एवं 'अथर्वपितुं मे'* इत्यादिभिः एकैकं अग्निं उपतिष्ठेत । 'क्रियासमभिहारे सर्वनाम्नो द्वे भवतः' इति द्वित्वम् । 'समासवच्च बहुळम्' यदा न समासवत्तदा पूर्वपदस्य अम्भावः । यथा गृहेवासिने ब्राह्मणाय विलक्षणाय गृहान् परिदाय एति गच्छति एतान् रक्षेति निक्षिप्य प्रतिष्ठते । तादृगेव तत् उपस्थानम् । गृहे वसतीति गृहेवासी । 'सुप्यजातौ' इति णिनिः, 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक् ॥

[7]अथ प्रवासादागत्य पुनरनेनैव उपतिष्ठेत । तदेषामग्नीनां साभागेयं ऐश्वर्यातिशयवत्तया आविष्करणम् । भगः श्रीः, ऐश्वर्यादिषट्कं वा । तत्सहितः सभगः तस्य भावः साभागेयं भावे छान्दसो ढक् 'हृद्भगसिन्ध्वन्ते' इति पूर्वोत्तरपदयोर्वृद्धिः । यद्वा— सभागः पूज्यभागार्हः, तस्य भावः साभागेयम् । तस्याविष्करणं तदुपस्थानमिति । समानभागत्वं समानयोगक्षेमत्वं साभागेयमिति केचित् ॥

*आ. १-२-१०३.

[8]सा ततं ऊर्ध्वारोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणित्वम् । रोहिण्यामग्निमादधीत । स्व एवैनं योनौ प्रतिष्ठितमाधत्ते । ऋध्नोत्येनेन ॥८०॥

एषा पशून्मे गोपायेति प्रविष्टा पशून्मे गोपायेत्याह जुहोति तिष्ठते सप्त च ॥१०॥

ब्रह्म संधत्तं कृत्तिकासूद्धन्ति द्वादशसु प्रजापतिर्वाचो देवासुरास्तदग्निर्नोद्धर्मेशिशिरं इमे वै शमीगर्भात्प्रजापतिस्स रिरिचानस्सतपस्स आत्मन्वीर्यं दश ॥ १० ॥

ब्रह्म संधत्तं तौ दिव्यावथो शंत्वाय प्राच्येषां यदुपर्युपरि यथ्सद्यस्सोऽश्वोऽवारो भूत्वा जगतीभिरशीतिः ॥ ८० ॥

हरिः ओम् ॥ तथ्सत् ॥

[8]अथ सा विराट् तत ऊर्ध्वारोहत् । ततः प्रभृति सा रोहिणी अविपन्ना । तस्माद्रोहणाद्रोहिणी विराडग्नेर्योनिः तत्राधानं प्रतिष्ठित्यै भवति । ततः एनेन रोहिण्यां क्रियमाणेनाधानेन अयं ऋध्नोति समृद्धो रोहवान् भवति । एनादेशः सर्वानुदात्तः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये
ज्ञानयज्ञाख्ये प्रथमेऽष्टके प्रथमप्रपाठके
दशमोऽनुवाकः.
प्रथमप्रपाठकस्समाप्तः.



अथ द्वितीयप्रपाठकः

हरिः ओम् ॥ [1]उद्धन्यमानमस्या अमेध्यम् । अप पाप्मानं यजमानस्य हन्तु । शिवा नस्सन्तु प्रदिशश्चतस्रः । शं नो माता पृथिवी तोकसाता । [2]शं नो देवीरभिष्टये । आपो भवन्तु पीतये । शं यो-

[1]अथाधानमन्त्राः—आग्नेयं काण्डम् । तत्र प्राचीनप्रवणं देवयजनमुद्धन्ति—उद्धन्यमानमिति त्रिष्टुभा ॥ अस्याः पृथिव्याः अमेध्यं अमेध्यार्हं रूपं उद्धन्यमानं उत्कृष्य नाश्यमानं यजमानस्य पाप्मानमपहन्तु । अनेनोद्धननेन यजमानस्यैव पाप्माऽपहन्यत इति । 'ययतोश्चातदर्थे' इत्यमेध्यशब्दस्योत्तरपदान्तोदात्तत्वम् । नः अस्माकं प्रदिशश्चतस्रः प्रधानदिशः शिवास्सन्तु सामर्थ्याद्विदिशश्च । अथ एवं मेध्या शिवा च भूत्वा पृथिवी नः अस्माकं शं सुखहेतुर्भवतु । माता मातृस्थानीया सर्वेषां तोकसाता तोकैरपत्यभूतैः साता संभक्ता । 'जनसनखनां सञ्झलोः' इत्यात्वम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतित्वम् ॥

[2]अद्भिरवोक्षति—शंनो देवीरिति गायत्र्या ॥ देवीः देव्यः 'वा छन्दसि' इति पूर्णसवर्णदीर्घत्वम् । नः अस्माकं आपः शं सुखहेतवो भवन्तु । अभिष्टये आभिमुख्येन देवान् यष्टुम् । यजेरिच्छतेर्वा क्तिन् । अभीष्टफलसिद्धये । पररूपं कतन्तवत् । किञ्च—पीतये पानाय च भवन्तु । किञ्च—उपजीव्याश्च भ-

रभि स्रवन्तु नः । [3]वैश्वानरस्य रूपम् । पृथिव्यां परिस्रसा । स्योनमाविशन्तु नः ॥ १ ॥ [4]यदिदं दिवो यददः पृथिव्याः । संजज्ञाने रोदसी संबभूवतुः ।

वन्तु लोकस्य । किञ्च—शं आगतानां रोगभयादीनां शमनम्। शाम्यतेः क्विप् । योः यावयितृता पृथक्करणमनागतानां तेषामुत्पत्तिनिरोधः । यौतेरसुनि गुणे अडभावश्छान्दसः । तदुभयमापः नः अस्माकं अभिस्रवन्तु आभिमुख्येन प्रसृतमुत्पादयन्तु ॥

[3]अत्र सप्तपार्थिवान् सम्भारान् आहरत्येवं वानस्पत्यान् । तत्र सिकताः—वैश्वानरस्येति गायत्र्या पादनिवृता ॥ वैश्वानरस्य विश्वेषां नराणां स्वामित्वेन सम्बन्धिनोऽग्नेः रूपं यत्तत् पृथिव्यां सर्वस्यां परिस्रसा परितस्स्रस्तं व्याप्तं सिकतारूपेण परिणतम् । ब्राह्मणं च—‘एतद्वा अग्नेर्वैश्वानरस्य रूपम्’* इति । स्रंसेः क्विप् अनुनासिकलोपे ‘सुपां सुलुक्’ इति प्रथमैकवचनस्य ‘स्वमोर्नपुंसकात्’ इति लुगपवाद आकारः । भावे वा क्विप्, इत्थंभूतलक्षणे तृतीया, नित्यसमासत्वाद्विभक्त्युदात्तत्वाभावः । तास्ताद्दश्यः संभ्रियमाणाः सिकताः स्योनं सुखहेतवो भूत्वा नः अस्मान् आविशन्तु प्राप्नुवन्तु ॥

[4]अथोषान्—यदिदमिति त्रिष्टुभा ॥ यत् यस्मात् इदं भूमिष्ठमूषरूपं दिवो द्युलोकस्य संबन्धि पृथिव्यां आगतमभूत् ।

*सं. ५-२-३. ब्रा. १-१-३.

ऊषान्कृष्णमवतु कृष्णमूषाः । इहोभयोर्यज्ञियमा गमिष्ठाः । [5]ऊतीः कुर्वाणो यत्पृथिवीमचरः । गुहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह संभरन्तः ।

यच्चादः कृष्णं चन्द्रमासि स्थितं पृथिव्याः सम्बन्धि ऊर्ध्वं गतमभूत् । तस्य कारणमाह—रोदसी द्यावापृथिव्यौ पूर्वं विश्लेषकाले संजज्ञाने सहजानाने समयं कुर्वाणे । 'अकर्मकाच्च' इत्यात्मनेपदम् । संबभूवतुः सहभावं गते यज्ञीयेन रूपेण अविश्लिष्टे एवाभवताम् । ब्राह्मणं च भवति—'द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम् । अस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियम्'* इत्यादि च । एवं महाप्रभावान् ऊषान् ततोपि महाप्रभावं कृष्णमवतु रक्षतु । कृष्णं च तदूषाः अवन्तु । कस्मादेवमुच्यत इति चेत् आह—इह अस्मिन् कर्मणि उभयोः द्यावापृथिव्योः यद्यज्ञियं यज्ञार्हरूपं तेऽपि ऊषाः सकृष्णाः आगमिष्ठाः आगन्तृतमाः तस्मात्ताभ्यामेव परस्परस्य तद्रक्ष्यमिति । आगन्तृशब्दात् 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति तलोपः । ऊषमन्त्रत्वात्तत्प्राधान्येन निर्दिष्टान् तान्वः सम्भरामीति ॥

[5]अथाखुकरीषं—ऊतीः कुर्वाण इति त्रिष्टुभा ॥ हे अग्ने! यत् यदा ऊतीः मार्गान् कुर्वाणः पृथिवीमचरः अनुप्रविष्टवान् कथं भूत्वा गुहाकारं प्रच्छन्नरूपं आखुरूपं प्रतीत्य

*सं. ५-२-३. ब्रा. १-१-३.

शतं जीवेम शरदस्सवीराः । [6]ऊर्जं पृथिव्या रसं-माभरन्तः । शतं जीवेम शरदः पुरूचीः ॥ २ ॥ वम्रीभिरनुवित्तं गुहासु । श्रोत्रं त उर्व्यबधिरा भ-

प्रतिप्राप्य अचरः । यद्वा—आखुरूपं प्रतीत्य यदा ऊतीः कुर्वाण इति आखूत्करान् कुर्वाणो गुहाकारं नीलाकारां पृथिवीमचरः । सर्वत्र छान्दसमुपोत्तमस्योदात्तत्वम् । लिङ्गव्यत्ययः । तत् तदानीं ते तव तत्र न्यक्तं निलीनं उत्करात्मना परिणतं बलं तेजो वा इह अस्मिन् कर्मणि सम्भरन्तो वयं शतं शरदो जीवेम । सवीराः पुत्रपौत्रादिसहिताः शरदो रोगबहुळत्वात्तस्यां जीवनमाशास्ते । संवत्सरपर्यायो वा शरच्छब्दः । यद्वा—शरदां शतं शतेन वर्षैर्भवति लक्षणया शतं वर्षाणि जीवेमेति प्रार्थितं भवति ॥

[6]अथ वल्मीकवपां—ऊर्जमिति त्रिष्टुभा ॥ पृथिव्याः ऊर्जं अन्नं स्वादुभूतं रसं जलं च मृदूदकपरिणामं वल्मीकवपामाहरन्तो वयं शतं शरदो जीवेम पुरूचीः बह्वञ्चनाः बह्वाश्चर्यफलप्रापिणीः । अञ्चेर्डीपि नकाराकारयोर्लुप्तयोः 'चौ' इति पूर्वस्याचो दीर्घत्वम् । किञ्च—वम्रीभिस्त्रिभिः गुहासु वल्मीकेषु अनुवित्तं अनुक्रमेण लब्धम् । 'विदेर्वित्तं च विन्नं च' इति नत्वाभावः । ते श्रोत्रमिव स्थितां वल्मीकवपामाहरन्तो वयं अबधिरा भवामः । अनुपहतश्रोत्रेन्द्रियाः भूयास्म, हे उर्वि! पृथिवि! ॥

वाम॑ः । [7]प्र॒जाप॑तिसृष्टानां प्र॒जाना॑म् । क्षु॒धोप॑हत्यै सु॒वि॒तं नो॑ अस्तु । उ॒प॒प्रभि॒न्नमिष॒मूर्जं॑ प्र॒जाभ्य॑ः । सू॒दं गृ॒हेभ्यो॒ रस॒माभ॑रामि । [8]यस्य॑ रू॒पं बि॒भ्रदि॒माम॑विन्दत् । गुहा॒ प्रवि॑ष्टाꣳ सरि॒रस्य॒ मध्ये॑ । तस्ये॒दं विह॑तमा॒भर॑न्तः । अछ॑म्बट्कारम॒स्यां वि॑धेम ॥

[7]अथ सूदम्—प्रजापतिसृष्टानामिति त्रिष्टुभा ॥ प्रजापतिना सृष्टानां प्रजानां क्षुधोपहत्यै अपहननाय अस्तु इदं सुवितं सुष्ठु प्राप्तम् । यद्वा—शोभन उपायः । सुवितं भावे निष्ठा । तन्वादित्वादुवङ् । 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । किं पुनस्तदित्याह—इषं अन्नं ऊर्जं रसं च उपप्रभिन्नं एकीभूतं सूदात्मकं रसं सारम् । यद्वा—नातिभिन्नं नातिद्रुतं नातिखरं कर्दमत्वात् । प्रजाभ्यः प्रजानां श्रेयसे प्रजानां वा इषमूर्जं च । षष्ठ्यर्थे चतुर्थी । ईदृशं सूदं गृहेभ्यः गार्हपत्याद्यायतनार्थं आभरामि आहरामि । 'हृग्रहोः' इति भत्वम् ॥

[8]अथ वराहविहतम्—यस्य रूपमिति त्रिष्टुभा ॥ अत्र ब्राह्मणम्—'तां वराहो भूत्वा हरत्'* इति । तदिदमुच्यते— यस्य वराहस्य रूपं बिभ्रदिमां पृथिवीं अविन्दत् अलभत प्रजापतिः सरिरस्य सलिलस्य महाप्रळयोदकस्य मध्ये । कपिलकादित्वाल्लत्वविकल्पः । गुहा गुहां गुह्यस्थानं पाताळं प्रविष्टाम् । 'सुपां सुलुक्' इत्याकारः । तस्य वराहस्य विहतं

* सं. ७-१-५.

३ ॥ [9]यत्पर्यपश्यथ्सरिरस्य मध्ये । उर्वीमपश्यञ्जगतः प्रतिष्ठाम् । तत्पुष्करस्यायतनाद्धि जातम् । पर्णं पृथिव्याः प्रथनꣳ हरामि । [10]याभिरदृꣳहञ्जगतः प्रतिष्ठाम् । उर्वीमिमां विश्वजनस्य भर्त्रीम् ।

---

पोत्रोत्खातं मृद्द्रव्यं आभरन्तो वयं अछम्बट्कारं अविनाशमस्यां पृथिव्यां विधेम । यद्वा—अस्यामिति षष्ठ्यर्थे सप्तमी । अस्याः पृथिव्याः किंचिदपि अपरिहाय सर्वां पृथिवीमविनष्टां परिगृह्य कर्माणि कुर्मः । णमुलन्तेन नञ्समासः ॥

[9]अथ पुष्करपर्णम्—यत्पपर्यपश्यादिति त्रिष्टुभा ॥ यत् पुष्करपर्णं प्रजापतिः पृथिवीमन्विच्छन् सरिरस्य सलिलस्य मध्ये पर्यपश्यत् । यद्वा—यत् यदा प्रजापतिः सरिरस्य मध्ये पर्यपश्यत् परितः इतस्ततः पृथिवीप्रतिलम्भायापश्यत् । तदानीं उर्वीं पृथिवीं यदनुसारेण अपश्यत् । ब्राह्मणं च भवति—'सोपश्यत् पुष्करवर्णं तिष्ठत् । सोमन्यत । अस्ति वैतत् । यस्मिन्निदमधितिष्ठति'* इति तत् पुष्करस्य पर्णं आयतनात् सलिलस्य स्थानात् पाताळात् जातं पृथिव्याः प्रथनं प्रथनस्थानं हरामि । ब्राह्मणं च—'तत्पुष्करपर्णेऽप्रथयत्'* इति ॥

[10]अथ शर्कराः—याभिरिति त्रिपदया विराजा ॥ जगतो जङ्गमस्य स्थावरस्य च प्रतिष्ठां उर्वीं पृथ्वीं विश्वजनस्य भर्त्रीं

---

*ब्रा. १-१-३.

ता नंश्शिवाश्शर्कंरास्सन्तु सर्वाः । [11]अग्ने रेतंश्चन्द्रꣳ हिरण्यम् । अद्भ्यस्संभूतममृतं प्रजासु । तथ्संभरंन्नुत्तरतो निधार्य ॥ ४ ॥ अति प्रयच्छं दुरिंतिं तरेयम् । [12]अश्वो रूपं कृत्वा यदंश्वत्थेऽतिष्ठः । सं-

धात्रीं इमां प्रजापतिर्धाता अदृंहत् अविचलां स्थापितवान् । ब्राह्मणं च—'तां शर्कराभिरदृंहत्'* इति । ताश्शर्कराः नः अस्माकं शिवाः सुखहेतवः सन्तु । सर्वा अपि याश्चायतनात् गृहीता याश्चान्या याभिश्च पूर्वं पृथिवीमदृंहत् ॥

[11]अथ हिरण्यशकलम्—अग्ने रेत इति त्रिष्टुभा ॥ अत्र ब्राह्मणम्—'आपो वरुणस्य पत्नय आसन् । ता अग्निरभ्यध्यायत् । तास्समभवत् । तस्य रेतः परापतत् । तद्धिरण्यमभवत्'* इति । तदुच्यते—अग्ने रेतो हिरण्यं चन्द्रं आह्लादनं अद्भ्यस्संभूतं 'आपो वरुणस्य पत्नयः'* इति ब्राह्मणप्रसिद्ध्यैवमुक्तम् । अमृतं अमृतत्वहेतुभूतं प्रजासु तत् सम्भरणम् । प्रजानां हितार्थं तत्सम्भरणं कुर्वन् तत् उत्तरतो निधाय उत्तरत उपास्य । ब्राह्मणं च—'अति प्रयच्छति । आर्तिमेवाति प्रयच्छति'* इति पापतरणार्थं भवति ॥

[12]अथाश्वत्थम्—अश्वो रूपमिति त्रिष्टुभा ॥ यत् यद त्वं अश्वो भूत्वा रूपं च तदीयं कृत्वा अश्वत्थे अतिष्ठः देवे-

* ब्रा. १-१-३.

वृत्सरं देवेभ्यो निलायं । तत्ते न्यक्तमिह संभरं-
न्तः । शतं जीवेम शरदस्सवीराः । [13]ऊर्जः पृथि-
व्या अध्युत्थितोसि । वनस्पते शतवल्शो विरोह ।
त्वया वयमिषमूर्जं मदन्तः । रायस्पोषेण समि-
षा मदेम । [14]गायत्रिया ह्रियमाणस्य यत्ते ॥ ५ ॥ प-

भ्यो निलाय निर्गम्य संवत्सरं अश्वत्थे स्थितवान् । तत्ते न्यक्तमित्यादि । गतम् । ब्राह्मणम्—'अग्निर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा'* । इत्यादि । निलायेति निपूर्वादयतेर्ल्यपि छान्दसो वर्णविकारः । 'उपसर्गस्यायतौ' इति लत्वम् । यद्वा—निरर्थे निशब्दः निपूर्वाल्लीयतेर्ल्यपि 'विभाषा लीयतेः' इत्यात्वम् ॥

[13]अथोदुम्बरम्—ऊर्जः पृथिव्या इति त्रिष्टुभा ॥ हे वनस्पते! ऊर्जः अन्नमर्थोद्धेतोः रसाद्वा । पृथिव्या अधि उत्थितोसि उपरि प्ररूढोसि । स त्वमस्माभिश्छिन्नोपि शतवल्शः बहुप्ररोहो विरोह । वयं च त्वया हेतुना इषमूर्जं च इमा अन्नेन वा मदन्तः माद्यन्तः । यद्वा—मदन्तः कर्मद्वारेण भजमानाः । मन्दतेर्गतिकर्मणः व्यत्ययेन नुमभावः परस्मैपदं च । रायो धनस्य पुष्ट्या इषा अन्नेन च सम्मदेम सम्यक् मोदेमहि ॥

[14]अथ पर्णम्—गायत्र्येति द्वाभ्यां त्रिष्टुब्भ्याम् ॥ ब्राह्मणं च भवति—'तं गायत्र्याहरत्'* इत्यादि । कथमस्य पर्णत्वमित्या

*ब्रा. १-१-३.

र्णमपतत्तृतीयस्यै द्विवोऽधि । सोऽयं पर्णस्सोमपर्णा-
द्धि जातः । ततो हरामि सोमपीथस्यावरुद्धयै ।
[15] देवानां ब्रह्मवादं वदतां यत् । उपाशृणोस्सुश्रवा
वै श्रुतोसि । ततो मामाविशतु ब्रह्मवर्चसम् । तथ्सं-
भरꣳस्तदवरुन्धीय साक्षात् । [16] यया ते सृष्टस्याग्नेः ।
हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय ॥ ६ ॥

ह—यत् यस्मात् अयं तव पर्णाज्जातः तस्मात् पर्णस्तव प-रिणाम इति यावत् तस्मात् पर्णं पलाशं आहरामि सोमपीथस्य सोमपानस्य लाभार्थम् ॥

[15]अथ द्वितीया—देवानामिति ॥ अत्र ब्राह्मणम्—'देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत्'* इत्यादि । तदिदानीं आह—देवानां ब्रह्मवादं वदतां यत् यस्मात्त्वं उपाशृणोः समीपे स्थितः श्रुतवानसि तस्माद्धेतोस्त्वं सुश्रवा नाम श्रुतोसि ख्यातोसि तस्मात् ब्रह्मवर्चसं मामाविशतु इति । अनेनाभिप्रायेण तत् पर्णाख्यं साधनं सम्भरन् तत् ब्रह्मवर्चसं साक्षात् अवरुन्धीय अव्यवधानेन वर्धयेय ॥

[16]अथ शमीम्—यया त इत्यनुष्टुभा ॥ यया शम्या ते तव सृष्टस्याग्नेः सृष्ट्यनन्तरे भासमानस्य हेतिं दाहात्मिकां हिंसां प्रजापतिरशमयत् । तामिमां शमीं अप्रदाहाय तव शान्त्यै

* ब्रा. १-१-३.

शमी᳚ शान्त्यै᳚ हराम्यहम्। [17]यत्ते᳚ सृष्टस्य॑ यतः। विक॑ङ्कतं᳚ भा आर्छ᳚ज्जातवेदः। तया᳚ भासा सम्मितः। उरुं नो᳚ लोकमनु प्रभा᳚हि। [18]यत्ते᳚ तान्तस्य॑ हृदयमा-च्छिन्दञ्जातवेदः। मरुतोऽद्भिस्तमयित्वा। एतत्ते तदशनेस्सं भरामि। सात्मा अग्ने सहृदयो भवेह।

---

च हरामि। यद्वा—ते इति तृतीयास्थाने षष्ठी। यया त्वया प्रजापतिरग्नेः सृष्टस्य दाहमशमयत् तामिमां त्वां शमीम-प्रदाहाय प्रजानां शान्त्यै सुखाय च हरामीति। ब्राह्मणं च-'सोऽबिभेत्प्रमा धक्ष्यतीति तं शम्याशमयत्'* इति॥

[17]अथ विकङ्कतम्—यत्ते सृष्टस्येति त्रिष्टुभा। सतो बृहत्या वा॥ हे जातवेदः! तव सृष्टस्य यतः प्रजापतिसकाशात् ग-च्छतः यत् या भाः दीप्तिः। लिङ्गव्यत्ययश्छान्दसः वि-कङ्कतं वृक्षं आर्छत् आगच्छत् तया भासा सम्मितः समन्ता-द्युक्तः नः अस्माकं उरुं लोकं स्थानं अनु प्रभाहि अनुक्रमेण प्रकाशय॥

[18]अथाशनिहतस्य वृक्षस्य—यत्त इति त्रिष्टुभा॥ प्रथमः पादश्च-तुरक्षराभिक्रान्तः। जातवेद इत्यस्य सर्वानुदात्तत्वात् द्वितीयपा-दादित्वं नेष्यते। हे जातवेदः! तव तान्तस्य अभिपीडितस्य यद्धृदयं मरुत आच्छिन्दन्, तदेवाह। अद्भिस्तमयित्वा अ-

---

*ब्रा. १-१-३.

[19]चित्रियादश्वत्थात्संभृता बृहत्यः ॥ ७ ॥ शरीरमभि सꣳस्कृतास्स्थ । प्रजापतिना यज्ञमुखेन संमिताः । तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै । [20]अश्वत्थाद्धव्यवाहा-

द्विश्शमयित्वा यत एवमकुर्वन् मरुतः एतत्ते हृदयं अशनेः रूपेण स्थितम् । कर्मणि वा षष्ठी । तत् अशन्यात्मना परिणतं तदीयं सम्भरामि । अशनिहतवृक्षसम्भरणे ब्राह्मणं च—'तस्य तान्तस्य हृदयमाच्छिन्दन् । साऽशनिरभवत्'* इति । तस्माद्वे अग्ने! इह कर्मणि सात्मा सहृदयः च भव ॥

[19]चित्रियस्य अश्वत्थस्य तिस्रस्समिधः आद्यास्सपलाशाः प्रादेशमात्र्यः त्रिभागवत्यो विवर्तयति—चित्रियादिति त्रिष्टुभा ॥ प्रामादिचिह्नभूतः प्रसिद्धोऽश्वत्थश्चित्रियः । तस्मात् संभृताः बृहत्यः पूजिताः शरीरं अभि लक्षीकृत्य संस्कृताः परिष्कृताः स्थ संस्कृतशरीरा इत्यर्थः । प्रजापतिना यज्ञमुखेन यज्ञात्मना प्रजापतेः मुखप्रदेशत्वेन प्रशस्ताः 'सर्वं वा मुखमुच्यते' इति यज्ञ एव यज्ञमुखमित्युच्यते । एताः तिस्रः समिधः प्रजात्यै प्रजननाय भवन्ति प्रजानाम् । कथमित्याह—त्रिवृद्भिः अन्यूनातिरिक्ताभिः अग्निभिः मिथुनीभूताः प्रजात्यै भवन्ति प्रजानामिति ॥

[20]शमीगर्भस्य अश्वत्थस्यारणी अभिमन्त्रयते—अश्वत्थादिति प्रस्तारपङ्क्त्या ॥ अश्वत्थात् अश्वत्थस्थितात् हव्यवाहात् अग्नेः । 'सोश्वत्थे संवत्सरमतिष्ठत्'* इति ब्राह्मणम् । तस्मात् जातां

*ब्रा. १-१-३.

द्धिं जा॒ताम् । अ॒ग्नेस्त॒नूं य॒ज्ञिया॒ꣳ सं भ॑रामि । शा॒न्तयो॑नि॒ꣳ शमीग॒र्भम् । अ॒ग्नये॑ प्र॒जन॑यि॒तवै॑ । [21]यो अ॑श्व॒त्थश्शमीग॒र्भः । आ॒रु॒रोह॒ त्वे सचा॑ । तं ते॑ ह-

अग्नेः तनूं शरीरं शरीरस्थानीयामरणिं अरण्यात्मिकां तनूं अग्नेराधारत्वात् । यद्वा—अश्वत्थाद्धव्यवाहाधारभूताज्जातामरण्यात्मिकां अग्नेस्तनूं यज्ञियां यज्ञार्हां सम्भरामि शान्तयोनिं शान्ता योनिरस्यामिति शान्तयोनिः कारणं अनभिव्यक्तकारणरूपां तनूं शमीगर्भं शम्या गर्भस्थानीयं शमीवेष्टिताश्वत्थप्रभवत्वात् । अग्नये प्रजनयितवे प्रजननार्थम् । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । 'तवै चान्तश्च' इति गतेः प्रत्ययादेश्च युगपदुदात्तत्वम् ॥

[21]तथाविधे अरणी आहरति—यो अश्वत्थ इत्यनुष्टुभा ॥ सामर्थ्यादिदमाहरणमभिमन्त्रणात् पूर्वं द्रष्टव्यम् । शमीगर्भो योऽश्वत्थः त्वे त्वयि आरुरोह कारणभूतेन त्वयिवर्तते । सचा समवायेन । सचतेः क्विप् 'सावेकाचः' इति व्यत्ययेन न प्रवर्तते । यद्वा—सचत इति सचा पचाद्यच् 'सुपां सुलुक्' इत्याकारः वृषादिर्द्रष्टव्यः निपातो वा आद्युदात्तः सहार्थे वर्तते योऽश्वत्थः शम्या सह त्वयि कारणत्वेनारुरोहेति, तं तादृशाश्वत्थविकारं अरण्यात्मकं ते त्वदर्थं आहरामि ब्रह्मणा अनेन मन्त्रेण । अनेनाधेयोऽग्निरुच्यते यज्ञियैः यज्ञार्हैः केतुभिः दीप्तिभिः सह तादृशदीप्तिहेतुत्वात्तादृशारण्याहरणस्य ॥

रामि ब्रह्मणा ॥ ८॥ यज्ञियैः केतुभिस्सह । [22]यं त्वा समभरञ्जातवेदः । यथा शरीरं भूतेषु न्यक्तम् । स संभृतस्सीद शिवः प्रजाभ्यः । उरुं नो लोकमनुनेषि विद्वान् । [23]प्रवेधसे कवये मेध्याय । वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्तु ।

---

[22]सम्भारानेकत्र निदधाति—यं त्वेति त्रिष्टुभा ॥ हे जातवेदः! यं त्वा समभरन् सम्भारैः सम्यक् भृतवन्तः ऋत्विगादयः सम्भारिणं त्वां कृतवन्तः भूतेषु भूतजातेषु यथा शरीरं न्यक्तं निक्षिप्तं भवति । भूतानां शरीरवत्त्वमिव तव सम्भारवत्त्वमिति भावः । सः त्वं तथा सम्भृतः सम्भृतसम्भारः प्रजाभ्यः प्रजार्थं शिवः सीद हेतुतया आस्व । नः अस्माकं च उरु विस्तीर्णं लोकं स्थानं अनुनेषि अनुक्रमेण प्रापय विद्वान् कर्तव्यज्ञः ॥

[23]दर्व्या ब्रह्मौदनं जुहोत्यभिमन्त्रयते वा—प्रवेधस इति उपरिष्टाज्ज्योतिषा त्रिष्टुभा ॥ प्रवेधसे विधात्रे प्रकृष्टानां श्रेयसां लोकानां वा धात्रे । प्रशब्दोऽसमस्त एव विशेषणं वा प्रारम्भमाचष्टे । मेध्याय अस्माभिस्संगन्तव्याय कवये विदुषे वृषभाय श्रेष्ठाय वृष्णे कामानां वर्षुकाय ब्रह्मणे वन्दारु वन्दनशीलं वचः प्रारम्भार्हं (इति शेषः) । तस्मात्तमेव वन्दामहे । तेषामस्माकं यतो भयं तत् सर्वमभयहेतुः अस्तु । यतो भयमन्येषां तन्नोऽस्माकं मा भूत् । ये पुनः हेड्याः क्रोधनाः देवा अपि अस्माकं भयहेतवः तान् अवयजे अपनयामि अपनीतक्रोधान् करोमि ।

अव॑ दे॒वान् य॑जे॒ हेड्या॑न् । [24]स॒मि॒धाऽग्निं दु॑वस्यत ॥ १
घृ॒तैर्बो॑धय॒ताति॑थिम् । आऽस्मि॑न् ह॒व्या जु॑होतन ।
[25]उप॑ त्वाऽग्ने ह॒विष्म॑तीः । घृ॒ताची॑र्यन्तु हर्यत । जु-

'कृत्यल्युटो बहुलम्' इति हेडतेः कर्तरि ण्यत् वृषादिर्द्रष्टव्यः। यद्वा—हेडने साधवो हेड्याः । 'यतोऽनावः' इत्याद्युदात्तत्वम्। यद्वा—अव रक्ष अस्मान् देवांश्च ईड्यानिहास्मिन्कर्मणि यज पूजय । 'ईडवन्दवृशंस' इत्याद्युदात्तत्वम् ॥

[24]चित्रियस्याश्वत्थस्य तिस्रस्समिध आदधाति—समिधाऽग्निं दुवस्यतेति तिसृभिर्गायत्रीभिः ब्राह्मणस्य ॥ तत्र प्रथमा—'अन्नपते'* इत्यत्र व्याख्याता । हे ऋत्विग्यजमानाः! समिधाऽग्निं दुवस्यत परिचरत । घृतैः, एनं बोधयत दीपयत अतिथिमिव पूजनीयम् । अस्मिन् हव्या हव्यानि आजुहोतन इति ॥

[25]अथ द्वितीया—उप त्वेति ॥ हे अग्ने! त्वां हविष्मतीः हविष्मत्यः ब्रह्मौदनसम्पृक्ताः घृताचीः घृताच्यः घृताञ्चनाः घृतसम्पृक्ताः । उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ईदृश्यः समिधः उपयन्तु उपगच्छन्तु । त्वं च ताः हर्यत हर्य प्रतिगृहाण । हर्य गतौ, वचनव्यत्ययः । यद्वा—हे हर्यत! भजनीय! । औणादिकोऽतच्प्रत्ययः । ता मम मदीयाः समिधो जुषस्व सेवस्व प्रीत्या वा स्वीकुरु ॥

*सं. ४-२-३.

षस्व समिधो मम।[26] तं त्वा समिद्भिरङ्गिरः। घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य। [27]समिध्यमानः प्रथमो नु धर्मः। समक्तुभिरज्यते विश्ववारः ॥१० शोचिष्कैशो घृतनिर्णिकपावकः। सुयज्ञो अग्निर्य-

[26]अथ तृतीया—तं त्वेति ॥ हे अङ्गिरः! अङ्गनादिगुणयुक्त! हे बृहच्छोचाः! बृहद्दीप्ते! । छान्दसं दीर्घत्वम् । यद्वा—भवेत्य-ध्याह्रियते । हे यविष्ठ्य! युवतम! हविषां वा मिश्रयितृतम! । स्वार्थिक इष्ठन्नन्ताद्यत् । यविष्ठेषु वा भव! । दिगादिर्द्रष्टव्यः । तं तादृशं त्वां समिद्भिर्घृतेन च वर्धयामसि वर्धयामः । 'इद-न्तो मसि' ॥

[27]राजन्यस्यादधाति—समिध्यमान इति तिसृभिस्त्रिष्टुग्भिः ॥ प्रथ-मा—अयं अग्निः समिध्यमानः दीप्यमानः प्रथमः आद्यः प्रथमानो वा नु क्षिप्रं पादपूरणे वा धर्मो धारयिता विश्वस्य विश्ववारः विश्वं वरणीयं यस्य सः सर्ववरिष्ठः विश्वे वाराः काला वा यस्य स विश्ववारः नित्यः । शोचिष्केशः शो-चींषि ज्वालाः केशस्थानीया यस्य । घृतनिर्णिक् घृतरूपः घृताधीनरूपसमृद्धिः घृताधीनशुद्धिर्वा । णिजिर् शौचपोषणयोः, भावे क्विप् । पावकः सर्वस्य सुयज्ञः शोभमानो यज्ञो येन। 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ईदृशोऽयं देवान् य-जथाय देवानां यागाय । कर्मणि षष्ठी व्यत्ययेन न प्रवर्तते।

जर्थाय देवान् । [28]घृतप्रतीको घृतयोनिरग्निः। घृतै-
स्समिद्धो घृतमस्यान्नम्। घृतप्रुषस्त्वा सरितो वह-
न्ति। घृतं पिबन्थ्सुयजा यक्षि देवान्। [29]आयुर्दा अं-
ग्ने हविषो जुषाणः । घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यम् । पितेव पुत्रमभि

---

अक्तुभिः व्यक्तिहेतुभिस्स्वतेजोभिः समज्यते सम्यगक्तः क्रियते, महाप्रकाशः क्रियत इति यावत् ॥

[28]द्वितीया—घृतप्रतीक इति ॥ अयं अग्निः घृतप्रतीको घृतोपक्रमः घृतयोनिः घृतकारणः घृतैस्समिद्धः संदीपितः ईदृशोऽयं अस्यान्नमपि घृतम् । इदानीं प्रत्यक्षवदुच्यते—हे अग्ने! घृतप्रुषः घृतस्य पोषयित्र्यः सेक्त्र्यः घृतवाहिन्यो वा सरितः स्रव्यः त्वां वहन्ति धारयन्ति । यद्वा—त्वां प्रवहन्ति । तस्मात् घृतमस्माभिर्दत्तं पिबन् सुयजा शोभनयजमानेन यागेन देवान्यक्षि यज पूजय 'बहुलं छन्दसि' इति शपो लुक् ॥

[29]तृतीया—आयुर्दा इति ॥ व्याख्यातेयम् 'त्वमग्ने रुद्रः'* इत्यत्र । हे अग्ने! हविषो जुषाणः प्रियमाणः सेवमानो वा घृतप्रतीको घृतयोनिः त्वमस्मभ्यमायुषो दाता एधि भव । किञ्च—मधु मधुरसं चारु स्वादु चरणशीलं गव्यं गोविकारं घृतं

---

*सं. १-३-१४.

रक्षतादिमम् ॥ ११ ॥ [30]त्वाम॑ग्ने समि॒धा॒नं य॑विष्ठ। दे॒वा दू॒तं च॑क्रिरे ह॒व्य॒वाह॑म्। उ॒रु॒ज्रय॑सं घृ॒तयो॑नि॒माहु॑तम्। त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्व॑ति। [31]त्वाम॑ग्ने

---

पीत्वा पिता पुत्रमिव इमं यजमानं अभिरक्षतात् आभिमुख्येन रक्षेति ॥

[30]वैश्यस्यादधाति—त्वामग्ने इति जगतीभिस्तिसृभिः ॥ तत्र प्रथमा—हे अग्ने! त्वां समिधानं संदीप्यमानम् । 'बहुलं छन्दसि' इति शपो लुक् । हे यविष्ठ! युवतम! मिश्रयितृतम! वा हविषां देवैः । देवा द्युलोकनिवासिनः ऋत्विजो वा दूतं कार्याणां निर्वोढारं हव्यवाहं हविषो वोढारं चक्रिरे । उरुज्रयसं उरूणां महतामप्यभिभवितारं उरूणि वा ज्रयांसि अभिभवनानि यस्य । ज्र अभिभवे, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । घृतयोनिं घृतयोनिकं उदकस्य कारणं वा त्वेषं दीप्यमानं, कदा आहुतं आहुत्याराधितं ईदृशं त्वां चक्षुर्दधिरे देवाः चक्षुस्स्थानीयं कृतवन्तः, क चोदयन्वति चोदकः विधिः तद्वति चोदिते कर्मणि । चोदयद्वतीति वक्तव्ये नकारश्छान्दसः, लुप्तायामपि वा विभक्तौ 'उगिदचाम्' इति नुम् प्रवर्तते । यद्वा—चोदयतेरौणादिकेऽप्रत्यये चोदयशब्दान्मतुपि नलोपे 'अनो नुट्' इति नुट् । यद्वा—पचाद्यजन्ताच्चोदयशब्दात् मतुपि नकारोपजनः । यद्वा—देवास्त्वां दूतं चक्रिरे चक्षुस्स्थानीयं दधिरे च, क उदयन्वति उदयवति फलवति कर्मणि । पूर्ववन्नकारोपजनः ॥

प्रदिव आहुतं घृतेन । सुम्नायवस्सुषमिधा समीधिरे । स वावृधान ओषधीभिरुक्षितः । उरुज्रयाꣳसि पार्थिवा वितिष्ठसे । [32]घृतप्रतीकं व ऋतस्य धू-

[31]द्वितीया—त्वायग्ने प्रदिव इति ॥ हे अग्ने! प्रदिवः प्राचीने काले । प्रदिव इत्यकारान्त* इत्येके । यद्वा—प्रगता द्यौः प्रदिवं तत्र प्रदिवे काले । 'अच्' इति योगविभागादचि समासान्ते 'परादिश्छन्दसि' इत्युत्तरपदान्तोदात्तत्वम् । सर्वथा पुराणनर्थमाचष्टे । घृतेन सुषमिधा सुसमिन्धनेन आहुतं आह्वनेन तर्पितं समीधिरे संदीपयन्ति । के सुम्नायवः सुम्नं सुखं धनं वा आत्मन इच्छन्तः । 'क्याच्छन्दसि' इत्युप्रत्ययः, 'देवसुम्नयोर्यजुषि' इति दीर्घत्वम् । स त्वं ओषधीभिर्वावृधानः वर्धमानः 'बहुलं छन्दसि' इति शपः श्लुः ; 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । उक्षितः आहुत्यादिभिस्सिक्तः तर्पितो वा । उरुज्रयांसि महाभिभवशक्तीनि पार्थिवानि पृथिव्यां भवानि रक्षांसि वितिष्ठसे वितिष्ठस्व अधितिष्ठ विशिष्टानि वा स्थापय । 'समवप्रविभ्यस्स्थः' इत्यात्मनेपदम् । अथ स्वरानुरोधादन्यथा व्याख्यायते—ज्रयांसि बाधकानि पार्थिवानि उरूणि महान्ति वितिष्ठस्व । 'सुपां सुलुक्' इति विभक्तेर्लुक् क्रियाविशेषणं वा ॥

[32]अथ तृतीया—घृतप्रतीकमिति ॥ घृतप्रतीकं घृतारम्भं ऋतस्य वज्रस्य यज्ञस्य सत्यस्य वा धूर्षदं धुरि सीदन्तं निर्वोढृतया

*प्रदिव इति सकारान्तो निपातः.

रुषदम् । अग्निं मित्रं न समिधान ऋञ्जते ॥ १२ ॥ इन्धानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णामुदु नो यꣳसते धियम् । [33]प्रजा अग्ने संवासय । आशाश्च पशुभिस्सह । राष्ट्राण्यस्मा आधेहि । यान्यासन्थ्सवितुस्स-

---

अग्निं मित्रं न मित्रमिव समिधानः संदीपयन् ऋञ्जते अलङ्करोति । ऋज भर्जने भौवादिकः । व इति ऋत्विग्यजमानावुच्येते युष्माकमृतस्येति, युष्माकं वा मध्ये कश्चित् समिधान इति । स चाग्निः इन्धानः अस्माकं धियं दीपयन् अक्रः कैश्चिदप्यनपक्रान्तः । क्रमेः कर्मणि छान्दसो डः, उञ्छादिर्द्रष्टव्यः । विदथेषु यज्ञेषु दीद्यत् दीप्यमानः । दीद्यतिर्दीप्तिकर्मा । शुक्रवर्णां शुक्लवर्णां निर्मलरूपां धियं प्रजां कर्म वा नः अस्माकं उद्यंसते उद्यच्छते । 'समुदाङ्भ्यः' इत्यात्मनेपदं 'सिब्बहुलं लेटि' इति सिप् । उकारोऽवधारणार्थः शुक्रवर्णमेवेति ॥

[33]उत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति । सोऽग्निरूपेण स्तूयते—प्रजा अग्ने संवासयेत्यनुष्टुभा ॥ हे अग्ने! अजात्मन्! अस्माकं प्रजाः संवासय सम्यक्सुखिताः आवासय आशाः देशाः दिग्वासिनश्च संवासयेत्येव । पशुभिस्सह पशूंश्चास्माकं संवासय। राष्ट्राणि जनपदांश्च अस्मै यजमानाय आधेहि विधेयानि कुरु यानि चान्यानि सवितुर्देवस्य सवे प्रेरणायां आसन् सन्ति प्रेरणीयत्वेन वर्तन्ते तानि चास्मा आधेहि । छान्दसो लुङ् 'सवजवौ छन्दसि' इति सवशब्दोऽन्तोदात्तः ॥

वे। [34]मही विश्पत्नी सदने ऋतस्य। अर्वाची एतं धरुणे रयीणाम्। अन्तर्वत्नी जन्यं जातवेदसम्। अध्वराणां जनयथः पुरोगाम् ॥ १३ ॥ [35]आरोहतं दशतꣳ शक्करीर्मम। ऋतेनाग्न आयुषा वर्चसा सह।

[34]अरणी अध्वर्युणा दीयमाने यजमानः प्रतीक्षते—मही विश्पत्नी इति त्रिष्टुभा ॥ मही महत्यौ महनीये। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। विश्पत्नी विश्पत्न्यौ विशां प्रजानां पालयित्र्यौ। अयस्मयादित्वेन भत्वाज्जश्त्वाभावः। यद्वा—विश्वस्य पालयित्र्यौ (?) अन्तर्वत्नी गर्भिण्यौ 'अन्तर्वत्पतिवतोर्नुक्' इति नुगीकारौ, जन्यं जनयितव्यं गर्भस्थं जातवेदसं जातानां वेदितारं अध्वराणां यज्ञानां पुरोगां अग्रगामिनीं जनयथः जनयतम्। पञ्चमो लकारः, 'जनसनखनाम्' इति विट् 'विड्वनोः' इत्यात्वम् ॥

[35]अरणी प्रतिगृह्णाति यजमानः—आरोहतमिति जगत्या ॥ हे अरणी! मम दशतं दशवर्गात्मिकाः। 'पञ्चद्दशतौ वर्गे वा' इति निपात्यते, शक्करीः शक्तिविशेषशालिनीः अङ्गुलीः आरोहतम्। शकेः क्वनिपि 'वनोरच' इति ङीब्रेफौ। हे अग्ने! त्वमपि ममाङ्गुलीरारोह, ऋतेन यज्ञेन आयुषा वर्चसा बलेन चास्मभ्यं देयेन सह आरोह। किञ्च—तथा त्वमारोह यथा अहं वयं ज्योक् दीर्घकालं जीवन्तः उत्तरामुत्तरां समां उत्तरस्मिन्नुत्तरस्मिन्वत्सरे अविच्छेदेन दर्शं पूर्णमासं यज्ञं धान्यं पशुचा-

ज्योग्जीवन्तु उत्तरामुत्तराꣳ समाम् । दर्शमहं पूर्णमासं यज्ञं यथा यजै । [36]ऋत्वियवती स्थो अग्निरेतसौ । गर्भं दधाथां ते वामहं ददे । तथ्सत्यं यद्वीरं बिभृथः । वीरं जनयिष्यथः । [37]ते मत्प्रातः प्रजनिष्येथे । ते मा प्रजाते प्रजनयिष्यथः ॥ १४ ॥ प्रज-

तुर्मास्यज्योतिष्टोमादिलक्षणं यज्ञं यजेमहि । उभयत्रापि वचनव्यत्ययः । यद्वा—जीवन्त इति वचनव्यत्ययः, जीवन् । औणादिको वा जीवतेर्वसन्तादिवत् झच्प्रत्ययः, वृषादिर्द्रष्टव्यः । यजेर्लेटि 'वैतोन्यत्र' इत्यैकारः, 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः ॥

36—37प्रतिगृह्यारणिमभिमन्त्रयते यजमानः—ऋत्वियवती इति द्वाभ्याम् ॥ प्रथमा जगती विस्तृतपदा,[1] द्वितीया विषमपदा, अतिजगती बृहती वा ॥ हे ऋत्वियवती! अरणी! ऋतुः प्राप्तोऽस्य ऋत्वियोऽग्निः 'छन्दसि' इति घसिः, तद्वत्यौ प्रजननाभिमुखगर्भवत्यौ आमन्त्रिताद्युदात्तत्वम् । युवां अग्निरेतसौ स्थः अग्निर्गर्भस्थरेतस्स्थानीयो ययोस्ते युवां गर्भं दधाथां ते तादृश्यौ गर्भवत्यौ वां युवां अहं ददे गृह्णामि, तत्सत्यं न मिथ्या यद्वीरं पुत्रं गर्भे बिभृथः धारयतः यच्च वीरं एव जनयिष्यथः ते तादृश्यौ युवां प्रातः प्रजनिष्येथे अग्निना वीरेण प्रजावत्यौ भविष्यथः । मत्

[1]प्रसितपदा.

यो पशुभिर्ब्रह्मवर्चसेनं सुवर्गे लोके। [38]अनृताथ्सत्यमुपैमि। मानुषाद्दैव्यमुपैमि। दैवीं वाचं यच्छामि। [39]शल्कैरग्निमिन्धानः। उभौ लोकौ सनेमहम्। उभयोर्लोकयोर्ऋद्ध्वा। अति मृत्युं तराम्यहम्। [40]जातवेदो भुवनस्य रेतः। इह सिञ्च तपसो यज्जनि-

मदर्थे 'सुपां सुलुक्' इति चतुर्थ्या लुक्, हेतौ वा पञ्चमी, मत्तो हेतोः ते प्रजाते अग्निना वीरेण प्रजावत्यौ मा मामपि प्रजादिभिः प्रजनयिष्यथः, स्वर्गे च लोके भागित्वेन॥

[38]अथ यजमानो व्रतमुपैति, वाचं च यच्छति—अनृतादिति। गायत्रीप्रकारोऽयं, यजुरित्येके॥ अनृतात् अव्रतत्वादनग्नित्वाद्वा, सत्यं व्रतित्वं, अग्निमत्त्वं वा उपैमि मानुषात् मनुष्यमात्रत्वात् दैव्यं देवार्हत्वं उपैमि दैवीं संस्कृतां वाचं यच्छामि मयि दैवीमेव वाचं वदामि, ततोऽवगम्यते सर्वकर्मकाले ब्राह्मणेन नापभाषितव्यमिति॥

[39]शल्कैरेतां रात्रिं एतमग्निमिन्धान आस्ते—शल्कैरित्यनुष्टुभा॥ शल्कैः शकलैः एतां रात्रिं अग्निमिन्धानः दीपयन् उभौ लोकौ इमं चामुं च अहं सनें सनेयं सम्भजेयम् 'अमो मश्' । ततः उभयोर्लोकयोः ऋद्ध्वा भूत्वा अहं मृत्युमतितरामि॥

[40]तस्मिन्नुपव्युषमरणी निष्टपति—जातवेद इति त्रिष्टुभा अयं ते योनिरित्यनुष्टुभा च॥ तत्र प्रथमा—हे जातवेदः! जातानां

ष्यते ॥ १५ ॥ अग्निमश्वत्थादधि हव्यवाहम् । शमीगर्भाज्जनयन्यो मयोभूः । [41]अयं ते योनिरृत्वियः । यतो जातो अरोचथाः । तं जानन्नग्न आरोह । अथा नो वर्धया रयिम् । [42]अपेत वीत वि च सर्पतातः ।

वेदितः ! अग्ने ! ब्रह्मौदनिक ! भुवनस्य भूतजातस्य यत् रेतः कारणं तत् इह अनयोररण्योः सिञ्च निषिञ्च यत् रेतः तपसः तपनात् परिरम्भणस्थानीयात् जनिष्यते प्रादुर्भविष्यति तदनयोस्सिञ्च । पुनश्च रेतो विशेष्यते—यद्वा अस्मा अग्निः शमीगर्भात् अश्वत्थात् हव्यवाहं हविषां वोढारं अग्निं अधिजनयन् सर्वस्य भूतजातस्य मयोभूः मयसः सुखस्य भावयिता भवति । अधिरनर्थकः । यद्वा—ईदृशमग्निं जनयन् अत एव मयोभूः भुवनस्य भूतजातस्य अधि आधिपत्ये यो भवति अनेन समस्तोपकारकेणात्मना यो जनिष्यते तस्य कारणं रेतः एतयोस्सिञ्चेति ॥

[41]अथ द्वितीया—अयं ते योनिरिति ॥ एषा च 'उप प्रयन्तः'* इत्यत्र व्याख्याता । हे अग्ने ! अयं ते तव ऋत्वियः ऋतुप्रायप्राप्तो योनिः कारणं यतो जातः त्वं अरोचथाः तं जानन् आत्माधिकारं विद्वान् आरोह अथ आरुह्य च नः अस्माकं रयिं वर्धय इति ॥

[42]गार्हपत्यादीनामायतनमुद्धन्ति—अपेतेति त्रिष्टुभा ॥ इयं चाग्निकाण्डे* व्याख्याता । अपेत इतस्स्थानादपगच्छत वीत वि-

* सं. १-५-५. * सं. ४-२-४.

येऽत्र स्थ पुराणा ये च नूतनाः । अदादिदं यमोऽवसानं पृथिव्याः । अक्रन्निमं पितरो लोकमस्मै ॥ १६ ॥ [43]अग्नेर्भस्मास्यग्नेः पुरीषमसि । [44]संज्ञानमसि कामधरणम् । मयि ते कामधरणं भूयात् । [45]सं वं-

दूरं गच्छत, विसर्पत च परस्परं विश्लिष्टा गच्छथ । ये यूयं अत्र स्थाने पुराणाः पुरातनाः ये च नूतनाः इदानींतनाः यस्मात् इदमवसानं स्थानं पृथिव्यास्संबन्धि पृथिवीमात्राद्वा विकृष्य अस्मै यजमानाय अदात् दत्तवान् यमः नियन्ता विश्वस्य । पितरः च इमं लोकं अवकाशं अस्मै यजमानाय अग्न्याधारत्वेन अक्रन् कृतवन्त इति ॥

[43]सिकता निवपति—अग्नेर्भस्मासीति यजुषा ॥ इदमपि तत्रैव व्याख्यातं 'अपेत वीत' * इत्यत्रैव । अग्नेर्भस्म दीप्तिहेतुस्त्वं असि । तथा अग्नेः पुरीषं पूरणं पालनं वा त्वं असि इति ॥

[44]अथोषा निवपति—संज्ञानमिति यजुषा ॥ इदमपि तत्रैव व्याख्यातम् * । संज्ञानं सम्यक् ज्ञानहेतुः कामधरणं कामानां धारकं च असि, ते तव यत् कामधरणं कामधारणसामर्थ्यं तत् मयि अपि भूयात् इति ॥

[45]अथ वानस्पत्यान् संसृजति—सं व इति द्वाभ्यां गायत्र्यनुष्टुब्भ्याम् । तत्र प्रथमा—वः युष्माकं हृदयानि संसृजामि

* सं. ४-२-४.

स्सृजामि हृदयानि । सꣳसृष्टं मनो अस्तु वः । सꣳसृष्टः प्राणो अस्तु वः।[46]सं या वः प्रियास्तनुवः। संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः। संप्रियास्तनुवो मम ॥ १७ ॥[47]कल्पेतां द्यावापृथिवी । कल्पन्तामाप ओषधीः । कल्पन्तामग्नयः पृथक्। मम ज्यैष्ठ्याय सव्रताः।[48] येऽग्नयस्समनसः।

---

परस्परमुपरक्तानि करोमि । मनः च वः युष्माकं संसृष्टमस्तु । प्राणः च वः युष्माकं संसृष्टोऽस्तु परस्परोपकारस्वभावोऽस्तु ॥

[46]द्वितीया—सं या व इति ॥ व्याख्यातेयं तत्रैव* । वः युष्माकं याः प्रियाः तनुवः ताः संसृज्यन्ताम् । हृदयानि च प्रिया प्रियाणि वः युष्माकं संसृज्यन्ताम् । वः युष्माकं आत्मा च सम्प्रियोऽस्तु । मम अपि च तनुवः तनवः सं प्रियाः सन्त्विति ॥

[47]क्षुत्पिपासामनसीभ्यामग्नीन् यजमान उपतिष्ठते—कल्पेतामिति द्वाभ्यामनुष्टुबस्तारपङ्क्तिभ्याम् ॥ व्याख्याते चैते अग्निकाण्डे 'मधुश्च' ‡ इत्यत्र । तत्र प्रथमा—कल्पेतां कल्पयेतां द्यावापृथिव्यौ । आपश्च ओषधयश्च कल्पन्तां अग्नयश्च पृथक्कल्पन्तां सव्रताः समानकर्माणः मम ज्यैष्ठ्यार्थमिति ॥

---

* सं. ४-२-४. ‡ सं. ४-४-११.

अन्तरा द्यावापृथिवी । वासन्तिकावृतू अभि कल्प-
मानाः । इन्द्रमिव देवा अभि संविशन्तु । [49]दिवस्त्वा
वीर्येण । पृथिव्यैमहिम्ना ॥ १८ ॥ अन्तरिक्षस्य पो-
षेण । सर्वपशुमादधे । [50]अजीजनन्नमृतं मर्त्यासः ।
अस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुव-

[48]द्वितीया—ये अग्नयः समनसः समानमनस्काः द्यावापृथिवी द्यावापृथिव्योः अन्तरा मध्ये सन्ति वासन्तिकावृतू अभितः कल्पयन्तः ते त्वामभितस्संविशन्तु इन्द्रं देवा इवेति ॥

[49]गार्हपत्यमादधाति—दिवस्त्वेत्यनुष्टुभा उष्णिहा वा ॥ दिवो वीर्येण बलविशेषेण वृष्ट्यादिसम्पादनरूपेण पृथिव्या महिम्ना माहात्म्येन सस्यादिकारणत्वलक्षणेन अन्तरिक्षस्य पोषेण पुष्टिहेतुत्वेन सहितं अत एव सर्वपशुं सर्वेषां पशूनां स्वामित्वेन सम्बन्धिनं आदधे ॥

[50]जातमग्निमञ्जलिनाऽभिगृह्णाति—अजीजनन्निति त्रिष्टुभा ॥ अजीजनन् अजनयन् अमृतं अमरणं मर्त्यासः मरणधर्माणो मनुष्याः ऋत्विजः । 'आज्जसेरसुक्' । अस्रेमाणं अस्रवणशीलम् । स्रृ गतिशोषणयोः । अगम्यमशोषणीयं वा । तरणिं तारकं दुःखेभ्यः । वीडुजम्भं दृढजम्भनं दश स्वसारः सहोत्पन्नत्वेन स्वसृकल्पाः अग्रुवः । अङ्गेः क्रुप्रत्यये नकारलोपे च अग्रुवः । तत एव उलिप्रत्यये अङ्गुलिः । समीचीः समीच्यः

स्समीचीः । पुमाꣳसं जातमभि सꣳरभन्ताम् ।
[51]प्रजापतेस्त्वा प्राणेनाभि प्राणिमि । पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय । शतꣳ शरद्भ्य आयुषे वर्चसे ॥ ११ ॥ जीवात्वै पुण्याय।
[52]अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममैव सन्वहं हव्यान्यग्ने । पु-

सहाश्वन्त्यः पुमांसं पावनमग्निं जातं अभि संरभन्तां अभितस्संगृह्णन्तु ॥

[51]जातं यजमानोऽभिप्राणिति—प्रजापतेस्त्वेति जगतीप्रकारेण पञ्चपादेन ॥ आयुष इति चतुर्थपादान्तः । प्रजापतेः प्राणेन त्वां अभिप्राणिमि न मदीयेन । उपरिश्वासकरणमभिप्राणनम् । एवं पूष्ण एव पोषेण पुष्ट्या त्वामभिप्राणिमि* । व्यत्ययेन प्रथमा । वर्चसे बलाय जीवात्वै जीवनौषधाय पुण्याय च त्वामभिप्राणिमीति ॥

[52]आहवनीयमाधीयमानमभिमन्त्रयते यजमानः—अहं त्वदस्मीति त्रिष्टुभा ॥ हे अग्ने! अहं त्वत् त्वत्तो हेतोः अस्मि यदा त्वमासीः तदाऽस्म्यहं यदा त्वं नासीः तदा अहं अजातकल्पो

*अत्र सर्वेषु कोशेषु ग्रन्थो गलित इति भाति, (घ) पुस्तके तु—'मह्यं शतशारदाय शतसंवत्सरसम्बन्धिने दीर्घायुत्वाय । सलोपश्छान्दसः । शरद्भ्यः शतसंवत्सरशतात्मकाय आयुषे । शतशब्दात्' इत्यस्ति.

त्रः पित्रे लोककृज्जातवेदः। प्राणे त्वाऽमृतमादधामि। अन्नादमन्नाद्याय। गोप्तारं गुप्त्यै। [53]सुगार्हपत्यो विदहन्नरातीः। उषसश्श्रेयसीश्श्रेयसीर्दधत् ॥ २० ॥ अग्ने सपत्नाꣳ अप बाधमानः। रा-

शास्म्येव। त्वं च मदसि मत्तो हेतोर्जायसे। एतत्प्रसिद्धमेवेति दर्शयितुं एतत् इत्युक्तम्। एवमुक्तेन प्रकारेण मम योनिः कारणं त्वं असि तव अपि योनिः अहं अस्मि। यस्मादेवं तस्मात् ममैव बन्धुः सन् मदीयानि हव्यानि वह यथा पुत्रः पित्रे इष्टमाचरति लोककृत् स्थानकृत् पुण्येषु लोकेषु। यद्वा-सत्पुत्रः पित्रे लोककृद्भवति एवं पितुः पालयितुर्ममैव फलमावेक्ष्य हव्यानि वह। हे जातवेदः! जातानां वेदितः! जातधनादि वा ॥*

[53]गार्हपत्यमाधीयमानमनुमन्त्रयते यजमानः—सुगार्हपत्य इति त्रिष्टुभा ॥ हे अग्ने! सुगार्हपत्यः। 'गृहपतिना संयुक्ते ञ्यः'। शोभनं गृहपतिसंयुक्तत्वं यस्य शोभनगृहपतिलाभात्। 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। अरातीः अदात्रीः शत्रुजातीः विदहन् विविधं दहन् उषसः उदयान् अहोरात्रा लक्ष्यन्ते

* अत्र 'प्राणे त्वा' इति मन्त्रभाष्यं क्वापि कोशे न दृश्यते। घकोशे तु—प्राणननिमित्ते अमरणनिमित्ते त्वामादधामि अन्नादं हविर्भुजं त्वामन्नाद्याय अन्नभक्षणसामर्थ्याय गोप्तारं रक्षकं त्वां गुप्त्यै मम रक्षणाय आदधामि ॥ इति वर्तते ॥ माधवीये त्वयं मन्त्रः—'अयं मन्त्रः गार्हपत्याधानमन्त्रेषु सूत्रकृता उदाहृतः' इत्यवतारितः इमं मन्त्रं व्याख्यातप्रायतया उत्तरत्र वक्ष्यति.

यस्पोषमिषमूर्जमस्मासु धेहि । [54]इमा उ मामुप तिष्ठन्तु रायः । आभिः प्रजाभिरिह सं वसेय । इहो इडा तिष्ठतु विश्वरूपी । मध्ये वसोर्दीदिहि जातवेदः । [55]ओजसे बलाय त्वोद्यच्छे । वृषणे

---

श्रेयसीश्श्रेयसीः उत्तरोत्तरश्रेयसीः सर्वप्रकारप्रशस्यतराः दधत् धारयन् उत्पादयन् सपत्नान् भ्रातृव्यान् पापात्मकांश्च अपबाधमानः अपनुदन् रायो धनस्य पोषं पुष्टिं इषमूर्जं रसं च क्षीरादि अस्मासु धेहि स्थापय भोगाय ॥

[54]आहवनीयाधानार्थं व्रजन्ति—इमा इति त्रिष्टुभा ॥ हे जातवेदः! इमा रायो धनानि प्रजादिलक्षणास्सर्वा अपि मामुपतिष्ठन्तु । उ इति पादपूरणे अवधारणे वा । आभिः प्रजाभिः आत्मीयभूताभिः इहैव जन्मनि त्वत्प्रसादात् संवसेय सह वसेयं व्यत्ययेनात्मनेपदम् । किश्च—इह उ इहैव एवमाभिः संवसति मयि इडा गौर्वाम्यशो वा पशवो वा तिष्ठतु विश्वरूपी नानाप्रकाररूपा सर्वात्मना मयि तिष्ठतु । गौरादिर्द्रष्टव्यः । त्वमपि तादृशस्य अस्मदीयस्य वसोः धनसमूहस्य मध्ये दीदिहि दीप्यस्व स्वामित्वेन वर्तस्व ॥

[55]आहवनीयमुद्यच्छति—ओजस इत्यादिभिः । प्रथमा ककुप् । उष्णिक् द्वितीया । त्रिष्टुप्तृतीया ॥ हे अग्ने! ओजसे तेजसे बलाय वृषणे वर्षित्रे शुष्माय शक्तये आयुषे वर्चसे दीप्तये

शुष्मायायुषे वर्चसे । सपत्नतूरसि वृत्रतूः । [56]यस्ते देवेषु महिमा सुवर्गः ॥ २१ ॥ यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे । तया नो अग्ने जुषमाण एहि । [57]दिवः पृथिव्याः पर्यन्तरिक्षात् । वातात्पशुभ्यो अध्योषधीभ्यः । यत्रयत्र जातवेदस्संबभूथ । ततो नो अग्ने जुषमाण एहि।

---

च त्वां उद्यच्छे उद्गृह्णामि । 'समुदाङ्भ्यः' इत्यात्मनेपदम् । त्वं मे खलु सपत्नानां भ्रातृव्याणां तुर्विता हिंसिताऽसि वृत्राणां वारकाणां च पापानां तुर्विताऽसि । तुर्वि हिंसायां, क्विब्वलोपदीर्घत्वानि ॥

[56]द्वितीया—हे अग्ने! यस्ते तव देवेषु महिमा माहात्म्यं स्वर्गात्मकं यश्च तव आत्मा बलं पशुषु सर्वेषु तिर्यगादिष्वपि प्रविष्टः या च तव पुष्टिः यागात्मिका मनुष्येषु ब्राह्मणादिषु पप्रथे प्रथिताऽभूत्, तया पुष्ट्या उपलक्षणत्वात् तेन चात्मना तेन च महिम्ना सहितस्सन्नस्मान् एहि आगच्छ जुषमाणः प्रीयमाणः यद्वा—ताभिर्महिमात्मपुष्टिभिः । वचनव्यत्ययः, 'सुपां सुलुक्' इति वा भिसो यादेशः ॥

[57]तृतीया—हे जातवेदः! अग्ने! दिवो वा अन्तरिक्षात् वा पृथिव्या वा वातात् वा पशुभ्यो वा ओषधीभ्यो वा यत्रयत्र यतोयतोऽन्यस्मादपि परिसंबभूव परितः समुत्पन्नोसि ।

[58]प्राचीमनु प्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो वि भाहि ॥२२॥ ऊर्जं नो धेहि द्विपदे चतुष्पदे । [59]अन्वग्निरुषसामग्रमख्यत् । अन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीन् । अनु द्यावापृथिवी

सार्वविभक्तिकस्त्रल् । ततस्ततः सर्वस्मात् नः अस्मान् जुषमाणः प्रीयमाणः एहि आगच्छ अस्मत्पार्श्वे वर्तस्व ॥

[58]अथ गमनमन्त्राः—प्राचीमिति त्रिष्टुभौ । विक्रमस्वेति च गायत्री । प्रथमा—प्राचीमिति । अग्निकाण्डे * व्याख्याता । प्राचीं प्रदिशं प्रधानदिशं अनुप्रेहि अनुक्रमेण विद्वान् स्वाधिकारज्ञः । हे अग्ने! अग्नेस्तवायतनस्याहवनीयस्य पुरः अग्निः पुरस्तात् गन्ता भव इह अस्माकं कर्मणि विश्वा आशाः सर्वा दिशः दीद्यानः दीपयन् विभाहि विविधं भाहि दीप्यस्व । तथा कुर्वंश्च त्वं नः अस्माकं सम्बन्धिने द्विपदे चतुष्पदे च ऊर्जं धेहि देहीति ॥

[59]द्वितीया†—अग्निरुषसामग्रमनु अग्रे अख्यत् प्रकाशते अहानि चान्वख्यत् प्रथमः प्रधानः जातवेदाः, तं सूर्यस्य पुरुत्रा सर्वान् रश्मीन् अन्वख्यत् । एवं अनुक्रमेण द्यावापृथिवी द्यावापृथिव्यौ आततान व्याप्तवान् तेजसेति ॥

* सं. ४-६-५. † सं. ४-१-२.

आर्तताान । [60]विक्रमस्व महाꣳ असि । वेदिषन्मा-
नुषेभ्यः । त्रिषु लोकेषु जागृहि । [61]यदिदं दिवो य-
ददः पृथिव्याः । संविदाने रोदसी संबभूवतुः ॥२३
तयोः पृष्ठे सीदतु जातवेदाः । शंभूः प्रजाभ्यस्त-
नुवे स्योनः । [62]प्राणं त्वाऽमृत आदधामि । अन्ना-

[60]तृतीया—हे अग्ने! विक्रमस्व त्रिषु लोकेषु अप्रतिहतगतिर्वर्तस्व 'वृत्तिसर्गतायनेषु क्रमः' इत्यात्मनेपदम् । महान् खलु असि त्वत्समोऽन्यो महान्नास्तीत्यर्थः । 'आतोटि नित्यम्' इति रुत्वम् । वेदिषत् वेद्यां सीदतीति 'सत्सूद्विष' इति क्विप् । मानुषेभ्यो यजमानेभ्यः यजमानार्थं जागृहि त्रिषु अपि लोकेषु अवहितो भव ॥

[61]अभिमन्त्र्याहवनीयमादधाति—यदिदमिति त्रिष्टुभा ॥ यादिदं उषाख्यं दिवो यज्ञियं पृथिव्यां वर्तते यस्माद्धेतोः यस्माच्च अदः कृष्णाख्यं पृथिव्या यज्ञियं दिवि चन्द्रमसि च स्थितमभूत् संविदाने पूर्वविश्लेषकाले समयं कुर्वाणे रोदसी द्यावापृथिव्यौ संबभूवतुः । तयोः रोदस्योः पृष्ठे पृष्ठभूते मध्यप्रदेशे आहवनीयाख्ये जातवेदाः सीदतु अधितिष्ठतु । कथंभूतः प्रजाभ्यः षष्ठ्यर्थे चतुर्थी । प्रजानां तनुवे शरीरार्थम् स्योनः सुखकरः । शं भावयतीति क्विप् 'बहुलमन्यत्रापि' इति णिलुक् ॥

[62]आहवनीय[1]मादधाति—प्राणं त्वेति ॥ व्याख्यातप्रायम् । प्राणा-

[1]अथाऽहवनीय.

दमन्नाद्याय । गोप्तारं गुप्त्यै । यत्ते शुक्र शुक्रं वर्चश्शुक्रा तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वाऽऽदधे । अग्निनाऽऽग्ने ब्रह्मणा । आनशे व्यानशे सर्वमायुर्व्यानशे ॥ २४ ॥ [63]नर्य प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् । [64]अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे । अदब्धायोऽ-

त्मानं त्वां अमृते अमृतनिमित्तं आदधामि । गतमन्यत्*। "यत्ते शुक्र" इत्यादिराहवनीयाधानमन्त्रशेषो घर्मशिरस्सु व्याख्यातः†॥

[63]अथ विराड्भिर्यजमान उपतिष्ठते । तत्र गार्हपत्यम्—नर्य प्रजां मे इत्यनुष्टुभा ॥ हे अग्ने! नर्य! नरेभ्यो हित! मे मम प्रजां गोपाय, अमृतत्वाय जीवसे जीवनाय च जातां जनिष्यमाणां च सर्वां प्रजां कीदृशीं सतीं अमृते अमृतत्वहेतौ सत्ये प्रतिष्ठितां सत्यप्रधानां कृत्वा रक्षेति ॥

[64]अन्वाहार्यपचनमुपतिष्ठते—अथर्वेत्यनुष्टुभा ॥ हे अथर्व! अथर्वणा पूर्वं सृष्ट! यथा 'अथर्वा त्वा प्रथमो निरमन्थत्'‡ इति । 'न ङिसंबुद्ध्योः' इति व्यत्ययेन न प्रवर्तते अकारान्तं वा शब्दान्तरं द्रष्टव्यम् । मम पितुं अन्नं गोपाय रक्ष । रसं क्षीरादि अन्नं अदनीयमन्यद्वाऽपि तत्सर्वं गोपाय । इह अस्मिन् शरीरे

*ब्रा. १-२-१-. † ब्रा. १-१-७. ‡ सं. ४-१-३.

शीततनो। अविषं नः पितुं कृणु। [65]शꣳस्यं पशून्मे गोपाय। द्विपादो ये चतुष्पदः ॥ २५ ॥ अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगाः। [66]सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः।

---

आयुषे जीवनार्थं एतच्छरीरधारणार्थं हे अदब्धायो! अनुपहिंसितजीवन! अनुपहिंसितान्न! वा। छान्दसोऽन्त्यलोपः। हे अशीततनो! उष्णशरीर!। पूर्वस्याविद्यमानत्वादिदं न निहन्यते। अस्माकं पितुं अन्नं आविषं विषरहितं अमृतत्वाय पर्याप्तं कृणु कुरु। यद्वा— अविषं रक्षणपर्याप्तं पितुं कृणु देहि। अवतेष्टिषच् व्यत्ययेनाद्युदात्तत्वम् ॥

[65]आहवनीयमुपतिष्ठते—शंस्य पशून् म इत्यनुष्टुभा ॥ हे शंस्य! स्तुत्य! मे मम पशून् गोपाय रक्ष। द्विपादो मनुष्यादयः ये च चतुष्पदो गवादयः। छान्दसः पद्भावः 'पादस्य लोपः' इति लोपः समासान्तः। द्विपाद इत्यत्र 'द्वित्रिभ्यां पद्दन्' इति उत्तरपदान्तोदात्तत्वम्। चतुष्पदो विशेष्यन्ते—ये अष्टाशफाः अष्टखुरादयो गवादयः ये चैकशफाः अश्वादयः आशुगाः शीघ्रगतयः तान् सर्वान् गोपाय हे अग्ने! ॥

[66]सभ्यमुपतिष्ठते—सप्रथेसनुष्टुभा ॥ हे सप्रथ! सविस्तार! मे मम सभां बन्धुसंघातं गोपाय रक्ष सर्वदा सभां प्रवर्तय। ये च सभ्याः सभार्हाः सभायां साधवः सन्तः मत्सभासदो भ-

तानिन्द्रियावतः कुरु । सर्वमायुरुपासताम् । [67]अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचस्सामानि यजूꣳषि । सा हि श्रीरमृता सताम् ॥ २६ ॥ [68]चतुश्शिखण्डा युवतिस्सुपेशाः । घृतप्रती-

वन्ति सभां सीदन्तीति तान् सर्वान् इन्द्रियावतः वीर्यवतः कुरु । 'मन्त्रे सोमाश्वेन्द्रिय' इति दीर्घत्वम् । किञ्च—ते सभासदः सर्वमायुः पुरुषायुषं उपासतां उपसम्प्राप्नुवन्तु ॥

[67]आवसत्थ्यमुपतिष्ठते—अहे बुध्नियेत्यनुष्टुभा अभिक्रान्ताक्षरया पुरस्ताद्बृहत्या वा ॥ हे अहे! अभिगन्तव्य! बुध्निय! बुध्नमन्तरिक्षं बुद्धिर्वागेव वा तत्राविर्भूत! । 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्याविद्यमानवत्त्वनिषेधाद्द्वितीयं निहन्यते । मे मम मन्त्रं वेदात्मकं गोपाय कार्यसमर्थं कुरु । जातावेकवचनम् । यमृषयो द्रष्टारो मन्त्रदृश्वानः त्रैविदाः विदुः जानन्ति । त्रीन्वेदान्विदन्ति जानन्तीति त्रिविदः त एव त्रैविदाः । यद्वा—तिस्रो विद्यास्त्रिवित् तदधीयते त्रैविदाः । केपुनस्ते मन्त्रा इत्याह—ऋचस्सामानि यजूꣳषि च । सा खलु सतां कर्मिणां श्रीः श्रयणीया अमृता अमृतत्वहेतुः । 'शतुरनुमः' इत्याम उदात्तत्वम् ॥

[68]वेदिं संमृज्यमानामनुमन्त्रयते—चतुश्शिखण्डेति त्रिष्टुभा ॥ चत्वारश्शिखण्डाः शिखण्डस्थानीयाः उन्नतत्वसामान्यात् । द्वावंसौ

का भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय । मह्यं धुक्ष्व यजमानाय कामान् । [69]इहैव सन्तत्र सतो वो अग्नयः । प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीत् । ज्योतिषा वो वैश्वानरेणोपतिष्ठे । [70]पञ्चधाऽग्नीन्व्यक्रामत् ।

---

द्वे श्रोण्यौ यस्याः सा चतुश्शिखण्डा युवतिः मिश्रयित्री हविषां हविर्भिर्वा मिश्रिता । सुपेशाः शोभनरूपा । 'सौमनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । घृतप्रतीका घृतोपक्रमा वेद्यां हि प्रथमं घृतान्यासाद्यन्ते । भुवनस्य भूतजातस्य मध्ये मर्मृज्यमाना भृशं शोधयन्ती भुवनानि भृशमलंक्रियमाणा वा । मृजूष् शौचालङ्कारयोः । ईदृशी त्वं मह्यं यजमानाय कामान् अभिमतानि धुक्ष्व कामान् संपादय । तव सौभगाय सुभगत्वाय तव सुभगत्वं यथा स्यात् । अन्यथा यजमानस्य कामालाभे तव दौर्भाग्यं लोकस्सम्भावयेत् ॥

[69]अथ यद्यनुपस्थाय प्रवसेत् प्रमादादिना तदा पत्नय उपतिष्ठेरन् सर्वान्—इहैवेति त्रिष्टुभा ॥ इहैव देशे सन् वसन् तत्र गृहे सतो वो युष्मान् हे अग्नयः! प्राणेन सर्वेणापि जीवितेन च वाचा मनसा च बिभर्मि धारयामि । ततस्तथावर्तमानं सन्तं अपि मां तिरोभूय परोक्षे देशे सन्तमपि आयुर्मा प्रहासीत् मा त्याक्षीत् । अहमपि वैश्वानरेण विश्वेषां नराणां हितेन ज्योतिषा तेजसा इत्थंभूतान्युष्मान् उपतिष्ठे ॥

विराड्सृष्टा प्रजापतेः । ऊर्ध्वाऽऽरोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः ॥ २७ ॥

विशन्तु नः पुरूचीर्विधेम निधाय यत्तेऽप्रदाहाय बृहत्यो ब्रह्मणा दुवस्यत विश्ववार इममृञ्जते पुरोगां प्रजनयिष्यथो जनिष्यतेऽस्मै मम महिम्ना वर्चसे दधथ्सुवर्गो भाहि संबभूवतुरायुष्यौनशे चतुष्पदस्सतां प्रजापतेर्द्वे च ॥ १ ॥

[70]विराट्क्रमानन्तरं यजमानः यज्ञविराट्क्रमेणानेन सर्वानुपतिष्ठते—पञ्चधेत्यनुष्टुभा ॥ पञ्चधा पञ्चप्रकारान् अग्नीन् यथोक्तस्वरूपान् व्यक्रामत् पृथक्पृथक् निजविक्रमेणोदपादयत् । विराट् विविधं राजनशीला प्राजापत्यतपःपरिणामात्मिका अग्नेस्तनूः । ब्राह्मणं च—'अग्नीन् वाव सा तान्व्यक्रमत '* इति । विराड्विशेष्यते—प्रजापतेस्सृष्टा ऊर्ध्वा ऊर्ध्वमुत्पतिता 'सहसोर्ध्वमसृजत '* इति ब्राह्मणम् । अथ सा विराट् एतत् कृत्वा ऊर्ध्वा ऊर्ध्वमुखी आरोहत् उपरिगता रोहिणी भूत्वा सा हि अग्नेर्योनिः कारणं तथा अग्नीनामुत्पादितत्वात् प्रतिष्ठितिः योनित्वादेव प्रतिष्ठितत्वेहेतुः, यथा 'स्वयैवैनं योनौ प्रतिष्ठितमाधत्ते '* इति । रोहिण्यामाधानस्य प्रतिष्ठाहेतुत्वमृद्धिहेतुत्वख्यापनार्थम् । प्रतितिष्ठत्यस्यामिति प्रतिष्ठितिः, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

इति द्वितीये प्रथमोऽनुवाकः.

*ब्रा. १-१-१०,

[1]नवैतान्यहानि भवन्ति । नव वै सुवर्गा लोकाः। यदेतान्यहान्युपयन्ति । नवस्वेव तथ्सुवर्गेषु लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति । [2]अग्निष्टोमाः परस्सामानः कार्या इत्याहुः । अग्निष्टोमसंमितस्सुवर्गो लोक इति । द्वादशाग्निष्टोमस्य स्तोत्राणि ।

---

[1]अथ गवामयनब्राह्मणम्, वैश्वदेवं काण्डं पञ्चानुवाकाः । नवैतान्यहानीत्यादि ॥ तत्र संवत्सरस्य गर्भभूतानि नवाहानि एतानि वक्ष्यमाणानि भवन्ति, तत्स्वरूपमिदानीं ब्रूम इति । नवधा भिद्यते सः स्वर्गादिभेदेन नवधा भिन्नत्वात् देवानाम् । यद्वा— नवधा भिन्नैश्वर्याः स्वर्गाः पृथिव्यादिप्राजापत्यान्ता लोकाः, भोगभूमयो[1] वा नव प्राणाः नव स्वर्गाः । तत् तस्मादेषामह्नां उपायनेन नवसु स्वर्गेषु लोकेषु सत्रिणः प्रतितिष्ठन्तः प्रत्येकरस्य[2] तद्भोगं भुञ्जाना यन्ति गच्छन्ति अविच्छेदेन वर्तन्ते । यद्वा—नवानामह्नां उपायनमेव नवसु स्वर्गेषु प्रतिष्ठात्वेन रूप्यते ॥

[2]एवंभूतानामह्नां इदानीं स्वरूपं दर्शयति—अग्निष्टोमा इत्यादि ॥ अग्निष्टोमसामसंस्थाः अग्निष्टोमाः, द्वादश स्तोमाः, तादृशाः परस्सामानः कार्याः कर्तव्या इत्याहुः । हेतुं चाहुः—अग्निष्टोमसम्मितः तुल्यः सुवर्गो लोक इति । तुल्यत्वं चेदानीं वक्ष्यते— अत्र स्वर्गशब्देन संवत्सर उच्यते । 'संवत्सरस्सुवर्गो लोकः '*

---

[1] भोगहेतवो. *ब्रा. १-९-२.

[2] प्रत्येकारस्य [प्रत्येकमुपास्य ?].

द्वादश मासास्संवत्सरः । [3]तत्तन्न सूक्ष्यम् । उक्थ्या एव सप्तदशाः परस्सामानः कार्याः ॥ २८ ॥ पशवो वा उक्थानि । पशूनामवरुध्यै । विश्वजिदभिजितावग्निष्टोमौ । उक्थ्यास्सप्तदशाः परस्सामानः । [4]ते सङ्स्तुता विराजमभि संपद्यन्ते । द्वे

---

इति च ब्राह्मणम् । तस्मादग्निष्टोमसंवत्सरयोः साम्यात् संवत्सरात्मनो गर्भस्य नवाहस्य सम्बन्धिनामह्नामग्निष्टोमत्वं न्याय्यमिति तेषामभिप्रायः । संवत्सराग्निष्टोमयोः साम्ये अन्यत् ब्राह्मणं दर्शयति—द्वादशेति । द्वादशत्वसङ्ख्यान्वयेन द्वयोस्साम्यमिति ॥

[3]एतद्दूषयति—तदित्यादि ॥ तत् तेषां मतं न सूक्ष्यं नादृत्यम् । सूक्ष आदरे तच्छब्दादामः षष्ठीबहुवचनस्य 'सुपां सुलुक्' इति लुक् । कथं तर्हि कर्तव्याः परस्सामान इत्याह—उक्थ्या एवेत्यादि । सप्तदशाः सर्वसंस्था उक्थ्याः कार्याः दशसामान अग्निष्टोमाः । हेतुं चाह—पशवो वा इत्यादि । तद्धेतुत्वात्ताच्छब्द्यम् । किमस्मिन्नवाहे अग्निष्टोमो नास्त्येवेत्याह—विश्वजिदभिजितौ अग्निष्टोमावेव कार्यौ परस्सामान एवोक्थ्या इति ॥

[4]इदानीं ज्योतिर्गौरायुश्चेति ते उक्थ्या इति दर्शयितुं तत्प्राशस्त्यमाह—ते संस्तुता इत्यादि ॥ अत्रेयमह्नां क्लृप्तिः—नवाहस्य आदावन्ते च विश्वजिदभिजितौ, मध्ये विषुवान् । तमभितस्त्रयः परस्सामान इति । ते सर्वे पूर्वोक्ता इति ज्योतिरादयः सह-

चर्चावति रिच्येते । एकया गौरतिरिक्तः । एकयाऽऽयुरूनः । सुवर्गो वै लोको ज्योतिः । ऊर्ग्विराट् ॥ २१ ॥ सुवर्गमेव तेन लोकमभि जयन्ति । [5]यत्परꣳ राथन्तरम् । तत्प्रथमेऽहन्कार्यम् । बृहद्द्वितीये । वैरूपं तृतीये । वैराजं चतुर्थे । शाक्करं पञ्चमे ।

---

संस्तुताः सहपरिगणिताः स्तोत्रीयाभिः विराजं दशहरात्मभिः सम्पद्यन्ते, विराट्सम्पदा परिसमाप्तिं गच्छन्ति । गोआयुषोस्तु द्वे च ऋचौ विराट्सम्पदामतिक्रम्य वर्तेते । कथं एकया गौरतिरिक्तः एकचत्वारिंशदधिकशतद्वयं स्तोत्रीया इति कृत्वा । आयुस्तु एकया स्तोत्रीयया ऊनो भवति, एकोनषष्ट्यधिकं शतद्वयं स्तोत्रीया इतिं कृत्वा । एवं विराट्सम्पत्त्या ज्योतिषो गुणवत्त्वात्त्रयाणामपि मध्ये तस्य प्राशस्त्यम् । किञ्च—सुवर्गो वै लोको ज्योतिः तत्साधनत्वात् । विराट् नाम ऊर्क् अन्नम् । तस्माद्विराट्सम्पत्तिद्वारेण स्वर्गमभिजयन्ति ॥

[5]यत्परमित्यादिना परस्साम्नां प्रतिष्ठा रूपयन् सामानि विदधाति ॥ राथन्तरं रथन्तरभक्ति पृथिवीं 'मनसा ध्यायेत् प्रस्तूयमाने सम्मीलयेत्' इत्यादिधर्मयुक्तं यत् परं परस्साम तत् प्रथमेऽह्नि कार्यम् । यदा परस्सामभूतविषुवतः पूर्वेष्वहस्स्वतः पराञ्चो गृह्यन्ते तदा कार्यम् । एवं बृहद्वैरूपभक्तिके परे द्वितीयतृतीययोरह्नोः कार्ये । अथ उत्तरेष्वहस्सु यदा अमुतोऽर्वाञ्चो

रैवतꣳ षष्ठे । तदु पृष्ठेभ्यो नयन्ति । [6]संतनय एते ग्रहा गृह्यन्ते ॥ ३० ॥ अतिग्राह्याः परस्सामसु । इमानेवैतैर्लोकान्थ्सं तन्वन्ति । मिथुना एते ग्रहा गृह्यन्ते । अतिग्राह्याः परस्सामसु । मिथुनमेव तैर्यजमाना अवरुन्धते । [7]बृहत्पृष्ठं भवति । बृहद्वै

गृह्यन्ते तदा वैराजशाक्वररैवतभक्तीनि पराणि चतुर्थपञ्चमषष्ठेष्वहस्सु कार्याणि । तत् तथा कुर्वन्तः पृष्ठेभ्य एव परान् नयन्ति । पृष्ठ्यैः षडहतां परस्साम्नः प्रापयन्ति सत्रिणः ॥

[6]अथात्र ग्रहक्लृप्तिः परस्साम्नां—सन्तनय इत्यादि ॥ परस्सामसु दिवसेषु पूर्वेषु एते अतिग्राह्या ग्रहाः 'अद्भ्यस्त्वौषधीभ्यो गृह्णामि'* इति प्रथमः 'ओषधीभ्यस्त्वा प्रजाभ्यो गृह्णामि'* इति द्वितीयः, । 'प्रजाभ्यस्त्वा प्रजापतये गृह्णामि'* इति तृतीयः, एते सन्तनयः सन्तताः पराञ्चो गृह्यन्ते, एतैरेवंक्रियमाणैरिमान् लोकान् संतन्वान्ति क्रमेण स्थापयन्ति । अथोत्तरेषु परस्सामसु एते अतिग्राह्या ग्रहा मिथुना गृह्यन्ते अमुतोऽर्वाञ्चो गृह्यन्ते । तृतीयचतुर्थौ मिथुनं द्वितीयपञ्चमौ प्रथमषष्ठाविति । 'प्रजाभ्यस्त्वा प्रजापतये गृह्णामि'* इति चतुर्थः। 'ओषधीभ्यस्त्वा'* इति पञ्चमः, 'अद्भ्यस्त्वा'* इति षष्ठः । तैः तथाक्रियमाणैः मिथुनमेव यजमाना लभन्ते ॥

*सं. १-३-१.

सुवर्गो लोकः । बृहतैव सुवर्गं लोकं यन्ति । त्रय-स्त्रिꣳशिनाम साम । माध्यंन्दिने पवमाने भवति॥ ३१ ॥ त्रयस्त्रिꣳशद्वै देवताः । देवता एवावरुन्धते। [8]ये वा इतः पराञ्चꣳ संवथ्सरमुप यन्ति । न हैनं ते स्वस्ति समश्नुवते। अथ येऽमुतोऽर्वाञ्चमुप यन्ति। ते हैनꣳ स्वस्ति समश्नुवते । एतद्वा अमुतोऽर्वा-

---

[7]अथ विषुवतो मध्यमस्याह्नो विशेषानाह—बृहदित्यादि ॥ विषुवत्याह्नि अग्निष्टोमे पृष्ठसाम बृहद्भवति । बृहद्वा इति ॥ तद्धेतुत्वात्ताच्छब्द्यम् । उक्तं च—'बृहद्वा इमान् लोकान् दाधार'* इति । त्रयस्त्रिꣳशिनाम सामेत्यादि ॥ गतम् ॥

[8]ये वा इत्यादि ॥ इतो विषुवत ऊर्ध्वं ये संवत्सरं पराञ्चं अनावृत्तमेव पूर्वस्मिन् पक्ष इव उपयन्ति ते खलु एनं संवत्सरं संवत्सरफलं स्वास्ति अविनाशेन न समश्नुवते । अथ ये उत्तरस्मिन् पक्षे अमुतोऽन्त्यादारभ्य अर्वाञ्चं संवत्सरं उपयन्ति एनं संवत्सरमविनाशेन प्राप्नुवन्ति । एतद्वा इत्यादि ॥ अमुतोऽर्वागुपनयनमिदं यदेवमन्त्यदिवसमारभ्य ग्रहणम् । एवं हि सर्वे दिवसाः विषुवन्तमभिसन्तता भवन्ति । तत्र च त्रयस्त्रिंशिनाम साम भवति ॥

---

* ब्रा. १-४-१.

श्रमुप यन्ति । यदेवम् । [9]यो ह खलु वाव प्रजापतिः । स उ वेवेन्द्रः । तदु देवेभ्यो नयन्ति ॥ ३२ ॥

कार्यां विराड्गृह्यन्ते पवमाने भवतीन्द्र एकं च ॥ २ ॥

[1]संततिर्वा एते ग्रहाः । यत्परस्सामानः । [2]विषुवान्दिवाकीर्त्यम् । यथा शालायै पक्षसी । एवꣳ संवथ्सरस्य पक्षसी । यदेतेन गृह्येरन् । विषूची सं-

[9]यो हेत्यादि ॥ यः खलु अयं संवत्सरात्मा प्रजापतिः स एवेन्द्रः देवेश्वरो भवति । तस्मादेव कारणात् देवेभ्यः त्रयस्त्रिंशत्सङ्ख्येभ्यो नयन्ति तेषां प्रीतये यागं कुर्वन्ति ॥

इति द्वितीयोऽनुवाकः.



[1]सन्ततिर्वा इत्यादि ॥ सन्ततिः सन्तननम् । तादर्थ्यात्ताच्छब्द्यम् । पूर्वोत्तरयोः पक्षयोर्विषुवति सन्तानार्था एते ग्रहाः ये परस्सामानः, तास्थ्यात्ताच्छब्द्यं 'मञ्चाः क्रोशन्ति' इतिवत् । परस्सामदिवसेषु गृह्यमाणा अतिग्राह्याः ग्रहाः ते सन्तननार्थाः सन्ततरज्जुस्थानीया इति । ग्रहरूपत्वात् दिवाकीर्त्यं यदहः तत् विषूवान् विष्वङ्माना पक्षद्वयावलम्बिनी स्थितिरस्येति विषुवान्

वथ्सरस्य पक्षसी व्यवस्रꣳसेयाताम् । आर्तिमा-र्छेयुः । यदेते गृह्यन्ते । यथा शालायै पक्षसी मध्यमं वꣳशमभि संमायच्छति ॥ ३३ ॥ एवꣳ संवथ्सर-स्य पक्षसी दिवाकीर्त्यमभि संतन्वन्ति । नार्तिमा-र्छन्ति । [2]एकविꣳशमहर्भवति । शुक्राग्रा ग्रहा गृ-

---

वंशकाष्ठस्थानीयो दिवसो मध्यमः, एतेन सन्तत्यपेक्षा दर्शिता। इदानीं तामेव सन्ततिं दर्शयितुं सन्तन्यमानं दर्शयाति—यथेति। शालायाः पक्षाविव पक्षस्थानीयौ संवत्सरस्य पक्षौ तत्र यद्याति-ग्राह्याः सन्तननरज्जुस्थानीया न गृह्णेरन् ततो विषूची विष्व-ग्गमने संवत्सरस्य पक्षसी व्यवस्रंसेयातां भिन्नदिक्के पतिते स्याताम् । ततश्च आर्तिं गच्छेयुः यजमानाः कर्मनाशात् । एषां तु ग्रहणे शालायाः पक्षौ मध्यमं वंशमभिसमायच्छाति लौकिक इव । संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसन्तन्वन्ति आभिमुख्येनानीय आबध्नन्ति वंश इव दिवाकीर्त्ये सत्रिणः। ततो नार्तिं गच्छन्ति ॥

[2]एतच्च अहरेकविंशं एकविंशस्तोमकं भवति । प्रत्युत्तब्ध्यै प्रत्युत्तम्भनाय वंशकाष्ठस्थानीयस्य उच्छ्रितावस्थानाय प्रतिष्ठात्वा-देकविंशस्य । शुक्राग्रा ग्रहा गृह्यन्ते सयत्वाय संश्लिष्यमाणत्वाय स्थाने शुक्रप्राधान्यात् संजज्ञानेरबन्धता[1]? यथा स्यादिति । उ-

---

[1]संजज्ञातेरबन्धता [सम्यग्जनितबन्धता ?].

ह्यन्ते । प्रत्युत्तब्ध्यै सयत्वाय । सौर्यं एतदहः पशु-रालभ्यते । सौर्योऽतिग्राह्यो गृह्यते । अहरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । [3]स-प्तैतदहरतिग्राह्या गृह्यन्ते ॥ ३४ ॥ सप्त वै शीर्-षण्याः प्राणाः । असावादित्यश्शिरः प्रजानाम् । शीर्षन्नेव प्रजानां प्राणान्दधाति । तस्मात्सप्त शीर्षन्प्राणाः । [4]इन्द्रो वृत्रꣳ हत्वा । असुरान्परा-

---

त्तानास्यः सयः; षिञ् बन्धने पचाद्यजन्तात् भावप्रत्ययः । सौर्ये इत्यादि । पश्वतिग्राह्ययोस्सौर्यत्वेन सूर्यसम्बन्धादह्नो रूपसमृद्धि-र्भवति । दिवाकीर्त्यत्वं समृद्धं भवति । उभयत्रापि छान्द-समन्तस्वरितत्वम् ॥ अथो अपिच एषोऽह्नो बलिर्ह्रियते पूजा क्रियते, योऽयं सप्तमः सौर्योऽतिग्राह्यः ॥

[3]अस्मिन् अह्नि सप्तातिग्राह्या गृह्यन्ते ये परस्सामसम्बन्धिनः त्रयः पूर्वे त्रय उत्तरे तेषां मध्ये सौर्य इति सप्तास्मिन्नह्नि गृ-ह्यन्ते । सप्त वा इत्यादि । द्वे चक्षुषी द्वे श्रोत्रे द्वे नासिके एकमास्यमिति । आदित्यश्शिरस्थानीयः प्रजानामुच्छ्रितत्वात्; एकविंशश्च ज्योतिः तेषां स्तोमानामुच्छ्रितः । तस्मादेकविंशे दि-वाकीर्त्ये सप्तातिग्राह्यग्रहणात् प्रजानां शिरसि सप्त प्राणान् दधाति स्थापयति अत एव शिरसि सप्त प्राणाः ॥

भाव्यं । स इमान्लोकानभ्यंजयत् । तस्यासौ लोकोऽनंभिजित आसीत् । तं विश्वकंर्मा भूत्वाऽ-भ्यंजयत् । यद्वैश्वकर्मणो गृह्यतें ॥ ३५ ॥ सुवर्ग-स्यं लोकस्याभिजित्यै । [5]प्र वा एतेऽस्माल्लोका-च्यंवन्ते । ये वैश्वकर्मणं गृह्णतें । आदित्यश्चो गृं-ह्यते । इयं वा अदितिः । अस्यामेव प्रतिं तिष्ठ-न्ति । अन्योन्यो गृह्येते । विश्वान्येवान्येन कर्माणि कुर्वाणा यंन्ति । अस्यामन्येन प्रतिं तिष्ठन्ति ।

---

[4]इन्द्रो वृत्रं हत्वेत्यादि ॥ गतम् । पराभाव्य पराभूतान् जितान् कृत्वा । असौ लोको द्युलोकः । अस्मिन्नाह्नि वैश्व-कर्मणस्य ग्रहणं स्वर्गस्याभिजित्यै भवति ॥

[5]प्रवा इत्यादि ॥ अस्माल्लोकात् भूलोकात् । उत्तरेद्युरदि-तिदेवत्यस्य ग्रहणात् पुनरस्यां प्रतिष्ठा भवति । अन्योन्य इ-त्यादि । अन्यो वा कदाचिद्वैश्वकर्मणादित्यौ पृथक् गृह्येते न सह । तत्र अन्येन वैश्वकर्मणेन विश्वानि कर्माणि स्वर्गा-द्यभिजयसाधनानि कुर्वाणा यन्ति कर्मसमाप्तिं गच्छन्ति । अ-न्येन आदित्येन अस्यां प्रतितिष्ठन्ति । 'क्रियासमभिहारे सर्व-नाम्नो द्वे भवतस्समासवच्च बहुलम्' इति द्विर्वचनं समासश्च । 'अनुदात्तं च' इति द्वितीयं निहन्यते ॥

[6]तावाऽपराधाथ्संवथ्सरस्यान्योन्यो गृह्येते । तावुभौ सह महाव्रते गृह्येते । यज्ञस्यैवान्तं गत्वा । उभयोर्लोकयोः प्रति तिष्ठन्ति । अर्क्यमुक्थं भवति । अन्नाद्यस्यावरुध्यै ॥ ३६ ॥

समायच्छेत्यतिग्राह्या गृह्यन्ते गृह्यते संवथ्सरस्यान्योन्यो गृह्येते पञ्च च ॥ ३ ॥

[1]एकविंशश एष भवति । एतेन वै देवा एकविंशेन । आदित्यमित उत्तमꣳ सुवर्गं लोकमा-

---

[6]तावित्यादि ॥ तौ वैश्वकर्मणादित्यौ संवत्सरस्य आपराधात् आ अपरपक्षसमाप्तेः प्रत्यहं अन्योन्यः एकैको गृह्यते । अथ महाव्रते उपांत्येऽह्नि तौ सह गृह्येते । अन्तं गत्वेति । समाप्तप्रायत्वात् । उभयोरिति । उत्तरयोर्वैश्वकर्मणादित्ययोः सहग्रहणात् । अर्क्यमिति । शस्त्रविशेषः । अन्नाद्यस्येति । 'अर्को वै देवानामन्नम्'* इति तद्धेतुत्वाच्च ॥

इति द्वितीये तृतीयोऽनुवाकः.

---

[1]एकविंश इत्यादि ॥ एष वक्ष्यमाणो विषुवान् एकविंशः । एकविंशस्तोमकः । एतेन वा इत्यादि । गतम् । स वा इत्यादि ।

---

* ब्रा. १-१-८,

रोहयन्न् । स वा एष इत एकविꣳशः । तस्य द-
शावस्तादहानि । दश परस्तात् । स वा एष वि-
राज्युभयतः प्रतिष्ठितः । [2]विराजि हि वा एष उ-
भयतः प्रतिष्ठितः । तस्मादन्तरेमौ लोकौ यन्न् ।
सर्वेषु सुवर्गेषु लोकेष्वभितपन्नेति ॥ ३७ ॥ देवा
वा आदित्यस्य सुवर्गस्य लोकस्य । पराचोऽति-
पादादबिभयुः । तं छन्दोभिरदृꣳहन्धृत्यै । [3]देवा

स एष वक्ष्यमाण इतोपि हेतोः एकविंशः, तस्य दशावस्तादहानि परस्ताच्च दश अहानि । सः अयं मध्ये पृष्ठवंशस्थानीय उभयतः अवस्तात् परस्ताच्च विराजि प्रातिष्ठितः । कथं? पृष्ठ्यः षळहः, विश्वजित्, त्रयः परस्सामानः विषुवान्, परतो व्यावृत्तास्त्रयः परस्सामानः, अभिजित्, पृष्ठ्यः षडह आवृत्त इति ॥

[2]विराजि हीत्यादि ॥ एष खल्वादित्योपि हि विराज्युभयतः प्रतिष्ठितः अवस्तात् पञ्चशतानि रश्मयः परस्ताच्च पञ्चशतानि मध्ये विराजि प्रतिष्ठितो भवति । यद्वा—प्रधानभूतैर्दशभिः रश्मिभिः अवस्तात्परस्ताच्च उभयतः प्रतितिष्ठतीति । तस्मादित्यादि । ऊर्ध्वमतिगमनात् देवा अबिभयुः । तत्परिहाराय तं आदित्यं छन्दोभिः गायत्र्यादिभिः सावनैः अदृंहन् स्तम्भितवन्तः रज्जुभिर्बद्धमिवाकुर्वन् । तस्माद्धृत्यै भवन्ति छन्दांसि ॥

वा आदित्यस्य सुवर्गस्य लोकस्य । अवाचोऽव-पादादबिभयुः । तं पञ्चभी रश्मिभिरुदवयन् । त-स्मादेकविꣳशेऽहन्पञ्च दिवाकीर्त्यानि क्रियन्ते । र-श्मयो वै दिवाकीर्त्यानि । ये गायत्रे । ते गायत्री-षूत्तरयोः पवमानयोः ॥ ३८ ॥ महादिवाकीर्त्यꣳ होतुः पृष्ठम् । विकर्णं ब्रह्मसामम् । भासोऽग्निष्टो-मः । [4]अथैतानि पराणि । परैर्वै देवा आदित्यꣳ

---

[3]देवा वा इत्यादि ॥ अवाचोऽवपादात् अधस्तात् न्यक्पतनात् अबिभयुः । तत्परिहाराय पञ्चभी रश्मिभिरादित्यं उदवयन् ऊर्ध्वमुत्तम्भितवन्तः ऊर्ध्वमिवाकुर्वन् । तस्मादेकविंशेऽह्नि विषुवति पञ्च दिवाकीर्त्यनामानि क्रियन्ते । रश्मिस्थानीयानि हि दि-वाकीर्त्यानि सामानि । तत्र ये भ्राजाभ्राजे नाम दिवा-कीर्त्ये गायत्रे प्रातस्सवने ते एव उत्तरयोः पवमानयोः म-ध्यन्दिने आर्भवे च कार्ये । विशेषस्तु सावनच्छन्दो हित्वा गा-यत्रीष्वेव कार्ये । अथ माध्यन्दिनं महादिवाकीर्त्यं नाम हो-तुः पृष्ठं पृष्ठानां प्रथमम् । तत्रैव विकर्णं नाम ब्रह्मसामं कार्यं पृष्ठानां तृतीयं ब्रह्मणः साम ब्रह्मसामम् । 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः । अथ तृतीयसवने भासो नाम अग्नि-ष्टोमसाम कार्यः ॥

[4]एवं विषुवत्तं विधाय तमभितः स्थितानां परस्सान्नां पुन-

सुवर्गं लोकमपारयन् । यदपारयन् । तत्पराणां परत्वम् । पारयन्त्येनं पराणि । य एवं वेद । [5]अथैतानि स्पराणि । स्परैर्वै देवा आदित्यꣳ सुवर्गं लोकमस्पारयन् । यदस्पारयन् । तथ्स्पराणाꣳ स्परत्वम् । स्पारयन्त्येनꣳ स्पराणि । य एवं वेद ॥

एति पवमानयोस्स्पराणि पञ्च च ॥ ४ ॥

---

स्तुतिर्नाम च क्रियते—अथेत्यादि ॥ अपारयन् स्वर्गलोकस्थानीयमादित्यं पूर्तिमगमयन् । पृ पालनपूरणयोः । यद्वा—पृ प्रीतौ । आदित्यमप्रीणयन् । तस्मात् पराणां परस्साम्नां परत्वम् । ऋदोरप्, पचाद्यच् वा । वृषादिर्द्रष्टव्यः । पराणि आदित्यं पारयन्ति पूरयन्ति प्रीणयन्ति वा । तैस्तं पारयन्ति देवाः । अथ य एवं वेद पराणां परत्वं एनं वेदितारं पराणि पारयन्ति प्रतिष्ठितैश्वर्यं कुर्वन्ति । परैरिति कर्तरि तृतीया न हेतौ, पारयन्त्येनं पराणीति कर्तृत्वदर्शनात् ॥

[5]अथेत्यादि ॥ स्पृ प्रीतिचलनयोः । समानमन्यत् । एवं परस्परात्मकं नामद्वयं परस्साम्नां दर्शितम् ॥

इति द्वितीये चतुर्थोऽनुवाकः.

[1]अप्रतिष्ठां वा एते गच्छन्ति । येषाꣳ संवथ्सरेऽनाप्तेऽर्थं । एकादशिन्याप्यते । वैष्णवं वामनमालभन्ते । यज्ञो वै विष्णुः । यज्ञमेवालभन्ते प्रतिष्ठित्यै । ऐन्द्राग्नमालभन्ते । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । ते एवालभन्ते ॥ ४० ॥ [2]वैश्वदेवमालभन्ते । देवता एवावरुन्धते । द्यावापृथिव्यां धेनुमालभन्ते । द्यावापृथिव्योरेव प्रति तिष्ठन्ति । वायव्यं वथ्समाल-

---

[1]अप्रतिष्ठां वा इत्यादि ॥ प्रतिष्ठां एते न गच्छन्ति येषां संवत्सरे अनाप्ते असमाप्ते एकादशिनी आप्यते । तथा हि—प्रत्यहमेकैकस्मिन् पशावालभ्यमाने एकषष्ट्यधिकशतत्रयप्रमितेष्वहस्सु द्वात्रिंशदेकादशिन्यो लभ्यन्ते, अथ नवाहानि परिशिष्टानि लभ्यन्ते । स यः [तद्यः] साधनत्वेन स्वीकरोति स [तस्य तद्] प्रतिष्ठित्यै भवति । अथ ऐन्द्राग्नेन द्वितीयेन अगतसारदेवतालाभः । इन्द्राग्निशब्दे 'देवताद्वन्द्वे च' इति प्राप्तस्य पूर्वोत्तरयोर्युगपत्प्रकृतिस्वरत्वस्य 'नोत्तरपदेऽनुदात्तादौ' इति निषेधे समासान्तोदात्तत्वमेव । अयातयाम्नी इति । 'अन उपधालोपिनः' इति ङीप् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥

[2]वैश्वदेवेन तृतीयेन सर्वदेवतालाभः । द्यावापृथिव्यया चतुर्थ्या द्यावापृथिव्योः प्रतिष्ठितो भवति । वायव्येन पञ्चमेन वायुः

भन्ते । वायुरेवैभ्यो यथाऽऽयतनाद्देवता अवरुन्धे । आदित्यामविं वशामालभन्ते । इयं वा अदितिः । अस्यामेव प्रति तिष्ठन्ति । मैत्रावरुणीमालभन्ते ॥ ४१ ॥ मित्रेणैव यज्ञस्य स्विष्टꣳ शमयन्ति । वरुणेन दुरिष्टम् । प्राजापत्यं तूपरं महाव्रत आलभन्ते । प्राजापत्योऽतिग्राह्यो गृह्यते । अहं रेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । आ-

स्वयं एवैभ्यो यजमानेभ्यस्सत्रिभ्यः स्वात् आयतनात् देवता आत्मीयत्वेन लभते वशीकरोति । आदित्यया षष्ठ्या पृथिव्यां प्रतिष्ठिता भवन्ति । मैत्रावरुण्या सप्तम्या यज्ञस्य स्विष्टं शोभनमिष्टं शमयन्ति ,सुखहेतुमेव कुर्वन्ति । दुरिष्टं च शमयन्ति निवृत्तोपप्लवं कुर्वन्ति । प्राजापत्येनाष्टमेन तूपरेण शृङ्गरहितेन प्राजापत्येन चातिग्राह्येण ऐन्द्रं महाव्रतं अहः रूपसमृद्धं कुर्वन्ति 'यो ह खलु वाव प्रजापतिः । स उ वेवेन्द्रः '* इति । अथो अपिच अह्नोऽयं बलिः पूजा यदत्र प्राजापत्ययोरनयोः प्रयोग इति। आग्नेयेन नवमेन प्रतिप्रज्ञानं प्रत्येकं सर्वार्थविषयं प्रज्ञानं प्रकृष्टं ज्ञानं प्रकाशो भवति ॥

[3]अजपेत्वानित्यादि ॥ अजाश्च पेत्वाश्च अजपेत्वाः । गलितमुष्काः पेत्वाः । एते सत्रिणः पूर्वैः एकादशिनैः मासैः अजपेत्वाने-

* आ. १-३-२.

ग्रैयमालंभन्ते प्रति प्रज्ञात्यै । [3]अजपेत्वान् वा एते पूर्वैर्मासैरवरुन्धते । यदेते गव्याः पशव आलभ्यन्ते । उभयेषां पशूनामवरुध्यै ॥ ४२ ॥ [4]यदतिरिक्तामेकादशिनीमालभेरन् । अप्रियं भ्रातृव्यमभ्यतिरिच्येत । यद्द्वौद्वौ पशू समस्येयुः । कनीय आयुः कुर्वीरन् । यदेते ब्राह्मणवन्तः पशव आ-

वालभन्ते, न गवादीन् । अथ यदेते अनन्तरोक्ता गव्याः गोभिर्धेनुवत्समैत्रावरुणीभिः सहिताः पशव आलभ्यन्ते तत् उभयेषां गवादीनामजादीनां च पशूनां लाभाय भवति । तस्मादेतेषु नवस्वहस्सु एतानालभेरन्निति ॥

[4]यदतिरिक्तामित्यादि ॥ इदानीं ब्राह्मणवतां पशूनां प्रकारान्तरेण स्तुतिः क्रियते—संवत्सरमतीत्यावस्थानमतिरेकः त्र्यहातिक्रमः । तत्र यद्येकादशिनीं तामेव त्रिभिरहोभिः अतिरिक्तां नवाहार्थं पुनः आलभेरन् तथा सति दिनातिरेकेण अप्रियस्य भ्रातृव्यस्याभिवृद्धिः स्यात् । यदि द्वयोर्दिनयोः द्वौद्वौ पशू समस्येयुः तदा कनीयः अल्पतरमात्मीयं अयुः कुर्वीरन् । तस्मादु-

लभ्यन्ते । नाप्रियं भ्रातृव्यमभ्यतिरिच्यते । न कनीय आयुः कुर्वते ॥ ४३ ॥

ते एवालंभन्ते मैत्रावरुणीमालंभ-
न्तेऽवरुध्यै सप्त च ॥ ५ ॥

[1]प्रजापतिः प्रजास्सृष्ट्वा वृत्तोऽशयत् । तं देवा भूतानाꣳ रसं तेजस्संभृत्य । तेनैनमभिषज्यन् । महानववर्तीति । तन्महाव्रतस्य महाव्रतत्वम् ।

---

भयदोषपरिहारार्थं एतान् ब्राह्मणवतः अनन्तरब्राह्मणोक्तान् नवैव पशूनालभेरन्निति विधिः ॥

इति पञ्चमोऽनुवाकः.

---

[1]प्रजापतिरित्यादि ॥ प्रजासृष्ट्यनन्तरं प्रजापतिर्वृत्तः उपरतव्यापारः श्रान्तः अशयत् अशेत । शेतेर्व्यत्ययेन परस्मैपदम्, विकरणव्यत्ययेन शप । अथ देवास्तं तथाविधं एनं प्रजापतिं भूतानां पृथिव्यादीनां रसं सारभूतं तेजः सम्भृत्य तेनाभिषज्यन् भिषजितवन्तः श्रमनिवृत्तिं कृतवन्तः । भिषज्यतिः कण्ड्वादिः । उक्तवन्तश्च तदानीं देवा अयमिदानीं प्रजापतिः महानववर्ति महान् सम्पन्न इति । यस्मिन्नहि तथाकृतं देवैः तदहर्महाव्रतमिति महान्वृत्तोऽस्मिन् प्रजापतिरिति महाव्रतम् । वृतेः

महद्व्रतमिति । तन्महाव्रतस्य महाव्रतत्वम् । महतो व्रतमिति । तन्महाव्रतस्य महाव्रतत्वम् । [2]पञ्चविꣳशस्स्तोमो भवति ॥ ४४ ॥ चतुर्विꣳशत्यर्धमासस्संवथ्सरः । यद्वा एतस्मिन्थ्संवथ्सरेऽधि प्राजायत । तदन्नं पञ्चविꣳशमभवत् । मध्यतः

'घञर्थे कविधानम्' इति कः, धातोरमागमश्छान्दसः । वर्तयतेः कर्मणि लुङि चिणादेशे छान्दसे द्विर्वचने अववर्तीति भवति । महदिति । प्रजापतेरतिमहत्त्वहेतुत्वात् महत् इदं व्रतं कर्म इति महाव्रतम् । महत इति । महतः प्रजापतेरभ्युदयसाधनं व्रतं कर्म इति महाव्रतम् । छान्दसमात्वम् ॥

[2]पञ्चविंश इति ॥ सर्वस्तोमः पञ्चविंशो भवति पञ्चविंशतिस्तोत्रीयः पञ्चविंशः । 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति डः, 'तिविंशतेर्डिति' इति तिलोपः । अथ पञ्चविंशस्य स्तुतिः— संवत्सरस्य चतुर्विंशतिरर्धमासा अवयवाः । यच्चास्मिन् संवत्सरे उपपद्यते उत्पद्यते अन्नं तत्पञ्चविंशम् । पञ्चविंशतेः पूरणं, 'तस्य पूरणे डट्' । तस्मात् पञ्चविंशेन स्तोमेन संवत्सरस्यान्नस्य च वशीकार इति भावः । मध्यत इति । अन्तिममहरपेक्ष्य यन्मध्यत्वमस्य तत् स्तूयते—मध्यतो हीति । यत् मध्यतस्साम्प्रतिकं अशितं भक्तमन्नादि बहु नात्यल्पं तदेव धिनोति प्रीणयति, मध्यतः शरीरे प्रविष्टं वा धिनोति । यद्वा मध्यमे वयसि अन्नमेवाशितं धिनोति नार्यपक्षराशिविता । [नान्यः क्षीरादिरशितः?]

क्रियते । मध्यतो ह्यन्नमशितं धिनोति । अथो मध्यत एव प्रजानामूर्ग्धीयते । अथ यद्वा इदमन्ततः क्रियते । तस्मादुदन्ते प्रजास्समेधन्ते । अन्ततः क्रियते प्रजननायैव । [3]त्रिवृच्छिरो भवति ॥ ४५ ॥ त्रेधा विहितꣳहि शिरः । लोम छवीरस्थि । परां-

'आद्यादिभ्यस्तसिः' इति तसिप्रत्ययः । अथो अपिच तस्मादेव कारणात् प्रजानां शरीरे मध्यतः मध्यप्रदेशे एवोर्क् अन्नं धीयते स्थाप्यते न पर्यन्ते । अथेत्यादि । अथ अस्यापरमपि प्रमाणं ब्रूमः, यत् यस्मात् इदं अहः अन्ततः अन्ते क्रियते । दशरात्रापेक्षमन्तत्वम् । तस्मादुदन्ते उदकान्ते उदकमर्यादासु वर्तमानाः प्रजास्समेधन्ते सम्यक्प्रवर्धन्ते । उदकस्य उद्भावश्छान्दसः, शकन्ध्वादित्वात्पररूपत्वम् । यद्वा—उदन्ते वर्षान्ते सति वर्ष इति यावत् उन्दनं उत् वृष्टिः । उन्दी क्लेदने । यद्वा—उद् अन्नं तस्य रेतसो निषेकषिक्तस्यान्ते प्रजास्समेधन्ते । किञ्च—यस्मात् इदमहः अन्ततः क्रियते तत् प्रजानां प्रजननाय भवति, अस्य समुदायान्तर्गतत्वात् गर्भात् प्रजा निर्गच्छन्ति ॥

[3]त्रिवृदित्यादि ॥ इदानीं महाव्रतस्तोमस्तुतिः क्रियते । तदर्थमह्नः पाक्षित्वेन रूपणा क्रियते । त्रिवृत् स्तोमोऽस्य शिरो भवति । त्र्यवयवास्तिस्रो वृतयोऽस्येति त्रिवृत्, त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । त्रेधा विहितं हि त्रिप्रकारं निर्मितं शिरो भवति, कथं?

चा स्तुवन्ति । तस्मात्तच्छिरः सदृगेव । [4]न मेद्यतोऽनु मेद्यति । न कृश्यतोऽनु कृश्यति । [5]पञ्चदशोऽन्यः पक्षो भवति । सप्तदशोऽन्यः । तस्माद्वयाꣳस्य-

लोमानि केशाः छविस्त्वक् आस्थि चेति त्रिभिरेतैश्शिरो भवति । पराचेति तेन त्रिवृता पराचा अनावृत्तेन स्तुवन्ति । तस्मात्तत् शिरः सदृगेव भवति एकप्रकारमनावृत्तस्वभावम् । सकृदेवेति शाखान्तरेऽधीयते । परापूर्वादञ्चतेः ऋत्विगादिना क्विनि 'अनिगन्तोऽञ्चतावप्रत्यये' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]इदानीं त्रिवृतः पराक्त्वमेव समर्थयते—न मेद्यत इत्यादि ॥ तदर्थं च यदुक्तं तस्मात्तत्सदृगेवेति तत्रानावृत्तिमेव द्रढयति । तथा हि—तच्छिरः अनावृत्तमेव सर्वदा भवति मेद्यतः स्थूलीभवतोपि शरीरस्यानुसारेण स्वयं न अनुमेद्यति न स्थूलीभवति । न च कृश्यतः ह्रसतः शरीरस्यानुसारेण स्वयं कृश्यति ह्रसति सर्वदा एकस्वभावमेव भवतीति । एवं त्रिवृदपि स्तोत्रीयः न वृद्धिं गच्छति न च हानिं प्राप्नोतीति । ञि मिदा स्नेहने. दैवादिकः 'मिदेर्गुणः' । कृश तनूकरणे दैवादिक एव ॥

[5]पञ्चदश इत्यादि ॥ एकः पक्षः पञ्चदशो भवति । सप्तदशोऽन्यः । तस्मात् वयांसि पक्षिणोऽन्यतरदेहार्थं अभिपर्यावर्तन्ते अन्यतरार्थाभिपर्यावृत्तशरीरा एव पतन्ति । हेतुमाह—अन्यतरेण हि पक्षेण तत् महाव्रतपक्षिशरीरं गरीयः गुरुतरं क्रियते । सप्तदशत्वादेकस्य पञ्चदशत्वादितरस्य पञ्चविंश आत्मा शरीरं

न्यतरमर्धमभि पर्यावर्तन्ते । अन्यतरतो हि तद्गरीयः क्रियते ॥ ४६ ॥ पञ्चविꣳश आत्मा भवति। तस्मान्मध्यतः पशवो वरिष्ठाः । एकविꣳशं पुच्छम् । द्विपदासु स्तुवन्ति प्रतिष्ठित्यै । सर्वेण सह स्तुवन्ति । सर्वेण ह्यात्मनाऽऽत्मन्वी । सहोत्पतन्ति । एकैकामुच्छिꣳषन्ति । आत्मन्न् ह्यङ्गानि

---

भवति । तस्मात् सर्वेऽपि पशवो मध्यतो वरिष्ठा उरुतमाः । एकविंशं पुच्छं स्तुवन्ति, कथं द्विपदासु ऋक्षु स्तुवन्ति प्रतिष्ठित्यै भवति द्वाभ्यां पद्भ्यां प्रतिष्ठा भवतीति । द्वौ पादावासामिति द्विपद्याः 'सङ्ख्यासुपूर्वस्य' इति लोपस्समासान्तः, 'टावृचि' इति टाप् 'पादः पत्' इति पद्भावः 'द्वित्रिभ्याम्' 'पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । सर्वेणेति सर्वेण त्रिवृदादिना सर्वेऽपि सह स्तुवन्ति न पर्यायेण न चैकैकः । हेतुमाह—सर्वेण हि अवयवेन सह पुरुष आत्मन्वी आत्मवान् भवति शरीरवान् भवति । 'बहुलं छन्दसि' इति विनिः । 'अनो नुट्' । अत एव हेतोः सह एव सर्वे उत्पतन्ति उत्तिष्ठन्ति । यस्यात्स्याः स्तोत्रियाः सोपि तावदास्ते यावदितरेषां समाप्तिः । पक्षित्वनिरूपणाभिप्रायेण उत्पतन्तीत्युक्तम् ॥

एकैकामिति ॥ सर्वेऽपि एकैकां स्तोत्रियां उच्छिषन्ति अविनियुक्तां स्थापयन्ति । हेतुमाह—आत्मनि शरीरे हि अङ्गानि पक्षादीनि सर्वोपयोगे हीनाङ्गता स्यात्तस्मादेकैकोच्छेषणेन यथास्था-

बुद्धानि । न वा एतेन सर्वः पुरुषः ॥ ४७ ॥ यदितइतो लोमानि दतो नखान् । परिमादः क्रियन्ते। तान्येव तेन प्रत्युप्यन्ते । [7]औदुम्बरस्तल्पो भवति। ऊर्ग्वा अन्नमुदुम्बरः । ऊर्ज एवान्नाद्यस्यावरुध्यै ।

---

नस्थिताङ्गं शरीरं भवतीति । एतद्दूषयति—न वा इत्यादि । न खलु एतेन एतावन्मात्रेण वक्ष्यमाणेन सर्वः परिपूर्णः पुरुषो भवति । केनेत्याह—यदिति । लोमादिकं इतइतः अर्वाक् तद्वर्जयित्वा यदन्यत् वर्जनार्थो निपातः । यद्वा—इतइतोऽङ्गात् यदाकिञ्चिल्लोमादिकमुच्छिंषति तस्मादेकैकोच्छेषणेन न परिपूर्णता पुरुषस्येति । केचिदाहुः—न खल्वेतेन उक्तेन शिरःपक्षपुच्छेन सर्वः पुरुषो भवति नैतावता पुरुषस्य समाप्तिः । कुत इत्याह—यस्मादयं लोमान्यपि अध्रुवाणि इतइतः सर्वत्र शरीराङ्गतः प्राप्तवान् तस्मात् सर्वार्थाः परिमादः परिमादनानि क्रियन्ते । परितो मादयन्तीति परिमादः, ण्यन्तात् क्विप् । तेन परिमादेन तानि अपि लोमादीनि प्रत्युप्यन्ते पुरुषे उपयुक्तान्यपि पुनर्निरुप्याणि भवन्ति लोमादीन्यपि प्रत्युप्तानि भवन्ति । प्रत्येकं स्वस्थाने उप्तानि भवन्ति । ततस्सर्वः पुरुषो भवति ॥

[7]औदुम्बर इत्यादि ॥ उदुम्बरस्य विकारः औदुम्बरः । 'अनुदात्तादेश्च' इत्यञ् । तल्पः आसन्दी तमारुह्योद्गातोद्गायेत् । ऊर्ग्वा इत्यादि । गतम् । यस्येत्यादि । तल्पे सदनं तल्पसद्यं महाव्रते । सदेः भावे छान्दसो यत् । यस्य उद्गातुः तल्प-

यस्यं तल्पसद्यमनभिजितꣳ स्यात् । स देवानाꣳ साम्यक्षे । तल्पसद्यमभिजयानीति तल्पमारुह्योद्गायेत् । तल्पसद्यमेवाभिजयति ॥ ४८ ॥ [8]यस्यं तल्पसद्यमभिजितꣳ स्यात् । स देवानाꣳ साम्यक्षे । तल्पसद्यं मा पराजेषीति तल्पमारुह्योद्गायेत् । न तल्पसद्यं पराजयते । [9]प्रेङ्खे शꣳसति । महो वै

सद्यं अनभिजितं 'न लोकाव्यय' इति व्यत्ययेन न प्रवर्तते स इत्थमाशासानः तल्पमारुह्योद्गायेत् कथं? देवानां साम्यक्षे समक्षे तल्पसद्यं तल्पसदनार्हत्वं अभि आभिमुख्येन जयानि लिप्सीयेति । ततोऽयं तल्पसद्यमभिजयत्येव ॥

[8]यस्येत्यादि ॥ गतम् । चातुर्वर्ण्यादित्वात् ष्यञि सामक्ष्यमिति वक्तव्ये व्यत्ययेन मध्ये तद्धितः । यद्वा—सामीत्यर्थस्य नाम, साम्यक्षमपरिपूर्णदृष्टिः कटाक्षलाभः । तस्मिन् सति तल्लाभेन मा पराजेषि तल्पसद्यात् पराजितो माभूवमिति प्रार्थयमान उद्गायेत् । न कदाचित्तल्पसद्यात् पराजितो भवति । जयतेर्लुङि 'विपराभ्यां जेः' इत्यात्मनेपदं, 'पराजेरसोढ' इति अपादानत्वं व्यत्ययेन न प्रवर्तते ॥

[9]प्लेङ्ख इति ॥ प्लेङ्खः डोला तामारुह्य होता शंसति । महो वा इत्यादि । महः ओजः तद्धेतुत्वात्तच्छब्दयम् ॥

प्रेड्खः । महस एवान्नाद्यस्यावरुद्ध्यै । [10]देवासुरास्सं-यत्ता आसन् । त आदित्ये व्यायच्छन्त । तं देवा-स्समजयन् ॥ ४१ ॥ ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते । दैव्यो वै वर्णो ब्राह्मणः । असुर्यश्शूद्रः । इमेऽरात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात् । इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः । यदेवै-

[10]देवासुरा इत्यादि ॥ आदित्ये आदित्यनिमित्तं अयमस्माकमस्तु अयमस्माकमिति व्यायच्छन्त व्यायामं कलहमकुर्वत ॥ 'आङो यमहनः' इत्यात्मनेपदम् । तं देवास्समजयन् जित्वा लब्धवन्तः । तस्मात् ब्राह्मणश्च शूद्रश्च चर्मकर्ते चर्मखण्डनिमित्तं व्यायच्छेते कलहायेते । कृत्यत इति कर्ता । कृती छेदने कर्मणि घञ् देवानां स्वभूतो दैव्यः । 'देवाद्यञञौ' इति यञ् । असुराणां स्व असुर्यः । 'असुरस्य स्वम्' इति यत् । तस्माद्देवासुरस्थानीयाविमौ व्यायच्छेते इति । इमेऽरात्सुरित्यादि । इमे सत्रिणः अरात्सुः ऋद्धा अभूवन् । यत एव इमे सुभूतं सुभिक्षं शोभनान्नं अक्रन् अकार्षुः अत एव इमेऽरात्सुरिति । अक्रन्निति कृञो लुङि 'मन्त्रे घस' इति च्लेर्लुक् । इति एवं अन्यतरो ब्राह्मणो ब्रूयात् प्रशंसेत् । अथ अन्यतरः शूद्रजातीयः इमे उद्वासीकारिणः उद्वासनमुद्वासिः 'इजादिभ्यः' इतीन्प्रत्ययः । तस्य कर्तारः प्रजानां स्वदेशादुद्वासयितारः । छान्दसं दीर्घत्वम् । यत एव इमे दुर्भूतं

षाᳬ सुकृतं या राद्धिः । तदन्यतरोऽभिश्रीणाति । यदेवैषां दुष्कृतं याऽराद्धिः । तदन्यतरोऽपहन्ति । ब्राह्मणस्सं जयति । अमुमेवादित्यं भ्रातृव्यस्य सं विन्दन्ते ॥ ५० ॥

भवति भवति क्रियते पुरुषो जयत्यजयजयत्ये-
कं च ॥ ६ ॥

दुर्भिक्षं दुर्लभान्नं अक्रन् तस्मादिमे उद्वासीकारिण इत्यन्यतरः शूद्रो ब्रूयात् आक्रोशेत् । निरुदकादित्वात् सुभूतदुर्भूतयोरुत्तर-पदान्तोदात्तत्वम् । यद्वा—गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । यदेवैषामित्यादि । एषां सत्रिणां यत् सुकृतं सुष्ठु कृतं कर्म या च राद्धिः फलसिद्धिः तत् उभयमपि अन्यतरोऽभिश्रीणाति प्रशंसन् ब्राह्मणो लोकप आभिमुख्येन उत्पादयति । श्रीञ् पाके । अथ यदेषां दुष्कृतं दुष्टं कर्म या च अराद्धिः फलहानिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तत् उभयमपि अन्यतरः आक्रोशन् शूद्रः अपहन्ति नाशयति । तस्मात् सुकृतं परेण कीर्त्यमानं वर्धते । दुष्कृतं तु परेण कीर्त्यमानं विनश्यतीति । यथा—'उत मोपवदेयुः । उत मे पाप्मानमपहन्युः'* इति । तत्र ब्राह्मणस्सञ्जयति सम्यक् जेता भवति । तयोः एवं कृते सत्रिणः अमुमादित्यं संविन्दन्ते सम्यक् लभ-

*आ, २-३-९.

उद्धन्यमानं नवैतानि सन्ततिरेकविंशश एषोऽ-प्रतिष्ठां प्रजापतिर्वृत्तष्षट् ॥ ६ ॥

उद्धन्यमानꣳ शोचिष्केशोऽग्ने सपत्नानतिग्राह्या वैश्वदेवमालभन्ते पञ्चाशत् ॥ ५० ॥ हरिः ओम् ॥

## तृतीयप्रपाठकः.

हरिः ओम् ॥ [1]देवासुरास्संयत्ता आसन् । ते देवा विजयमुपयन्तः । अग्नीषोमयोस्तेजस्विनी-स्तनूस्सं न्यदधत । इदमु नो भविष्यति । यदि

---

न्ते । अपि च भ्रातृव्यस्य अपि सम्बन्धिनं लभन्ते । भ्रातृव्यसम्बन्धमादित्यस्य निवर्तयन्ति । तत आदित्यं संजयन्ति आत्मीयं कुर्वन्तीति ॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये तैत्तिरीयब्राह्मणभाष्ये प्रथमेऽष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः.

द्वितीयप्रपाठकस्समाप्तः.

---

तृतीयप्रश्नप्रारम्भः.

[1]देवासुरा इत्यादि ॥ अयमनुवाकः पुनराधेयशेषः आग्नेयं काण्डम् । देवासुराः संयत्ताः युद्धसंरब्धा आसन् । अथ ते देवा विजयं उपयन्तः प्राप्नुवन्तः अग्नीषोमयोस्तेजस्विनी-स्तनूस्सं न्यदधत सह निहितवन्तः । इदमिति सामान्यविवक्षया

नो जेष्यन्तीति । तेनाग्नीषोमावपाक्रामताम् । ते देवा विजित्य । अग्नीषोमावन्वैच्छन् । तेऽग्निमन्वविन्दन्नृतुषु संन्नम् । तस्य विभक्तीभिस्तेजस्विनीस्तनूरवारुन्धत ॥ १ ॥ ते सोममन्वविन्दन् । तमघ्नन् । तस्य यथाऽभिज्ञायं तनूर्व्यगृह्णत । [2]ते ग्रहा

---

नपुंसकत्वम् । यदि अपि नः अस्मानसुरा जेष्यन्ति इमास्तावत्तनव ऊर्जिता अस्माकमेव भविष्यन्तीति मन्यमानास्सं न्यदधत। अथ अग्नीषोमौ तेन शरीरलक्षणेन धनेन सह । लिङ्गवचनयोर्व्यत्ययो वा । ताभिस्तनूभिः सह अपाक्रामतां देवसकाशात् । अथ देवाः आत्मीयतनूजिघृक्षया असुरविजयानन्तरं अग्नीषोमावन्वैच्छन्, अमार्गन्त । अथ ऋतुषूत्सन्नं निलीय स्थितं अग्निमन्वविन्दन् अनुक्रमेण अलभन्त । अथ तस्य अग्नेस्सकाशादात्मीयाः तनूः* यथाऽभिज्ञायं ममेयं ममेयमिति यथाप्रत्यभिज्ञं यथास्वं व्यगृह्णत पृथक्त्वेनागृह्णत ॥

[2]ते ग्रहा इत्यादि ॥ गतम् ॥ एवं विदुष एव ग्रहा गृहीता भवन्ति, नान्यस्य गृहीता अपि भवन्ति, दूरे ग्रहकार्यकारित्वम् ॥

---

*अत्र सर्वेष्वेव कोशेषु वाक्यत्रयस्य भाष्यं न दृश्यते ।

“ऋतूनां बलमवष्टभ्यावस्थितत्वादृतुभ्यो ग्रहीतुमशक्ता देवास्तस्याग्नेरुत्कोचरूपेण चतस्रः अग्नाग्ने अग्नावग्ने अग्निनाग्ने अग्निमग्ने इति विभक्तीः चतुर्षु प्रयाजेषु प्रयोज्याः दत्वा स्वीकृतवन्तः । अथ ते देवास्सोममन्विष्य लब्ध्वा तं ताडयित्वा तस्य सकाशादात्मीयास्तनूः” इति भाष्येण भाव्यम् ॥

अभवन् । तद्ग्रहाणां ग्रहत्वम् । यस्यैवं विदुषो ग्रहां गृह्णन्ते । तस्य त्वेव गृहीताः । [3]नानाग्नेयं पुनराधेये कुर्यात् । यदनाग्नेयं पुनराधेये कुर्यात् । व्यृद्धमेव तत् ॥ २ ॥ अनाग्नेयं वा एतत्क्रियते । यत्समिधस्तनूनपातमिडो बर्हिर्यजति । [4]उभावाग्नेयावाज्यभागौ स्याताम् । अनाज्यभागौ भवत इत्याहुः । यदुभावाग्नेयावन्वञ्चाविति । अग्नये पवमानायोत्तरस्स्यात् । यत्पवमानाय । तेनाज्यभागः । तेन सौम्यः । बुधन्वत्याग्नेयस्याज्यभागस्य पुरोऽनु-

---

[3]नानाग्नेयमित्यादि ॥ सर्वाग्नेयत्वात् पुनराधेयस्य अनाग्नेयं सर्वमपि व्यृद्धमेव ऋद्धेः प्रतिकूलमेव भवति, न तु ऋद्धेरसाधनत्वमात्रम् । तस्माद्यो नर्ध्नुयात् स पुनरादधीतेति नोपपद्यते। किं पुनरनाग्नेयं क्रियत इत्याह । अनाग्नेयं वा इत्यादि । समिदादयश्चत्वारः प्रयाजाः अनाग्नेयाः क्रियन्ते । तस्माद्विभक्तिभिरेतेषामाग्नेयत्वं क्रियत इति भावः ॥

[4]उभावित्यादि ॥ उभावाज्यभागावाग्नेयौ एव स्याताम् । अत्र केचित् आहुः यत् यदि उभावाज्यभागावन्वञ्चौ अव्यवहितौ आग्नेयौ एव स्यातां एतावाज्यभागावेवात्र न भवत इति । समाधत्ते—अग्नय इत्यादि । पवमानायाग्नये उत्तर

वाक्या भवति ॥ ३ ॥ यथा सुप्तं बोधयति । तादृगेव तत् । [5]अग्निर्व्यक्ताः पत्नीसंयाजानामृचस्स्युः । तेनाग्नेयꣳ सर्वं भवति । एकधा तेजस्विनीं देवतामुपैतीत्याहुः । सैनमीश्वरा प्रदह इति । नेति ब्रूयात् । प्रजननं वा अग्निः । प्रजननमेवोपैतीति ।

---

आज्यभागः स्यात् । तत्र 'अग्न आयूंषि पवसे'* इति पुरोनुवाक्या । ततश्चास्य पवमानसम्बन्धात् सौम्यत्वं तत एवाज्यभागत्वम् । अथ आग्नेयस्य प्रथमस्य आज्यभागस्य बुधन्वती पुरोऽनुवाक्या भवति 'अग्निं स्तोमेन बोधय'† इति । बुध बोधे, बुधशब्दवती । छान्दसो नकारोपजनः । यथेत्यादि । गतम् ॥

[5]अग्निर्व्यक्ता इत्यादि ॥ अग्निना न्यञ्जिताश्चिह्निताः पत्नीसंयाजानां ऋचः याज्यानुवाक्याः स्युः । अन्या एव ऋचो विधीयन्त इति केचित् । तेन सर्वमाग्नेयं भवति । सर्वाग्नेयत्वमिदानीं दूषयति—एकधेत्यादि । एकधा एकप्रकारेण पदेन पुनः पुनर्निबन्ध्य यदा तेजस्विनीं देवतां उपगच्छति तदा सा एनं निबद्धारं प्रदहः प्रकर्षेण दग्धुं ईश्वरा स्यात् । तस्मात्सर्वाग्नेयत्वमयुक्तमिति केचिदाहुः । 'ईश्वरे तोसुन्कसुनौ' इति कसुन् प्रत्ययः । नेतीति । न चायं प्रसङ्ग इति तेभ्य उत्तरं ब्रूयात् । हेतुं चैवं ब्रूयादित्याह—प्रजननं वा इत्यादि ।

---

* सं. १-३-१४. † सं. ४-१-११.

[6]कृतयजुस्संभृतसंभार इत्याहुः ॥ ४ ॥ न संभृत्याः संभाराः । न यजुः कार्यमिति । अथो खलु । संभृत्या एव संभाराः । कार्यं यजुः । पुनराधेयस्य समृद्ध्यै । [7]तेनोपाꣳशु प्रचरति । एष्य इव वा एषः । यत्पुनराधेयः । यथोपाꣳशु नष्टमिच्छति ॥ ५ तादृगेव तत् । [8]उच्चैस्स्विष्टकृतमुथ्सृजति । यथा नष्टं वित्वा प्राहायमिति । तादृगेव तत् । [9]एकधा

---

प्रजननहेतुः खल्वयं अग्निः, तस्मात्तस्यैकधोपायेन प्रजापतिमेवोपैतीति ॥

[6]कृतयजुरित्यादि ॥ अग्न्याधेये कृतत्वात् पुनरिह न कर्तव्य इत्याहुः । अथ कार्यमेवोभयं पुनराधेयस्य साद्गुण्यातिशयार्थम् ॥

[7]तेनेत्यादि ॥ तेन पुनराधेयेन उपांशु अव्यक्तशब्दं प्रचरति । हेतुमाह—एष्य इति । नष्टप्राया ऋद्धिरनेन इष्यते अन्विष्यत इति एष्यः अन्वेषणोपाय इव अयं पुनराधेयः, तस्मादुपांशु प्रचरितव्यमिति । यथा लोके नष्टं रत्नादिकं उपांशु अप्रकाशमन्विच्छति तत्तुल्यमिदमिति ॥

[8]उच्चैरिति ॥ स्विष्टकृद्विषयं मन्त्रं उच्चैरुत्सृजति ऊर्ध्वं प्रेरयाति, यथा नष्टं वित्वा लब्ध्वा लौकिकः प्राह प्रकाशयति अयं लब्ध इति, तत्तुल्यमेतदिति ॥

तेजस्विनीं देवतामुपैतीत्याहुः । सैनमीश्वरा प्रदह इति । तत्तथा नोपैति । प्रयाजानूयाजेष्वेव विभक्तीः कुर्यात् । यथापूर्वमाज्यभागौ स्याताम् । एवं पत्नीसंयाजाः ॥ ६ ॥ तद्वैश्वानरवत्प्रजननवत्तरमुपैतीति । तदाहुः । व्यृद्धं वा एतत् । अनाग्नेयं वा एतत्क्रियत इति । [10]नेति ब्रूयात् । अग्निं प्रथमं विभक्ती-

[9]एकधेत्यादि गतम् ॥ तत्तथेति । तत्तथा न कर्तव्यमिति यावत् । कथं तर्हि कर्तव्यमाग्नेयं न स्यात् प्रजननं च भवेदित्याह—प्रयाजानूयाजेष्वेवेत्यादि । यथापूर्वं यथाप्रकृति । एवमिति । यथापूर्वमित्यर्थः । तत् तथा उपयन् वैश्वानरवत् वैश्वानरोऽग्निः तद्वच्च उपैति आग्नेयमिति यावत् । प्रजननवत्तरं चोपैति, न केवलं प्रजननवदेव । यदुक्तं 'प्रजननमेवोपैति' इति तस्मादतिशयमातिशायनिकेन द्योतयति । एवमित्यन्तो द्वितीयः पक्षः । तदपरे दूषयन्तीत्याह—तदाहुरिति ॥ तत्रापि पक्षे अन्ये दूषणं आहुः व्यृद्धं ऋद्धिहीनमेव तत् क्रियते । कुत इत्याह—अनाग्नेयं आग्नेयं सर्वं न क्रियते । तस्माद्व्यृद्धं, तस्मादयुक्तं यथाप्रकृतिकरणमाज्यभागादीनामिति ॥

[10]नेतीति ॥ न अयं दोष इति तेभ्य उत्तरं ब्रूयात् । ननु कथं कस्मिंश्चित्सत्यनाग्नेये सर्वाग्नेयत्वं स्यात्, कथं वा तथा क्रियमाणे सति नेति ब्रूयादित्याह—अग्निं प्रथममित्यादि॥

नां यजति। अग्निमुत्तमं पत्नीसंयाजानाम् । तेनाग्नेयम् । तेन समृद्धं क्रियत इति ॥ ७ ॥

अरुन्धतैव तद्भवति संभृतसंभार इत्याहुरिच्छति पत्नीसंयाजा नवं च ॥ १ ॥

[1]देवा वै यथादर्शं यज्ञानाहरन्त । योऽग्निष्टोमम् । य उक्थ्यम् । योऽतिरात्रम् । ते सहैव सर्वे वाजपेयमपश्यन् । ते । अन्योन्यस्मै नातिष्ठन्त । अहमनेन यजा इति । तेऽब्रुवन् । आजिमस्य

प्रथमं तावद्यागादौ अग्निं विभक्तीनां विभक्तिभिः यजति विभक्तिसम्बन्धिनाग्निरिज्यते, उत्तमं यागस्यान्ते भवं च अग्निं यजति, पत्नीसंयाजानां सम्बन्धिनमग्निं गृहपतिं तेन यजति । तेन तदन्तः प्रविष्टं सर्वं आग्नेयं भवति । तेन एव हेतुना समृद्धं एव क्रियत इति अतो हेतोर्नेति ब्रूयादेवेति ॥

इति तृतीये प्रथमोऽनुवाकः.

[1]देवा वा इत्यादि ॥ अतः परमष्टावनुवाका वाजपेयब्राह्मणं सोमार्थेयम् ॥ यथादर्शं योयो यंयं क्रतुमपश्यत् सस तंतमाहरत, कश्चिदुक्थ्यं, कश्चिदतिरात्रम् । दृशेर्णमुलि लित्स्वरः । एवं देवा यथादर्शं यज्ञान् अग्निष्टोमादीन् आहरन्त । तत्र योऽ-

धावामेति ॥ ८ ॥ तस्मिन्नाजिमधावन् । [2]तं बृह-स्पतिरुदजयत् । तेनायजत । स स्वाराज्यमगच्छत् ।

---

ग्निष्टोमं अपश्यत् यश्च उक्थ्यं यश्च अतिरात्रं ते सर्वेऽपि सहैव वाजपेयमपश्यन् । अथ ते देवाः दृष्टवाजपेयाः अन्योन्यस्मै नातिष्ठन्त यज्ञविषयं कर्तृत्वं अहमनेन यजा इति प्राधान्यं वा आत्मन एवेच्छन्तोऽयमनेन यजतामिति अभ्युपगमाभिप्रायं अन्यस्मै सर्वे नाविष्कृतवन्तः । यदा कश्चिदेकोऽहमनेन यजा इत्याह तदा अन्योपि तथैव । न कश्चिदप्ययमनेन यजतामित्यन्वमन्यत, प्राधान्यं वा नासहत । 'क्रियासमभिहारे सर्वनाम्नो द्वे भवतस्समासवच्च बहुलं यदा न समासवत् प्रथमैकवचनं तदा' इति पूर्वपदस्य असमासपक्षे पदयोः पृथक्स्वरत्वमेव। अन्यशब्दोन्तोदात्तः 'स्वरितो वाऽनुदात्ते पदादौ' इति संहितायामोकारस्स्वर्यते । द्वितीयशब्दोन्तोदात्त एव । 'श्लाघह्नुङ्स्थाशपाम्' इति संप्रदानत्वम् । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । अथ ते विप्रतिपन्ना देवाः अब्रुवन् अस्य कृते सर्वेऽपि वय आजिं धावाम, गन्तव्योऽवधिराजिः । अज गतौ, 'अजयतिभ्यां च' इतीण् । जयत्यनेनेति जयहेतुत्वाद्वा अवधेराजित्वम्। तं धावाम वेगेन प्राप्नुयाम । 'सर्तेर्वेगितायां गतौ' इति धावादेशः । तत्र धावतामस्माकं यो जयति स यक्ष्यतामिति कृतनिर्णयाः तस्मिन् वाजपेये निमित्ते आजिमधावन् ॥

[2]तमित्यादि ॥ गतम् । तं वाजपेयम् । स्वाराज्यमिति । सोग्रमित्यादि । अग्रं प्राधान्यं ब्रह्मवर्चसिनामाधिपत्यं पर्यैत् प-

तमिन्द्रोऽब्रवीत् । मामनेन याजयेति । तेनेन्द्रमयाजयत् । सोऽग्रं देवतानां पर्यैत् । अगच्छथ्स्वाराज्यम् । अतिष्ठन्तास्मै ज्यैष्ठ्याय ॥ १ ॥ य एवं विद्वान् वाजपेयेन यजते । गच्छति स्वाराज्यम् । अग्रꣳ समानानां पर्येति । तिष्ठन्तेऽस्मै ज्यैष्ठ्याय । [3]स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः । तं वा एतं वाजपेय इत्याहुः । वाजाप्यो वा एषः । वाजꣳ ह्येतेन देवा ऐप्सन् । [4]सोमो वै वाजपेयः ।

र्यैगच्छत् । अगच्छत् स्वाराज्यं माहाराज्यम् । अतिष्ठन्त च अस्मै ज्यैष्ठ्याय प्राधान्याय देवाः । य एवमित्यादि । स्वाराज्यं स्वायत्तदीप्तित्वम् । ब्रह्मवर्चसिनां समानानामग्रं प्राधान्यं पर्येति सर्वात्मना गच्छति । अनुमन्यन्ते च अस्मै ज्यैष्ठ्यं प्रजाः ॥

[3]स वा एष इत्यादि ॥ वैश्यनिवृत्त्यर्थं वचनम् । बृहस्पतिना इन्द्रेण च प्रथममिष्टत्वात् ब्राह्मणराजन्ययोरेव एष यज्ञः। तं वा इत्यादि । वाजायान्नाय पीयते सोमोऽस्मिन्निति वाजपेयः । अधिकरणे कृत्यः । तत्रैव हेतुमाह—वाजाप्यः खलु एषः वाज आप्यतेऽनेनेति वाजाप्यः । करणे कृत्यः । तदपि कुत इत्याह—वाजं खलु एतेन देवा ऐप्सन् आप्तुमैच्छन् । अहमनेन यजा इति वाजमीप्सन्तो देवाः पूर्वमन्योन्यस्मै नातिष्ठन्तेति भावः ॥

[4]सोमो वा इत्यादि ॥ सोम ओषधिराजः स्वयं वाजपेयः

यो वै सोमं वाजपेयं वेद ॥ १० ॥ वाज्यैवैनं पीत्वा भवति । आऽस्यं वाजी जायते । अन्नं वै वाजपेयः । य एवं वेद । अत्त्यन्नम् । आऽस्यान्नादो जायते । ब्रह्म वै वाजपेयः । य एवं वेद । अत्ति ब्रह्मणाऽन्नम् । आऽस्यं ब्रह्मा जायते ॥ ११ ॥ ⁵वाग्वै वाजस्य प्रसवः । य एवं वेद । करोति वाचा वीर्यम् ।

---

सर्वान्नपुष्टिहेतुत्वात्, तस्माद्वाजाप्य इति य एवं सोमात्मानं वाजपेयं वेद स एनं सोमं पीत्वा वाजी अन्नवान् भवत्येव अस्य वाजपेययाजिनः वाजी वाजवान् पुत्र आजायते सर्वतो जायते । किञ्च—अन्नं अन्नहेतुः अन्नादनसामर्थ्यकारी वाजपेयः, एवं वेदिता अन्नमत्ति अन्नादनसामर्थ्यवान्भवति । अस्य च अन्नादः पुत्र आजायते । अपि च—ब्रह्म त्रयी सैव वाजपेयः प्राधान्येन प्रतिपाद्यत्वात् । एवं त्रय्या विद्यया निमित्तभूतया इत्थंभूतः अन्नमत्ति न शूद्रकल्पः । अस्य पुत्रो ब्रह्म त्रयीवित् आजायते ॥

⁵वाग्वा इत्यादि ॥ वाजस्य प्रसवः उत्पत्तिकारणं वाजपेयः स्वयं वाक् वाचो हेतुत्वात् । एवं वेदिता वाचा वीर्यं आत्मनः करोति श्रद्धेयवचनः सर्वस्य भवति । किञ्च—एनं वाजपेययाजिनं वेदितारं च वाचा स्तुतिरूपया सर्वो जन आगच्छति स्तौतीत्यर्थः । अपिच—अयं वाजपेययाजी वेदिता च अपिवतीं सम्भावनावतीं वाचं वदति । यद्वा—अपिवती

ऐनं वाचा गच्छति। अपिवतीं वाचं वदति। [6]प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्। स आत्मन्वाजपेयमधत्त। तं देवा अब्रुवन्। एष वाव यज्ञः। यद्वाजपेयः॥ १२॥ अप्येव नोत्रास्त्विति। तेभ्य एता उज्जितीः प्रायच्छत्। ता वा एता उज्जितयो व्याख्यायन्ते। यज्ञस्य सर्वत्वाय। देवतानामनिर्भागाय। [7]देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन्। यद्ब्रह्मण-

सरसा पुनरपि स्तोतव्यत्वमस्यास्तीति अपिनामेयमस्माकं स्तुतिपथे स्यादिति यस्यां भवति सा अपिवती॥

[6]प्रजापतिर्देवेभ्य इत्यादि॥ व्यादिशत् पृथक्पृथक् दत्तवान्। एष वाव इति। एष खलु यज्ञः। तस्मात् अत्रापि यज्ञे अस्माकं किञ्चिदपि अस्त्वेवेत्युक्तवद्भ्यो देवेभ्य एता उज्जितीः 'अग्निरेकाक्षरेण'* इत्याद्याः प्रायच्छत्। तस्मात् एता उज्जितयो व्याख्यायन्ते विशेषेणोच्यन्ते। उज्जयहेतुत्वादुज्जितयः ता एता व्याख्यायमाना यज्ञस्य सर्वत्वाय भवन्ति सर्वाङ्गसहितत्वाय सर्वदेवताकत्वाय। अपिच देवतानां च अनिर्भागाय निर्भागत्वं-मा भूदिति॥

[7]देवा वा इत्यादि॥ ब्रह्मणो मन्त्रस्यर्गादेः अन्नस्य च शमलं मलरूपं शान्तशक्तिकं देवा अपाघ्नन् पृथक् स्थापित-

* सं. १-७-११.

श्शमॅलमासीत् । सा गाथा नाराशꣳस्यभवत् । यदन्नस्य । सा सुरा ॥ १३ ॥ तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यम् । यत्प्रतिगृह्णीयात् । शमॅलं प्रतिगृह्णीयात् । [8]सर्वा वा एतस्य वाचोऽवरुद्धाः । यो वाजपेययाजी । या पृथिव्यां याऽग्नौ या रथन्तरे । याऽन्तरिक्षे या वायौ या वामदेव्ये । या

न्तः । तत्र ब्राह्मणस्य शमलं नाराशंसी गाथाऽभवत् । गीत्यर्था गाथा नराणां शंसनार्था नाराशंसी नरप्रधाना । अन्नस्य शमलं सुरा अभवत् । तस्मात् गायतो मत्तस्य च यदन्नं तावन्तं कालं न प्रतिगृह्णीयात् । शमलं प्रतिगृह्णीयात् शमलपरिणामत्वात् प्रतिग्रहे शमलमेव प्रतिगृहीतवान् स्यात् ॥

[8]सर्वा वा इत्यादि ॥ गतम् । ऋत्विजोऽर्हन्ति आर्त्विजीनो यजमानः । 'यज्ञर्त्विग्भ्यां घखञौ' इति खञ् । ऋत्विक्कर्मार्हतीति वा आर्त्विजीनः 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम्' इति खञ् । यस्मात् अस्य सर्वाः वाचोऽवरुद्धाः अनेन लब्धाः सर्वेषु पृथिव्यादिषु लोकेषु या वाचः सर्वेषु वाऽग्न्यादिषु योग्या या वाचः सर्वेषु च रथन्तरादिषु सामसु गीतिरूपा या वाचः याश्चाङ्गिरोषधीभिः वनस्पतिभिश्च जन्या वाचः तासां सर्वासामवरुद्धत्वादार्त्विजीन इति ॥

इति तृतीये द्वितीयोऽनुवाकः

दि॒वि याऽऽदि॒त्ये या बृ॒ह॒ति । याऽप्सु या॒ओष॑धीषु॒ या वन॒स्पति॑षु । तस्मा॑द्वाजपेययाज्या॑र्त्विजीनः । स॒र्वा ह्य॑स्य॒ वाचो॑ऽवरु॑द्धाः ॥ १४ ॥

धा॒वा॒मेति॒ ज्यैष्ठ्या॑य॒ वेदं॒ ब्रह्मा जा॑यते वा॒जपे॒यस्सु॑राऽऽर्त्विजीन॒ एकं॑ च ॥२॥

[1]दे॒वा वै यद॒न्यैर्ग्र॑हैर्य॒ज्ञस्य॒ नावारु॑न्धत । तद॑तिग्राह्यैरति॒गृह्या॑वारु॑न्धत । तद॑तिग्राह्या॑णामतिग्राह्य॒त्वम् । यद॑तिग्राह्या॑ गृ॒ह्यन्ते॑ । यदे॒वान्यैर्ग्र॑हैर्य॒ज्ञस्य॒ नाव॑रु॒न्धे । तदे॒व तैर॑ति॒गृह्या॑वरुन्धे । [2]पञ्च॑ गृ॒ह्यन्ते ।

[1]देवा वै यदन्यैरित्यादि ॥ यत् यज्ञस्य फलमन्यैर्नालभन्त तदतिग्राह्यैर्ग्रहैः 'उपयामगृहीतोसि नृषदं त्वा' * इत्याद्यैः अवरुन्धत देवाः तत्प्रसादात् अतिगृह्य अन्यग्रहानतिक्रम्य एषां ग्रहणादेषामतिग्राह्यत्वम् । यदित्यादिः अतिग्राह्यग्रहणविधिः ॥

[2]पञ्चेत्यादि ॥ पञ्चत्वमैन्द्रत्वं च विधीयते । ततः पञ्चत्वेन पङ्क्तिप्रभवं यज्ञं कात्स्न्र्येन आप्त्वाऽवरुन्धे अनाप्तमपि फलम् । पङ्क्तिशब्दादुत्सादित्वादञ् । अथ सर्वेषामैन्द्रत्वात् एकधा एकप्रकारं एव यजमाने इन्द्रियं दधाति अतिग्राह्या ग्रहाः ॥

* सं. १-७-१२.

पाङ्क्तो यज्ञः । यावानेव यज्ञः । तमाप्त्वाऽवरुन्धे ॥ १५ ॥ सर्वं ऐन्द्रा भवन्ति । एकधैव यजमान इन्द्रियं दधाति । [3]सप्तदश प्राजापत्या ग्रहा गृह्यन्ते । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति । [4]सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णाति । एतद्वै देवानां परममन्नम् । यत्सोमः ॥ १६ ॥ एतन्मनुष्याणाम् । यत्सुरा । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमव

[3]सप्तदशेत्यादि ॥ सप्तदशाक्षरपरिणामत्वात् । एकयर्चेति । 'अथा विष्ठा जनयन्'* इत्यनया । एकधा यजमाने वीर्यं दधाति ॥

[4]सोमग्रहांश्च सुराग्रहांश्चेति॥ सप्तदशेत्येव, तच्च प्रत्येकम् । एतद्वा इत्यादि । गतम् । परमेणेति । परममन्नाद्यं लभ्यते चेत् किं पुनरवरमिति भावः । न हि महारत्नं लब्धवद्भिः काचादयो दुर्लभाः । अतो हेतोरुभयग्रहणस्य उभयलाभार्थत्वात्फलसमुच्चयः । अन्यथा उत्कृष्टलाभो न गुणाय स्यात् ॥

* सं. १-७-१२.

रुन्धे । [5]सोमग्रहान्गृह्णाति । ब्रह्मणो वा एतत्तेजः । यथ्सोमः । ब्रह्मण एव तेजसा तेजो यजमाने दधाति । सुराग्रहान्गृह्णाति । अन्नस्य वा एतच्छमलम् । यथ्सुरा ॥ १७ ॥ अन्नस्यैव शमलेन शमलं यजमानादपहन्ति । [6]सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णाति । पुमान् वै सोमः । स्त्री सुरा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय ।

---

[5]सोमग्रहानित्यादिपुनर्विधानं गुणान्तरार्थम् । ब्रह्मणस्तेजस्सोमः तत्साधनत्वात् । अन्नस्यैव शमलेनेति । शमलस्य हेयत्वात् अन्नस्य शमलेन गृह्यमाणेन सह यजमानशमलमपि गृहीतमिति तद्यजमानादपहतं भवति । तेजसस्तु उपादेयत्वात् ब्रह्मणस्तेजसा गृह्यमाणेन सह यजमानतेजोपि गृहीतमिति सर्वं तेजो यजमाने दधाति ॥

[6]सोमग्रहांश्चेतिपुनर्विधानं पुनरपि गुणान्तरप्रतिपादनार्थम् । पुमान् सोमः, पुल्लिङ्गपदवाच्यत्वात् । स्त्री सुरा स्त्रीलिङ्गपदवाच्यत्वात् । सर्वमन्यत् समानमिति । सदृशस्त्रीपुंसयुगलस्य मिथुनत्वात् सोमसुरायुगलं मिथुनं भवति । तथा हि सूयत इति सोमः औणादिको मन्प्रत्ययः, तथा सूयत इति सुरा, तत एव धातोरौणादिकः क्रन्प्रत्ययः । एवमनयोस्समानप्रकृतिकत्वात् सदृशत्वमिति तादृशं मिथुनं यज्ञे क्रियते प्रजननार्थं प्रजानाम्॥

[7]आत्मानमेव सोमग्रहैस्स्पृणोति । जायाꣳ सुरा-
ग्रहैः । तस्माद्वाजपेययाज्यमुष्मिन्लोके स्त्रियꣳ
संभवति । वाजपेयाभिजितꣳ ह्यस्य ॥ १८ ॥ [8]पू-
र्वे सोमग्रहा गृह्यन्ते । अपरे सुराग्रहाः । पुरोऽक्ष-
ꣳ सोमग्रहान्थ्सादयति । पश्चादक्षꣳ सुराग्रहान् ।
पापवस्यसस्य विधृत्यै । एष वै यजमानः । य-
त्सोमः । अन्नꣳ सुरा । सोमग्रहाꣳश्च सुराग्रहाꣳश्च
व्यतिषजति । अन्नाद्येनैवैनं व्यतिषजति ॥ १९ ॥

---

[7]आत्मानमेवेत्यादि ॥ स्पृणोति प्रीणयति सोमग्रहैरात्मानं पुंस्त्वाद्द्वयोः । जायां सुराग्रहैरिति । स्पृणोतीत्येव, उभयोस्स्त्रीत्वात् । तस्मादिति । सम्भवो भोगः । अस्य तद्भोगफलं यस्माद्वाजपेयेनाभिजितं आभिमुख्येन जितम् ॥

[8]पूर्व इत्यादिः क्रमविधिः ॥ पुरोऽक्षमिति देशनियमः । रथाक्षस्य पुरस्तात् सोमग्रहान् सादयति, पश्चादक्षं रथाक्षस्य पश्चात् सुराग्रहान् सादयतीत्येव । पापवस्यसस्य विधृत्यै पापं च वसीयश्च पुण्यं च पापवस्यसम् । अच्समासान्तः, ईयसुन इकारस्य लोपः । तयोर्विधृतिर्विभागः । एष वा इत्यादि । सोमः स्वयं यजमानः, प्राधान्यात् । अन्नमेव सुरा । तस्मात्तयोर्व्यतिषङ्गेण विमिश्रणेन एनं यजमानमन्नाद्येन व्यतिषजति ॥

[9]संपृचस्स्थ सं मा भद्रेण पृङ्क्त्याह । अन्नं वै भद्रम् । अन्नाद्येनैवैनꣳ सꣳसृंजति । अन्नस्य वा एतच्छमंलम् । यथ्सुरा । पाप्मैव खलु वै शमंलम् । पाप्मना वा एनमेतच्छमंलेन व्यतिषजति । यथ्सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति । विपृचस्स्थ वि मा पाप्मना पृङ्क्त्याह । पाप्मनैवैनꣳ शमंलेन व्यावर्तयति ॥ २० ॥ तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः । [10]प्राङुद्द्रवति सोमग्रहैः । अमुमेव तैर्लोकमभिजयति । प्रत्यङ्सुराग्रहैः । इममे-

---

[9]सम्पृचस्स्थ संमा भद्रेण पृङ्क्ति प्राङध्वर्युः सोमग्रहैरुद्द्रवति ॥ तत्र भद्रपदं व्याचष्टे—अन्नं वा इत्यादि । गतम् । अथ 'विपृचस्स्थ विमा पाप्मना पृङ्क्त' इति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहैरुद्द्रवति । तत्र पाप्मपदं व्याचष्टे—अन्नस्य वा इत्यादि । गतम् । तस्मादित्यादि । पूतः शुद्धः मेध्यो मेधार्हः दक्षिण्यो दक्षिणार्हः । 'कडङ्करदक्षिणाच्छ च' इति यत् ॥

[10]प्राङित्यादि ॥ गतम् । प्रत्यङ् सुराग्रहैरित्यादि । उद्द्रवतीत्येव । प्रतिष्ठन्ति प्रचरन्ति । 'समवप्रविभ्यः' इत्यात्मनेपदं कस्मान्न भवति? उच्यते—अयं प्रशब्दो यदा धात्वर्थस्य गतिनिवृत्तेर्निवृत्तिं गतिमाचष्टे तदाऽऽत्मनेपदमिष्यते । नान्यत्र । यथा—'ब्रह्मन् प्रस्थास्यामः ओं प्रतिष्ठ' इत्यादौ ॥

व तैल्लोकमभिजयति । प्रतिष्ठन्ति सोमग्रहैः । यावद्देव सत्यम् । तेन सूयते । [11]वाजसृद्भ्यस्सुराग्रहान् हरन्ति । अनृतेनैव विशꣳ सꣳसृजति । [12]हिरण्यपात्रं मधोः पूर्णं ददाति । मधव्योऽसानीति । एकधा ब्रह्मण उप हरति । एकधैव यजमान आयुस्तेजो दधाति ॥ २१ ॥

आप्त्वाऽवरुन्धे सोमग्रहाꣳश्चाऽलं यथ्सुरा ह्यस्यैनं व्यतिषजति व्यावर्तयति सृजति चत्वारि च ॥ ३ ॥

यावद्देवेति । यावत् सत्यं सति साधु तेन सर्वेणायं सूयते अनुज्ञायते सर्वेणानुज्ञातमस्यैश्वर्यं भवति. सर्वात्मनां ईष्ट इति यावत् ॥

[11]वाजसृद्भ्य इति ॥ वाजसृतोऽन्नस्यार्जयितारो वैश्याः, अशनार्थं वा अन्नस्यार्जयितारो मनुष्याः । तेभ्यः सुराग्रहान् हरन्ति । अनृतेन विशं संयोजयति । स्वयं तु सत्येनैनं सूयते ॥

[12]हिरण्यपात्रमिति ॥ 'पूरणगुणसुहितार्थ' इति षष्ठीसमासप्रतिषेधात् षष्ठी ज्ञाप्यते । लिङ्गव्यत्ययः छान्दसः । मधुयान् मधव्यः 'मधोर्यं च' इति यः । मधुमान्भूयासमित्यनया आशिषा ददाति । एकधेति । हिरण्यपात्रं कृष्णलानि च एकस्मै ब्रह्मणे उपहरति ददाति । आयुस्तेजश्च एकधा सहैव यजमाने दधाति ॥

इति तृतीये तृतीयोऽनुवाकः.

[1]ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यः । न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनस्स्तोत्रम् । सारस्वत्याऽतिरात्रम् ॥ २२ ॥ मारुत्या बृहतस्स्तोत्रम् । [2]एतावन्तो वै यज्ञक्रतवः । तान्पशुभिरेवावरुन्धे । आत्मानमेव स्पृणोत्यग्निष्टोमेन । प्राणापा-

---

[1]ब्रह्मवादिन इत्यादि ॥ इदानीं पशुद्वारेण अग्निष्टोमादिरूपाणां वाजपेयस्य प्रतिपादयति—अग्निष्टोमाद्यात्मनोऽप्यस्य सर्वयज्ञक्रत्वात्मकत्वं वा कस्माद्धेतोर्भवति । अस्ति खलु स उपाय इति तज्जिज्ञासवो ब्रह्मवादिनः पृच्छन्ति । उक्थ्यादयोऽग्निष्टोमस्य गुणविकाराः । यज्ञाश्च क्रतवश्च यज्ञक्रतवः । क्रतवो यूपवन्तः, प्राधान्यात्पुनरुपादानम् । पशुरिति । तेभ्यः पशुभिरिति उत्तरं ब्रूयात् । तांश्च दर्शयति—आग्नेयमित्यादि । आग्नेयादिभिरग्निष्टोमाद्यात्मताऽस्य क्रियते । आग्नेयादयोऽग्निष्टोमादीनां सवनपशवः क्रतुव्यावृत्तिहेतवः । सारस्वती मेषी । मारुती वशा ॥

[2]एतावन्त इत्यादि ॥ गतम् । स्पृणोति प्रीणयति । अयं वाजपेयोऽग्निष्टोमाद्यात्मना आत्मादिप्रीणनहेतुर्भवति । किञ्च—

नावुक्थ्येन । वीर्यꣳ षोडशिनस्स्तोत्रेण । वाचमतिरात्रेण । प्रजां बृहतस्स्तोत्रेण । इममेव लोकमभि जयत्यग्निष्टोमेन । अन्तरिक्षमुक्थ्येन ॥२३॥ सुवर्गं लोकꣳ षोडशिनस्स्तोत्रेण । देवयानानेव पथ आरोहत्यतिरात्रेण । नाकꣳ रोहति बृहतस्स्तोत्रेण । तेज एवात्मन्धत्त आग्नेयेन पशुना । ओजो बलमैन्द्राग्नेन । इन्द्रियमैन्द्रेण । वाचꣳ सारस्वत्या । उभावेव देवलोकं च मनुष्यलोकं चाभिजयति मारुत्या वशया । [3]सप्तदश प्राजापत्यान्पशूनालभते । सप्तदशः प्रजापतिः ॥ २४ ॥ प्रजापतेराप्त्यै । श्यामा एकरूपा भवन्ति । एवमिव हि प्रजापतिस्समृद्ध्यै । [4]तान्पर्यग्निकृतानुत्सृज-

---

अनेन वाजपेयेन अग्निष्टोमाद्यात्मना पृथिव्यादीन् जयति । अपि च तत्तत्सवनपशुभिराग्नेयादिभिः तेजःप्रभृतीन्यात्मनि धत्ते स्थापयति । ओजः ओजिष्ठमुज्ज्वलं बलम् ॥

[3]सप्तदशेत्यादि ॥ गतम् ॥ एवमिवेति अव्यक्तत्वाच्छ्याम इव वर्णजात्याद्यनवधारणादेकरूपः । तस्माद्रूपसमृद्धिर्भवतीति ॥

[4]तानित्यादि ॥ तेषां प्राजापत्यानां पर्यग्निकरणानन्तरं उत्तरं प्राकृतं कर्म न कुर्यात् । अपि तु मारुतीं वशामालभेत ।

ति । मरुतो यज्ञमजिघाꣳसन्प्रजापतेः । तेभ्य एतां मारुतीं वशामालभत । तयैवैनानशमयत् । मारुत्या प्रचर्य । एतान्थ्संज्ञपयेत् । मरुत एव शमयित्वा ॥ २५ ॥ एतैः प्रचरति । यज्ञस्याघाताय।
[5]एकधा वपा जुहोति । एकदेवत्या हि । एते । अथो एकधैव यजमाने वीर्यं दधाति । [6]नैवारेण सप्तदशशरावेणैतर्हि प्रचरति । एतत्पुरोडाशा

---

हेतुमाह—मरुत इत्यादि ॥ गतम् ॥ तस्मान्मारुत्या प्रचर्य एतान् प्राजापत्यान् संज्ञपयेत् मारयेत् । शमयत्येव यज्ञस्य हन्तॄन् मरुतः । प्राजापत्यानां प्रचारः कृतो भवति । तच्च यज्ञस्यावधाय भवति ॥

[5]एकधेति ॥ न पृथग्जुहोति । हेतुमाह—एकदेवत्या ह्येत इति ॥ अथो अपि च एकीकृत्य सर्वं वीर्यं यजमाने दधाति॥

[6]नैवारेणेत्यादि ॥ सप्तदशशरावेण सप्तदशसु शरावेषु संस्कृतेन । 'द्विगोः' इति लुक् । 'इगन्तकालकपालभगालशरावेषु' इति पूर्वपदप्रकृतिस्वरत्वम् । तत्रापि 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । ईदृशेन चरुणा एतर्हि एतस्मिन् काले वपाहोमानन्तरं प्रचरति । 'इदमोर्हिल्' 'एते तौ रथोः' इत्येतादेशः । एतत्पुरोडाशाः एषः नैवारः पुरोडाशो येषां पुरोडा-

ह्यैते । अथो पशूनामेव छिद्रमपिदधाति । [7]सारस्वत्योत्तमया प्रचरति । वाग्वै सरस्वती । तस्मात्प्राणानां वागुत्तमा । अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति । प्रजापतिर् हि वाक् । अपन्नदती भवति । तस्मान्मनुष्यास्सर्वां वाचं वदन्ति ॥ २६ ॥

अतिरात्रमन्तरिक्षमुक्थ्येन प्रजापतिश्शमयित्वोत्तमया प्रचरति

षट्च ॥ ४ ॥

---

शकार्यकरणाच्चरुः पुरोडाशः । अथो अपि च पशूनां छिद्रं कर्मवैकल्यमेतत्कालेन चरुणा आपिदधाति आपूरयति ॥

[7]सारस्वत्योत्तमया अन्त्यया प्रचरति । वाग्वा इत्यादि ॥ गतम् ॥ सारस्वत्या उत्तमत्वात् प्रजापतावेव यज्ञः प्रतिष्ठापितः समापितो भवति । हेतुमाह—प्रजापतिर्हि वाक् सर्वात्मकत्वाद्वाजपेयस्य । अपन्नदती अविपन्नदन्ता सरस्वती भवति 'छन्दसि च' इति दतृभावः । तस्मान्मनुष्याः सर्वां बहुप्रकारां वाचं वदन्ति ॥

इति तृतीये चतुर्थोऽनुवाकः.

[1]सा॒वि॒त्रं जु॑होति॒ कर्म॑णःकर्मणः पु॒रस्ता॑त् । कस्तद्वे॑देत्या॑हुः । यद्वा॑ज॒पेय॑स्य॒ पूर्वं॑ यदप॑र॒मिति॑ । स॒वि॒तृप्र॑सूत ए॒व य॑थापू॒र्वं कर्मा॑णि करोति । [2]स-वनेसवने जुहोति । आ॒क्रम॑णमे॒व तथ्सेतुं॑ यज॑मानः कुरुते । सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै ।

[1]सावित्रं जुहोतीत्यादि ॥ 'देवसवितः प्रसुव'* इति जुहोति कर्मणः दीक्षणीयादीनां पदार्थानामारम्भे । कस्तदित्यादि । यद्वाजपेयस्य पूर्वं कर्म यदपरं तत् को वेद जानाति इदं पूर्वमिदमपरमिति को वाजपेयस्य जानाति पौर्वापर्यस्य दुर्ज्ञानत्वात् वैकृतानां बहुत्वात् इत्याहुः । तस्मादसुज्ञानानां कर्मणामारम्भे सावित्रं जुहोति । सावित्रहोमेन उत्तराणि कर्माणि सवितृप्रसूतः सवित्रैवानुज्ञातो यथापूर्वं करोति येन पौर्वापर्येण प्रयुक्ते। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[2]सवनेसवन इति पक्षान्तरम् ॥ यथाऽऽहुः—'सवनादौ सवनादौ जुहोति कर्मणः कर्मणो वा पुरस्तात्' इति । यद्वा—कर्मणः पुरस्तादित्युक्ते चोदयन्ति—वाजपेयस्य कर्मणां पौर्वापर्यं को वेद येनैवमुच्यते कर्मणः पुरस्तादिति, सति हि पौर्वापर्यज्ञाने आरम्भज्ञानमिति तस्मादयुक्तमेतदिति । तस्मात्सवनानां आरम्भे होमात् सवित्रैवानुज्ञातः कर्माण्यपि यथापूर्वं करोति । किञ्च—आक्रमणसाधनं सेतुं कुरुते यजमानः । सुवर्गस्य लोकस्य समष्ट्यै सम्यक्प्राप्त्यै भवति ॥

*सं. १-७-७.

[3]वाचस्पतिर्वाचमद्य स्वदाति न इत्याह । वाग्वै देवा-
नां पुराऽन्नमासीत् । वाचमेवास्मा अन्नꣳ स्वदय-
ति ॥ २७ ॥ [4]इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमु-
पावहरति विजित्यै । वाजस्य नु प्रसवे मातरं
महीमित्याह । यच्चैवेयम् । यच्चास्यामधि । तदेवा-
वरुन्धे । अथो तस्मिन्नेवोभयेऽभिषिच्यते । [5]अप्स्व-
न्तरमृतमप्सु भेषजमित्यश्वान्पल्पूलयति । अप्सु

[3]वाग्वा इत्यादि ॥ वागेव अन्नं देवानां पूर्वं आसीत् । वागेव स्थितिहेतुरासीत्, स्तुत्या च क्षुन्निवृत्तेः । तस्मात् अस्मै यजमानाय यजमानार्थं वाचमन्नं च स्वदयति स्वादु करोति ॥

[4]उपावहरतीति ॥ रथवाहनादवतारयति इन्द्रसंबन्धात् विजित्यै च भवति । यच्चेत्यादि । यच्चेयं पृथिवी यच्चास्यां पृथिव्यां अधि तत् द्वयं अवरुन्धे । अथो अपि च तस्मिन्नुभये उभयस्मिन् यथोक्ते पृथिव्यां पृथिव्यवस्थिते च पदार्थे अभिषिच्यते उभयविषयमैश्वर्यं प्राप्यते ॥

[5]पल्पूलयति स्नापयति ॥ अप्सु वा इत्यादि । अश्वस्य तृतीयो भागः अप्सु प्रविष्टः तद्योनित्वादश्वस्य । 'पूरणाद्भागे तीयादन्' तेनाद्युदात्तत्वम् । तदन्वित्यादि । यस्मादिदमश्वमप्सु पल्पूलयति तन्मन्यामहे तदेव तृतीयं अनुवेनन् अनुकामयमानोऽवप्लवते । वेनतिः कान्तिकर्मा । उ इत्यवधारणे । यद्वा—अ-

वा अश्वस्य तृतीयं प्रविष्टम् । तदनुवेनन्ववप्लवते । यदप्सु पल्पूलयति ॥ २८ ॥ यदेवास्याप्सु प्रविष्टम् । तदेवावरुन्धे । [6]बहु वा अश्वोऽमेध्यमुपगच्छति । यदप्सु पल्पूलयति । मेध्यानेवैनान्करोति । [7]वायुर्वा त्वा मनुर्वा त्वेत्याह । एता वा एतं देवता अग्रे अश्वमयुञ्जन् । ताभिरेवैनान् युनक्ति । सुवस्योज्जित्यै । यजुषा युनक्ति व्यावृत्त्यै ॥ २९ ॥ अ-

श्वस्य अप्सु यत् तृतीयं प्रविष्टं तदनु तल्लक्षीकृत्य तं तृतीयं भागमश्वं प्रापयितुं नु इति क्षिप्रं वा वितर्के, नूनं तदन्वेव एनमवप्लवते अवप्लवयति । यद्वा—अश्व एवोच्यते—तदेव तृतीयमनु नूनमेनदवप्लवतेऽश्वः अप्सु मज्जति । एनदिति क्रियाविशेषणं, छान्दसमाद्युदात्तत्वम् । 'तन्वादीनाम्' इत्युवङ् ॥

[6]बहु वा इत्यादि ॥ अश्वः खलु पृथिव्यां भ्रमन् बहु अमेध्यं अयज्ञार्हरूपं उपगच्छति प्राप्नोति । मेध्यं मेधार्हं न भवतीत्यमेध्यम् । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । तस्मात्पल्पूलनया मेध्यान् अश्वान् करोति ॥

[7]एता वा इत्यादि ॥ गतम् । सुवस्य यज्ञाख्य उज्जित्यै उज्जयाय भवति विशिष्टदेवताप्रकरणाभावात् । यजुषा मन्त्रेण योजनं व्यावृत्त्यै भवति । यजुर्वेदपठितत्वाद्दृगेव यजुरुच्यते । संमार्ष्टि संमार्जनेन मेध्यान् मेधार्हान् एनान् करोति । अथो

पाँ न पादाशुहेमन्निति संमार्ष्टि। मेध्यानेवैनान्करोति । अथो स्तौत्येवैनानाजिꣳ सरिष्यतः । [८]विष्णुक्रमान्क्रमते। विष्णुरेव भूत्वेमान्लोकानभिजयति। वैश्वदेवो वै रथः । अङ्कौ न्यङ्कावभितो रथं यावित्याह । या एवं देवता रथे प्रविष्टाः । ताभ्य एव नमस्करोति । आत्मनोऽनार्त्यै । अशमरथंभावुकोऽस्य रथो भवति । य एवं वेद ॥ ३० ॥

स्वदयति पल्पूलयति व्यावृत्त्या अनार्त्यै द्वे च॥५॥

अपित्त्व आजिं युद्धं सरिष्यतः आजिधावनं करिष्यतोऽश्वान् एवं स्तौति दुष्करे कर्मणि व्यवस्थापयितुं उत्तेजयति अपांनपादादिभिः पदैः॥

[८]विष्णुक्रमानित्यादि ॥ गतम् । "विष्णोः क्रमोसि'* इत्यादयो विष्णुक्रमाः । वैश्वदेवो वा इति । विश्वेषां देवानां वाहनत्वात् । 'अङ्कौ न्यङ्कौ'* इति रथोपचारेण रथे प्रविष्टानां देवतानां नमस्कारः पूजा कृता भवति । आत्मनोऽनार्त्यै च भवति । अशमरथंभावुक इति । एवं वेदिता यो वाजपेयेन यजते अस्य रथोऽशमरथंभावुको भवति शमरथाः शमरंहणाः शमरतयो वा निवृत्तोद्योगाः शमरथीभवितुं शीलं यस्य स शमरथंभावुकः । छान्दसः उकञ्प्रत्ययः । ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

इति तृतीये पञ्चमोऽनुवाकः.

*सं. १-७-७.

[1]दे॒वस्या॒हꣳ स॑वि॒तुः प्र॑स॒वे बृ॒हस्पति॑ना वाज॒जिता॒ वाजं॑ जेष॒मित्या॑ह । स॒वि॒तृप्र॑सूत ए॒व ब्रह्म॑णा वाज॒मुज्ज॑यति । दे॒वस्या॒हꣳ स॑वि॒तुः प्र॑स॒वे बृ॒हस्पति॑ना वाज॒जिता॒ वर्‌षि॑ष्ठं॒ नाक॒ꣳ रु॒हेय॒मित्या॑ह । स॒वि॒तृप्र॑सूत ए॒व ब्रह्म॑णा॒ वर्‌षि॑ष्ठं॒ नाक॒ꣳ रोह॒ति । [2]चात्वा॑ले रथच॒क्रं निमि॑त॒ꣳ रोहति । अतो॒ वा अङ्गि॑रस उत्त॒मास्सु॑व॒र्गं लो॒कमाय॑न् । सा॒क्षा॒दे॒व यज॑मानस्सुव॒र्गं लो॒कमै॑ति । आवे॑ष्टयति । वज्रो॒ वै रथ॑ः । वज्रे॑णै॒व दि॒शो॑ऽभि ज॑यति ॥ ३१ ॥
वा॒जि॒नाꣳ साम॑ गायते । अन्नं॒ वै वाज॑ः । अन्न॒मे-

---

[1]देवस्याहं सवितुरित्यादि ॥ अनेन औदुम्बरं रथचक्रं ब्रह्मा आरोहति । ब्रह्मणा परिबृढेन रथचक्रेण कर्मणा वा तेन मन्त्रेण वा । उत्तरेण यजुर्युक्तं यजमान आरोहति रथम् । ब्रह्मणा रथेन कर्मणा वा मन्त्रेण वा वर्षिष्ठं वृद्धतमम् ॥

[2]चात्वाल इत्यादि ॥ निमितं निखातम् । अत इति । रथचक्रात् । गतमन्यत् । आवेष्टयति चक्रं त्रिः प्रदक्षिणमावर्तयति । वज्र इव साधनं रथचक्रम् । तस्मात्तेन भ्रमता वज्रेणैव दिशोऽभिजिता भवन्ति सर्वदिक्संबन्धित्वात् भ्रमणस्य । वाजिनां साम ब्रह्मा गायते । गतमन्यत् ॥

वावरुन्धे । [3]वाचो वर्ष्म देवेभ्योपाक्रामत् । तद्वन-स्पतीन्प्राविशत् । सैषा वाग्वनस्पतिषु वदति । या दुंदुभौ । तस्माद्दुंदुभिस्सर्वा वाचोति वदति । दुंदुभीन्थ्समाघ्नन्ति । परमा वा एषा वाक् ॥ ३२ ॥ या दुंदुभौ । परमयैव वाचाऽवरां वाचमवरुन्धे । अथो वाच एव वर्ष्म यजमानोऽवरुन्धे । [4]इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदि-त्याह । एष वा एतर्हीन्द्रः । यो यजते । यजमान एव वाजमुज्जयति । [5]सप्तदश प्रव्याधानाजिं धाव-

[3]वाचो वर्ष्मेत्यादि ॥ वर्ष्म उच्छ्रितं स्वरूपम् । गतमन्यत् । अतिवदति आहतो दुंदुभिः सर्वान् शब्दानतीत्य वदति शब्दायते । तस्मात् दुंदुभीनित्यादि विधिः । परमयैवेति । परमया दौन्दुभ्या वाचा देवसंबन्धिना हेतुना अवरां वाचं सर्वा मनुष्यार्हामवरुन्धे । यद्वा—परमया वाचा वाक्येन अवरामन्यां सर्वान्वाग्विकल्पान् लभते । अपि च वाचो वर्ष्म उच्छ्रितं स्वरूपं सारं लभते ॥

[4]इन्द्राय वाचं वदतेति दुंदुभीन् संह्रादयन्ति ॥ एष वा इत्यादि । एतर्हि अस्मिन् काले । यजमानो वाजमन्नं उज्जयति, "इन्द्रं वाजं जापयत"* इति लिङ्गात् ॥

[5]सप्तदशेति ॥ प्रव्याधाः शम्याक्षेपाः । इषुक्षेपो इत्येके ।

*सं. १-७-८.

न्ति । सप्तदशꣳ स्तोत्रं भवति । सप्तदशसप्तदश दीयन्ते ॥ ३३ ॥ सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । [6]अर्वाऽसि सप्तिरसि वाज्यसीत्याह । अग्निर्वा अर्वा । वायुस्सप्तिः । आदित्यो वाजी । एताभिरेवास्मै देवताभिर्देवरथं युनक्ति । प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देवरथमेवास्मै युनक्ति ॥ ३४ ॥ [7]वाजिनो वाजं धावत काष्ठां गच्छतेत्याह । सुवर्गो वै लोकः काष्ठा । सुव-

तावत्प्रमाणावकाशे देशेऽवधिं कृत्वा धावन्ति । सप्तदशस्तोमो भवति । सर्वा हस्त्यादयोपि सप्तदशसप्तदश दीयन्ते । सप्तदश इत्यादि । गतम् ॥

[6]अर्वोऽसि सप्तिरसीति प्रष्टिवाहिनं रथं युनक्ति ॥ एताभिः देवताभिः अग्न्यादिभिः एतं रथं देवरथमिव युनक्ति अनेन मन्त्रेण युक्तो देवरथ एव भवतीत्यर्थः । प्रष्टिवाहिनमिति । प्रष्टिस्त्रिपद आधारः तं वहतीति प्रष्टिवाही । यत्र पृष्ठतः एकः पार्श्वयोः द्वौ वहन्ति तं त्रितयवन्तं युनक्ति । देवरथो हि प्रष्टिवाही भवति । तस्मादेवं युक्तो देवरथ एव भवति ॥

[7]वाजिनो वाजं धावतेति चतसृभिः धावतोऽनुमन्त्रयते । स्व-

र्गमेव लोकं यन्ति । सुवर्गं वा एते लोकं यन्ति । य आजिं धावन्ति । प्राञ्चो धावन्ति । प्राङिव हि सुवर्गो लोकः । [8]चतसृभिरनु मन्त्रयते । चत्वारि छन्दांसि । छन्दोभिरेवैनान्त्सुवर्गं लोकं गमयति॥ ३५ ॥ प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । य आजिं धावन्ति । [9]उदञ्च आवर्तन्ते । अस्मादेव तेनं लोकान्नयन्ति । [10]रथविमोचनीयं जुहोति प्रतिष्ठित्यै । आमा वाजस्य प्रसवो जगम्यादित्याह । अन्नं वै वाजः । अन्नमेवावरुन्धे । यथालोकं वा एत उ-

र्गलोकः काष्ठा आजिः स्वर्गसदृशी जयहेतुत्वात् । सुवर्गं वा इत्यादि । गतम् ॥

[8]चतसृभिरिति ॥ अनन्तरोक्ताभिः । चत्वारि प्रधानानि सवनच्छन्दांसि । प्र वा इत्यादि । गतम् ॥

[9]उदञ्च इति ॥ आजिं सृत्वा उदङ्मुखा आवर्तन्ते न दक्षिणामुखाः ॥

[10]रथविमोचनीयमिति ॥ आमावाजस्येत्यादि । गतम् । अयं रथविमोचनीयः । रथविमोचनं प्रयोजनमस्येति 'अनुप्रवचनादिभ्यश्छः' इति छः । यथालोकं वा इत्यादि । यथालोकं यथाऽवकाशं यो यस्यावकाशः स तस्मिन्नाजिसरणेन उज्जयति ।

ज्जयन्ति । य आजिं धावन्ति ॥ ३६ ॥ कृष्णलँ कृष्णलं वाजसृद्भ्यः प्रयच्छति । यमेव ते वाजं लोकमुज्जयन्ति । तं परिक्रीयावरुन्धे । एकधा ब्रह्मण उपहरति । एकधैव यजमाने वीर्यं दधाति । [11]देवा वा ओषधीष्वाजिमयुः । ता बृहस्पतिरुदजयत् । स नीवारान्निरवृणीत । तन्नीवाराणां नीवारत्वम् । नैवारश्चरुर्भवति ॥ ३७ ॥ एतद्वै देवानां

---

एवं सर्वेऽपि किंचित्किंचिल्लोकं वाऽऽजिं जित्वा उज्ज्वला भवन्ति । तस्मात्सर्वेभ्यो वाजसृद्भ्यः एकमेकं कृष्णलं कृष्णलप्रमाणं सुवर्णं प्रयच्छति । कृष्णमेवेत्येके । तं तदीयं लोकं वाहं च परिक्रीय कृष्णलेन क्रीत्वा आत्मीयं करोति । एकधेति । तानि कृष्णलान्यादाय ब्रह्मणे एकीकृत्य ददाति ॥

[11]देवा वा इत्यादि ॥ ओषधीषु ओषधिनिमित्तम् । ताः सर्वा ओषधीः बृहस्पतिरुदजयत् । स तदानीं नीवारान्निरवृणीत निष्कृष्य वृतवान् । निर्वार्य अन्या ओषधीः नीवारान् परिगृहीतवानिति यावत् । तस्मान्निर्वरणान्नीवाराः । कर्मणि घञ् । उपसर्गविकारश्छान्दसः । निरर्थो वा निशब्दः । 'नौ वृ धान्ये' इति घञ् । 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घत्वम् । नैवारश्चरुर्भवतीति विधिः । यन्नीवारा इति विकारे प्रकृतिशब्दः 'शालीन् भुङ्क्ते' इति यथा । नैवारश्चरुर्देवानां परममन्नं अन्ना-

परममन्नम् । यन्नीवाराः । परमेणैवास्मा अन्नाद्ये-नावरमन्नाद्यमवरुन्धे । [12]सप्तदशशरावो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । क्षीरे भवति । रुचमेवास्मिन्दधाति । सर्पिष्वान्भवति मेध्यत्वाय । बार्हस्पत्यो वा एष देवतया ॥ ३८ ॥ यो वाजपेयेन यजते । बार्हस्पत्य एष चरुः । [13]अश्वान्त्सरिष्यतस्सस्रुषश्चावघ्रापयति । यमेव ते वाजं लोकमुज्जयन्ति । तमेवावरुन्धे । अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन्

---

न्तरात् प्रकृष्टमिति । परमेणैवेति । नैवारेण परमेणान्नाद्येन देवेभ्यो दत्तेन हेतुना अवरं मनुष्याभिमतं सर्वं अन्नाद्यमवरुन्धे वशीकरोति ॥

[12]सप्तदशशराव इत्यादि ॥ गतम् । बार्हस्पत्य इत्यादि । एषः वाजपेययाजी देवतया बार्हस्पत्यः बृहस्पतिर्दैवत्यः तस्मादयं चरुर्बार्हस्पत्यः कार्य इति । पत्युत्तरपदलक्षणो ण्यः ॥

[13]अश्वानित्यादि ॥ सरिष्यतः आजिसरणं कर्तुकामान् सस्रुषश्च आजिसरणं कृतवतश्च (कर्मत्वम्) । जिघ्रतेर्ज्ञानार्थत्वादणौ

विमुञ्चति । यमेव ते वाजं लोकमिन्द्रियं दुन्दुभयं उज्जयन्ति । तमेवावरुन्धे ॥ ३१ ॥

अभिजयति वा एषा वाग्दीयन्तेऽस्मै युन-
क्ति गमयति य आजिं धावन्ति
भवति देवतयाऽष्टौ च ॥ ६ ॥

[1]तार्प्यं यजमानं परिधापयति । यज्ञो वै तार्प्यम् । यज्ञेनैवैनꣳ समर्धयति । [2]दर्भमयं परि धापयति । पवित्रं वै दर्भाः । पुनात्येवैनम् । वाजं वा

कर्तुः कर्मत्वम् । यमेवेत्यादि । गतम् । दुन्दुभिविमोचनेन वाजं लोकं इन्द्रियं च अवरुन्धे ॥

इति तृतीये षष्ठोऽनुवाकः.

---

[1]तार्प्यमित्यादि ॥ आज्येन संतृप्तं वासः तार्प्यम् । तृपाख्यस्य वृक्षविशेषस्य विकार इत्येके । परिधानस्य प्राप्तिविशेषत्वात् अणौ कर्तुः कर्मता । यज्ञो वा इति । तत्परिधानत्वात्ताच्छब्द्यम् ॥

[2]दर्भमयमिति ॥ 'द्व्यचश्छन्दसि' इति मयट् । दर्भविकारं वासो यजमानमेव परिधापयति । 'पुनात्येवैनम्' इति द्वयोस्समुच्चयः । विकल्पमेके । केचित्तु समुच्चयस्यासम्भवात् विकल्प-

एषोऽवरुरुथ्सते । यो वाजपेयेन यजते । ओषधयः खलु वै वाजः । यद्दर्भमयं परिधापयति ॥ ४० ॥ वाजस्यावरुद्ध्यै । [3]जाय एहि सुवो रोहावेत्याह । पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्यै । [4]सप्तदशारत्निर्यूपो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । [5]तूपरश्चतुरश्रिर्भवति । गौधूमं चषालम् । न वा एते व्रीहयो न यवाः । यद्गोधूमाः ॥ ४१ ॥ एवमिव हि प्रजापतिस्समृद्ध्यै । अथो

स्य चान्याय्यत्वात् दर्भमयं पत्नीं परिभापयतीति । एनमिति कथम्? तादृशपत्नीयोगेन यजमान एव पूतो भवतीत्यदोषः । उक्तं चाचार्यैः 'दर्भमयं पत्नीं' इति । वाजं वा इत्यादि । गतम् ॥

[3]पत्निया एवेति ॥ यजमानादनन्तरं पत्न्यपि यज्ञमारभत इति । अन्वारम्भः 'जाय एहि'* इति पत्न्यामन्त्रणम् । स च अनवच्छित्यै पत्नीयजमानयोरविच्छेदाय भवति ॥

[4]सप्तदशारत्निरिति ॥ चतुर्विंशतिरङ्गुल्योऽरत्निः । गतमन्यत् ॥

[5]तूपर इत्यादि ॥ तूपरः शृङ्गहीनः । इह तु चषालादूर्ध्वं या शिखा तद्रहितत्वाद्यूपस्तूपर उच्यते । चतस्रोऽश्रयो यस्य स चतुरश्रिः । गौधूमं गोधूमविकारः पिष्टमय इत्येके । क-

*सं. १-७-९.

अमुमेवास्मै लोकमन्नवन्तं करोति । [6]वासोभिर्वे-ष्टयति । एष वै यजमानः । यद्यूपः । सर्वदेवत्यं वासः । सर्वाभिरेवैनं देवताभिस्समर्धयति । अथो आक्रमणमेव तथ्सेतुं यजमानः कुरुते । सुवर्गस्य लोकस्य समष्ट्यै । [7]द्वादश वाजप्रसवीयानि जुहोति ॥ ४२ ॥ द्वादश मासास्संवथ्सरः । संवथ्सरमेव प्रीणाति । अथो संवथ्सरमेवास्मा उप दधा-

पाल[1] इत्यन्ये । गोधूमा उक्ताः । न वा एत इति । प्रसिद्धजात्यन्वयाभावेन गोधूमप्रजापत्योस्साम्यात् समृद्धिः । अथो इति । यूपेन परलोकनयः पुनरपि तदुपरि गोधूमसंबन्धः पुनरपि देवलोकमन्नवन्तं यजमानाय करोति ॥

[6]वासोभिरित्यादि ॥ वेष्टनमुपरिबन्धनम् । प्राधान्यात् यूपयजमानयोस्ताच्छब्द्यम् । 'अग्नेस्तूषाधानम्'[2] इत्यत्र वाससः सर्वदेवत्यत्वमुक्तम् । तादृशवाससंबन्धेन सर्वाभिर्देवताभिर्यूपं समृद्धं करोति तद्वन्तं वा यजमानम् । अथो अपि च उपर्युपरि वासोवेष्टनेन आक्रमणं सोपानं सेतुं सोपानपरंपरां स्वर्गस्य प्राप्त्यै कुरुते ॥

[7]द्वादशेत्यादि ॥ 'वाजश्च प्रसवश्च'[3] इत्यादीनि । वाजस्य अन्नस्य प्रसव उत्पत्तिः तत्प्रयोजनानि । अनुप्रवचनादित्वाच्छः ॥

[1] लाप. [2] सं. ६-१-१. [3] सं. १-७-९.

ति । सुवर्गस्य लोकस्य समष्ट्यै । [8]दशभिः कल्पै रोहति । नव वै पुरुषे प्राणाः । नाभिर्दशमी । प्राणानेव यथास्थानं कल्पयित्वा । सुवर्गं लोकमेति । एतावद्वै पुरुषस्य स्वम् ॥ ४३ ॥ यावत्प्राणाः । यावदेवास्यास्ति । तेन सह सुवर्गं लोकमेति । [9]सुवर्देवाꣳ अगन्मेत्याह । सुवर्गमेव लोकमेति । [10]अमृता अभूमेत्याह । अमृतमिव हि सुवर्गो लोकः । [11]प्रजापतेः प्रजा अभूमेत्याह । प्राजापत्यो वा अयं लोकः । अस्मादेव तेन लोकान्नैति ॥४४ [12]समहं प्रजया सं मया प्रजेत्याह । आशिषमेवै-

[8]दशभिरिति ॥ 'आयुर्यज्ञेन कल्पताम्'* इत्यादिभिः यज्ञस्य क्लृप्तिहेतुभिरारोहति । गतमन्यत् । तेन सहेति । दशशब्दान्वयात् सर्वेण तेजसा सह स्वर्गं गच्छति ॥

[9]'सुवर्देवा अगन्म'* इत्यग्रं प्राप्य जपति ॥

[10]अमृतमिवेति ॥ अमृतमिव मरणरहिताः स्वर्वासिन इत्यर्थः ॥

[11]प्राजापत्यो वा इति ॥ मनुष्यलोकस्य प्राजापत्यत्वात् 'प्रजापतेः प्रजा अभूम'* इति वचनमस्माल्लोकादागमनाय भवति ॥

[12]समहं प्रजयेति ॥ गृहपश्वप्रेक्षणम् । आशिषमिति । समित्युपसर्गाक्षिप्तां संगंसयित्येताम् ॥

* सं. १-७-९.

तामाशास्ते । [13]आसपुटैर्घ्नन्ति । अन्नं वा इयम् । अन्नाद्येनैवैनꣳ समर्धयन्ति । [14]ऊषैर्घ्नन्ति । एते हि साक्षादन्नम् । यदूषाः । साक्षादेवैनमन्नाद्येन समर्धयन्ति । [15]पुरस्तात्प्रत्यञ्चं घ्नन्ति ॥ ४५ ॥ पुरस्ताद्धि प्रतीचीनमन्नमद्यते । [16] शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते । [17]दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते । [18]ईश्वरो वा एष पराङ्प्रदघः । यो यूपꣳ

[13] आसपुटैरित्यादि ॥ कृष्टक्षेत्रपांसव आसाः तत्पुटिकाभिरवतरन्तं घ्नन्ति ॥

[14] एते हीति ॥ आधानादौ साधनभावेन साक्षादन्नहेतुत्वात् ॥

[15]पुरस्तादित्यादि ॥ यूपस्य पुरस्तात् स्थिताः प्रत्यञ्चं प्रत्यमुखं आत्माभिमुखं घ्नन्ति । पुरस्ताद्धीति । प्राङ्मुखैः भुञ्जानैः पुरस्तात् स्थितात् भाजनादादाय प्रतीचीनं प्रत्यग्गमनं आस्ये प्रक्षिप्य अन्नमद्यते ॥

[16] शीर्षत इति ॥ शिरसि शीर्षतो भवति आस्ये प्रक्षिप्तं जठरमागच्छति ॥

[17]दिग्भ्य इति ॥ एवं सर्वे सर्वासु दिक्षु घ्नन्ति । दिग्भ्यस्सर्वाभ्यस्समाहृत्य अस्मै यजमानाय यजमानार्थं अवरुन्धते परिगृह्णन्ति ॥

[18]ईश्वरो वा एष इत्यादि ॥ यो यूपं रोहति एष प-

रोहति । हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतꣳ सुवर्गो लोकः ॥ ४६ ॥ अमृत एव सुवर्गे लोके प्रति तिष्ठति । शतमानं भवति । शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति तिष्ठति ।
[19]पुष्ट्यै वा एतद्रूपम् । यदजा । त्रिस्संवथ्सरस्या-
न्यान्पशून्परि प्रजायते । बस्ताजिनमध्यव रोह-
ति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति ॥ ४७ ॥

परिधापयति गोधूमां जुहोति स्वं नैति
प्रत्यञ्चं घ्नन्ति लोको नव च ॥ ७ ॥

---

राज्ञ्रू पुनरावृत्त एव प्रदघः प्रकर्षेण हन्तुं ईश्वरः स्यात् अ-प्रतिष्ठितो भवति न स्वर्गादवरूढो मन्तव्यः । शतमानमिति । गतम् *॥

[19]पुष्ट्यै वा इति ॥ अजानां पुष्ट्या रूपं पुष्टिरेव स्वयं अजारूपेण वर्तते । षष्ठ्यर्थे चतुर्थी । कथमस्याः पुष्टिरूपत्व-मित्याह—त्रिरित्यादि । अत्यर्थे परिशब्दः । इयं हि अन्यान् गवादीन् पशूंश्च अतीत्य संवत्सरस्य त्रिः प्रजायते संवत्सर ए-कस्मिन् त्रिः प्रजायते अतिरेकेणापत्यमुत्पादयति । त्रिरिति व-चनेनात्यन्तसंयोगाभावात् संबन्धसामान्ये षष्ठी । 'कृत्वोर्थप्रयो-गे' इति वा । एवमजत्वजातेर्महाभागत्वात् बस्ताजिनमध्य-वरोहति । एवं कुर्वन् पुष्ट्यां प्रजननात्मिकायां प्रतिष्ठितो भवति ॥

इति तृतीये सप्तमोऽनुवाकः.

---

*सं. २-३-११.

[1]सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्येवान्नानि । तान्येवावरुन्धे । सप्त ग्राम्या ओषधयः । सप्तारण्याः । उभयीषामवरुद्ध्यै । [2]अन्नस्यान्नस्य जुहोति । अन्नस्यान्नस्यावरुद्ध्यै । [3]यद्वाजपेययाज्यनवरुद्धस्याश्नीयात् ॥ ४८ ॥ अवरुद्धेन व्यृद्ध्येत । सर्वस्य समवदाय जुहोति । अनवरु-

---

[1]सप्तान्नहोमानित्यादि ॥ 'वाजस्येमम्'* इत्यादयोऽन्नहोमाः। सप्त वा इत्यादि । ग्राम्यारण्ययोस्सामान्येनाभिधानम् । तत्र सप्त ग्राम्या ओषधयः तिलमाषव्रीहियवाः प्रियङ्गवणवो गोधूमा इति । अथ सप्तारण्याः श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुका गार्मुताश्च वास्त्वानि च वेणुयवाश्चेति ॥

[2]अन्नस्यान्नस्येति ॥ सर्वान्नस्य सर्वमन्नमेकीकृत्यान्नहोमाः कर्तव्याः सर्वस्यान्नस्य लाभाय ॥

[3]यदित्यादि ॥ यदि वाजपेययाजी अनवरुद्धस्य इदानीं यागकालेऽपरिगृहीतस्य उत्तरकालं अश्नीयात् । कर्मणि षष्ठी । अवरुद्धेन व्यृद्ध्येत इदानीं यदवरुद्धं तदेनमवरुद्धग्राहिणं जह्यात् । तस्मात् सर्वमिदानीं अनेनावरोद्धव्यम् । तदर्थं सर्वस्य समवदाय सर्वमन्नमेकीकृत्य ततोऽवदायान्नहोमान् जुहोति । अनवरुद्धस्यापि इदानीमेवावरोधनार्थं तद्भवति । ततो न कदाचित् व्यृद्धिः ॥

---

*सं. १-७-१०.

द्यस्यावरुद्ध्यै । [4]औदुम्बरेण स्रुवेण जुहोति । ऊ-
र्ग्वा अन्नमुदुम्बरः । ऊर्ज एवान्नाद्यस्यावरुद्ध्यै ।
[5]देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत
एवैनं ब्रह्मणा देवताभिरभिषिञ्चति । [6]अन्नस्यान्न-
स्याभिषिञ्चति । अन्नस्यान्नस्यावरुद्ध्यै ॥ ४१ ॥
पुरस्तात्प्रत्यञ्चमभिषिञ्चति । पुरस्ताद्धि प्रतीचीनमन्नमद्यते । शीर्षतोऽभिषिञ्चति । शीर्षतो ह्यन्नमद्यते । [7]आ मुखादन्ववं स्रावयति । मुखत एवास्मा अन्नाद्यं दधाति । [8]अग्नेस्त्वा साम्राज्येनाभिषिञ्चा-

[4]औदुम्बरेणेति ॥ 'अनुदात्तादेश्च' इत्यङ् । ऊर्ग्वा इति । रसवतोऽन्नस्य हेतु; उदुम्बरः ॥

[5]देवस्य त्वेत्याद्यभिषेकः ॥ सवित्राऽभ्यनुज्ञात एव ब्रह्मणा मन्त्रेण देवताभिः सह अभिषिञ्चति ॥

[6]अन्नस्यान्नस्येति ॥ सर्वौषधस्य पूरयित्वा तेनाभिषिञ्चति सर्वान्नलाभाय तत् भवति । पुरस्तादित्यादि । गतम् ॥

[7]आमुखादित्यादि ॥ यावत् मुखमविच्छेदेन स्रावयति मुखादारभ्य अन्नाद्यमस्मै दधाति स्थापयति ॥

[8]अग्नेस्त्वेत्यादि ॥ अग्नेस्साम्राज्येन सम्यग्राजनहेतुना यज्ञे नाभिषिञ्चामीत्युक्ते कः पुनरसावित्याह—एष खलु वा अग्नेः

मीत्याह । एष वा अग्नेस्सवः । तेनैवैनमभिषिञ्च-ति । [9]इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह ॥ ५० ॥ इन्द्रियमेवास्मिन्नेतेन दधाति । बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनमभिषिञ्चति । [10]सोमग्रहाꣳश्चावदानीयानि चर्त्विग्भ्य उप हरन्ति । अमुमेव तैर्लोकमन्नवन्तं करोति । सुराग्रहाꣳश्चानवदानीयानि च वाजसृद्भ्यः । इममेव तैर्लोकमन्नवन्तं

---

साम्राज्यहेतुः सवः यज्ञः । यद्वा—एतत् सर्वौषधं अग्नेस्साम्राज्यहेतुः सवः । तेनैवैनमभिषिञ्चति ॥

[9]इन्द्रस्य त्वेत्यादि ॥ 'एष वा इन्द्रस्य सवः' इत्याद्यनुक्तेऽपि गम्यते ॥ गतमन्यत् ॥

[10]सोमग्रहांश्चेत्यादि ॥ सोमग्रहांश्च अवदानीयानि च मांसानि प्राजापत्यानां पशूनां तानृत्विग्भ्य उपहरन्ति ददति ॥ अमुमिति । तैः परलोके अन्नलाभः । सुराग्रहांश्चानवदानीयानि च शिष्टानि मांसानि वाजसृद्भ्यः उपहरन्तीत्येव । तैर्मनुष्यलोकेऽस्मिन्नन्नलाभः । दृष्टार्थत्वाद्वाजसृताम् । अथो अपि च उभयीषु उभयलोकवासिनीषु प्रजासु अभिषिच्यते आधिपत्येन स्थाप्यते । लोकप्रसङ्गेन प्रजानामाक्षेपः ॥

करोति । अथो उभयीष्वेवाभिषिच्यते । [11]विमाथं कुर्वते वाजसृतः ॥ ५१ ॥ इन्द्रियस्यावरुद्ध्यै । [12]अनिरुक्ताभिः प्रातस्सवने स्तुवते । अनिरुक्तः प्रजापतिः । प्रजापतेराप्त्यै । वाजवतीभिर्माध्यंन्दिने । अन्नं वै वाजः । अन्नमेवावरुन्धे । शिपिविष्टवतीभिस्तृतीयसवने । यज्ञो वै विष्णुः । पशवश्शिपिः । यज्ञ एव पशुषु प्रति तिष्ठति । [13]बृ-

---

[11]विमाथमिति ॥ विप्रतिपत्त्याऽपहारो विमाथः । थाथादिनोत्तरपदान्तोदात्तत्वम् । लब्धं मांसमन्योन्यस्मात् अपहरन्ति । इन्द्रियस्य वीर्यस्य लाभाय तत् भवति । सामर्थ्यप्रदर्शनं सामर्थ्यलाभालाभार्थं भविष्यति[1] ॥

[12]अनिरुक्ताभिरित्यादि ॥ अव्यक्तदेवताकाभिस्स्तोत्रियाभिः स्तुवते अनिरुक्तात्मनः प्रजापतेराप्त्यै तद्भवति । वाजवत्यः वाजशब्दवत्यः । शिपिविष्टवत्यः शिपिविष्टो विष्णुर्गृह्यते । तत्र यज्ञो विष्णुश्शिपिविष्टो भवति । पशवः शिपयो रश्मयः । जातावेकवचनम् । यैर्विष्टो विष्णुः ते रश्मयः पशवः पशूनां स्थितिहेतुत्वात् । तस्माच्छिपिविष्टवतीभिः स्तोत्रं यज्ञे पशुषु च प्रतिष्ठायै भवति ॥

---

[1]इदं वाक्यं तञ्जापुरस्थितकोशागारस्थपुस्तके न विद्यते.

हृदन्त्यं भवति । अन्तमेवैनꣳ श्रियै गमयति ॥ ५२

अश्नीयादन्नस्यान्नस्यावरुद्ध्या इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह वाजसृतश्शिपिस्त्रीणि च ॥ ८ ॥

[1]नृषदं त्वेत्याह । प्रजा वै नृन् । प्रजानामेवैतेन सूयते । द्रुषदमित्याह । वनस्पतयो वै द्रु । वन-

---

[13]बृहत् अन्त्यस्तोत्रं भवति यः अन्तं समाप्तिं परिपूर्णतां गमयत्येनम् । गत्यर्थत्वादणौ कर्तुः कर्मता ॥

इति तृतीये अष्टमोऽनुवाकः.

---

[1]नृषदं त्वेत्यादि ॥ 'उपयामगृहीतोसि नृषदं त्वा'* इति पञ्चैन्द्रानतिग्राह्यान्गृह्णाति । प्रजा वै नृनिति विभक्तिव्यत्ययः । प्रजा वै नर इति यावत् । तस्मात् प्रजानां सर्वासां सूयते यजमानः स्वामित्वेन अनुज्ञायते एतेन 'नृषदं त्वा गृह्णामि'* इति ग्रहणेन । नृभिस्सदनं तत्स्वामित्वमेव, यदा ह्ययं नृगामीष्टे तदा नृषु सीदन् भवति । एवं 'द्रुषदं त्वा'* इत्यादि वेदितव्यम् । वनस्पतयो वै द्रु इति । 'सुपां सुलुक्' इति जसो लुक् । भुवनसदमित्यादि । 'भुवनसदं त्वा गृह्णामि'* इति ग्रहणेन भुवनं स्वामित्वेन गच्छति । कथमित्याह—यदेति । यदा अयं पुरुषो वसीयान् वसुमत्तरो

---

*तै. सं. १-७-१२.

स्पतीनामेवैतेन सूयते । भुवनसदमित्याह । यदा वै वसीयान्भवति । भुवनमगन्निति वैतमाहुः । भुवनमेवैतेन गच्छति ॥ ५३ ॥ [2]अफ्सुषदं त्वा घृतसदमित्याह । अपामेवैतेन घृतस्य सूयते । व्योमसदमित्याह । यदा वै वसीयान्भवति । व्योमागन्निति वैतमाहुः । व्योमैवैतेन गच्छति । [3]पृथिविषदं त्वाऽन्तरिक्षसदमित्याह । एषामेवैतेन लोकानाꣳ सूयते । तस्माद्वाजपेययाजी न कं चन प्र-

---

भवति तदानीं वसीयांसं सर्वेऽप्याहुः अहो महाभागोऽयं भुवनं भूतजातं अखिलं अगन् अगमत् गमिष्यति अचिरात् स्वामी भविष्यतीति । यदि ह्यप्ययं कृत्स्नस्य भुवनस्येष्टे ततो दोषवान् भवति। गमेः 'छन्दसि लुङ्लङ्लिटः' इति भविष्यति लुङ्, 'मन्त्रे घस' इति लुक्, 'मोनो धातोः' इति नत्वम् ॥

[2]अप्सुषदमिति ॥ 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । अपां घृतस्य च स्वाम्यनुज्ञायते । व्योमसदमिति । यदाऽसौ वसीयान् भवति तदा एतं पुरुषं व्योम परं रक्षकं धर्मं गमिष्यति अयं महानुभावोऽचिराद्भविष्यतीति । समानमन्यत् ॥

[3]एषामेवेति ॥ एषां लोकानां अयं स्वामी गृह्यते सूयते अत एवास्य स्वत्वमिति । तस्माद्वाजपेययाजी वाजपेयेनेष्टवान् कांचिदपि गुर्वादिकमपि न प्रत्यवरोहति दृष्ट्वा वाहनादिभ्यो नाव-

त्यवरोहति । अपीव हि देवतानांꣳ सूयते ॥ ५४ ॥ नाकसदमित्याह । यदा वै वसीयान्भवति । नाकमगन्निति वैतमाहुः । नाकमेवैतेन गच्छति । [4]ये ग्रहाः पञ्चजनीना इत्याह । पञ्चजनानामेवैतेन सूयते । अपाꣳरसमुद्वयसमित्याह । अपामेवैतेन रसस्य सूयते । सूर्यरश्मिꣳ समाभृतमित्याह सशुक्रत्वाय ॥ ५५ ॥

गच्छति सूयते नवं च ॥ ९ ॥

[1]इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । सोऽ-

---

तरति नाभ्युपगच्छति न प्रत्युत्तिष्ठति न चासनाच्चलति । कुत इत्याह—अपीवेति । यस्मादेवं देवतानामपीव सूयते स्वाम्यनुज्ञायते । एवार्थे इवशब्दः देवपूजा[....शब्दः देवानामेव । पूजा] र्थो वा । नाकं परमसुखस्थानम् ॥

[4]निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । 'दिक्संख्ये संज्ञायाम्' इति समासः । अपां तद्रसस्य च स्वामी भवति । सशुक्रत्वं सवीर्यत्वमुत्पादयितृत्वम् । यद्वा—सजलत्वाय सूर्यरश्मीनां वृष्टिहेतुत्वात् ॥

इति तृतीये नवमोऽनुवाकः.

---

[1]इन्द्रो वृत्रं हत्वेत्यादि ॥ दर्शपूर्णमासब्राह्मणशेषः । प्राजापत्यं काण्डम् । असुरान् पराभाव्य पराभूतान् कृत्वा, अमावास्यां

मावास्यां प्रत्यागच्छत् । ते पितरः पूर्वेद्युरागच्छन् । पितॄन् यज्ञोऽगच्छत् । तं देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुः । तेऽब्रुवन्वरं वृणामहै । अथ वः पुनर्दास्यामः । अस्मभ्यमेव पूर्वेद्युः क्रियाता इति ॥ ५६ ॥ तमेभ्यः पुनरददुः । [५]तस्मात्पितृभ्यः पूर्वेद्युः क्रियते । यत्पितृभ्यः पूर्वेद्युः करोति । पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते । [६]सोमाय पितृपीताय स्वधा नम इत्याह ।

---

प्रति अमावास्यां लक्षीकृत्य अमावास्यायामागच्छत् । पूर्वेद्युः पितर आगताः । यज्ञश्च दर्शपूर्णमासाख्यः पितॄनगच्छत् पितृभिस्सहावसत् । तं देवा इत्यादि । गतम् ॥

[५]तस्मादित्यादि ॥ पूर्वेद्युः पिण्डपितृयज्ञः पितृभ्यः क्रियते पूर्वेद्युः पितृभ्य एव कर्तव्यत्वेन देवैर्दत्तत्वात् । तस्मात्तेन पितृयज्ञेन पितृभ्यो यज्ञं दर्शपूर्णमासाख्यं निष्क्रीय उत्तरेद्युः प्रतनुते प्रकर्षेण विस्तारयति निर्बाधमारभते यजमानः ॥

[६]सोमाय पितृपीतायेति ॥ दक्षिणाग्नौ स्थालीपाकहोमः । अस्मिन् पित्रादिभिः पीताय सोमाय अमृतात्मने स्वधा अमृतात्मकमिदं हविरस्तु नमस्कारश्चास्तु तस्मै । पितुरवेति । पितुस्सकाशादेव सोमपीथं लभते । अनेन होमेन पितुर्यः सोमपीथः तमेव ल-

पितुरेवाधि सोमपीथमव रुन्धे । न हि पिता प्रमीयमाण आहैष सोमपीथ इति । 'इन्द्रियं वै सोमपीथः । इन्द्रियमेव सोमपीथमव रुन्धे । तेनैन्द्रियेण द्वितीयां जायामभ्यश्नुते ॥ ५७ ॥ एतद्वै ब्राह्मणं पुरा वाजश्रवसा विदामक्रन्न् । तस्मात्ते द्वेद्वे जाये अभ्यांक्षत । य एवं वेद । अभि द्वितीयां

ब्ध्वा कर्मयोग्यो भवति । ननु पुत्रत्वादेवात्र पितुः सोमपीथो गृहादिवत्तदभावे भविष्यतीति किं तदर्थेन होमेन, तत्राह—न हीति । प्रमीयमाणः म्रीयमाणः पिता न ह्येष सोमपीथ इत्याह । गृहादिवन्न हस्ते प्रयच्छतीति यावत् । तस्माद्धोमेनैव पितुस्सकाशात् सोमपीथावरोध इति होमः कार्यः ॥

'इन्द्रियं वा इत्यादि ॥ इन्द्रियं वीर्यम् । तद्धेतुत्वात्ताच्छब्द्यम् । तस्मात् सोमपीथार्थेन होमेन इन्द्रियमेवावरुन्धे । ततः तेन पितुरागतेन द्वितीयेन इन्द्रियेण द्वितीयां जायामभ्यश्नुते भोक्तुं समर्थो भवति । एतद्वा इत्यादि । एतत् पितुस्सोमपीथावरोधेन ब्राह्मणं वाजश्रवसः पुत्रा ऋषयः पूर्वं विदामक्रन् विदितवन्तः । 'अम्युत्सादयाम्' इत्यादिना आम्प्रत्ययो निपात्यते । करोतेर्लुङ् परस्यानुप्रयोगः । 'मन्त्रे घसः' इति लुक् । तस्मात् ते द्वेद्वे जाये अभ्याक्षत भोक्तुं समर्था अभूवन् । ऊदित्त्वादिडभावः । एवं वेदिताऽपि द्वितीयां जायां भोक्तुं शक्नोतीति ॥

जायामश्नुते । [5]अग्नये कव्यवाहनाय स्वधा नम इत्याह । य एव पितृणामग्निः । तं प्रीणाति । [6]तिस्र आहुतीर्जुहोति । त्रिर्निदधाति । षट्थ् सं पद्यन्ते ॥ ५८ ॥ षड्वा ऋतवः । ऋतूनेव प्रीणाति । [7]तूष्णीं मेक्षणमादधाति । अस्ति वा हि षष्ठ ऋतुर्न वा । [8]देवान् वै पितृन्प्रीतान् । मनुष्याः पि-

[5]अग्नये कव्यवाहनायेत्यपि । तथैव होमः । पितृणां अग्निः कव्यवाहनः ॥

[6]तिस्र इति ॥ एते द्वे उक्ते । 'यमायाङ्गिरस्वते' इति शाखान्तरीया तृतीया वेदितव्या । त्रिर्निदधातीति । सकृत् स्फ्योल्लिखिते त्रीन् पिण्डान् निदधाति । षडित्यादि । गतम् ॥

[7]तूष्णीमिति ॥ पक्षान्तरमिदम् । इहाम्नाते द्वे एवाहुती त्रय एव पिण्डा इति पक्षः । अथ मेक्षणस्य तूष्णीमाधानम् । एवं षष्ठमस्ति नास्ति । हुतत्वादस्ति । तूष्णीं हुतत्वान्नास्ति च। षष्ठश्चर्तुरस्ति वा न वा हेमन्तशिशिरयोरेकत्वात् । तस्मात्पञ्चत्वात् ऋतून् प्रीणयति ॥

[8]देवान्वा इत्यादि ॥ द्विप्रकाराः पितरः सन्ति देवात्मानः ये नित्याः सन्ति, मनुष्यात्मानः ये मृताः पितृलोकं प्रपद्यन्ते । तत्र देवान् पितृन् प्रीतान् । 'अनुर्लक्षणे' इत्यनोः कर्मप्रवचनीयत्वम् । तत्प्रीत्या हेतुना मनुष्याः अनुप्रपिपते अनुपान-

तरोऽनु प्रपिपते । तिस्र आहुतीर्जुहोति । त्रिर्निद-
धाति । [9]षट्थ् संपद्यन्ते । षड्वा ऋतवः ॥ ५९ ॥
ऋतवः खलु वै देवाः पितरः । ऋतूनेव देवान्पि-
तॄन्प्रीणाति । तान्प्रीतान् । मनुष्याः पितरोऽनु प्र-
पिपते । [10]सकृदाच्छिन्नं बर्हिर्भवति । सकृदिव हि
पितरः । [11]त्रिर्निदधाति । तृतीये वा इतो लोके
पितरः । तानेव प्रीणाति । [12]पराङावर्तते ॥ ६० ॥

---

मिव कुर्वते, तेन च प्रीयन्त इति । पिबतेर्व्यत्ययेनात्मनेपदम् । शपः श्लुः अभ्यासस्य चेत्वम् । यस्मादेवं तस्मात् तिस्र आहुतीः जुहोति । त्रिर्निदधाति इति पूर्वमस्माभिरुक्तमिति ॥

[9]कथं पुनस्तेषां प्रीतिः, के वा ते देवाः पितर इत्याह— षडित्यादि ॥ एवं हि षड्गुन्वयात् षट्संख्याः ऋतवः प्रीता भवन्ति । ऋतवो हि द्वे देवाः पितरः ततस्तान् प्रीतान् मनुष्या अपि पितरः प्रीता भविष्यन्तीति ॥

[10]सकृदिति ॥ पितरो नाम सकृत् एकवारं गता भवन्ति न द्वितीयं गच्छन्ति । यद्वा—सकृदुपचारप्रियाः ॥

[11]त्रिर्निदधाति ॥ पिण्डं ददाति । इतो लोकादारभ्य तृतीये लोके पितरः ॥

ह्रीका हि पितरः। [13]ओष्मणो व्यावृत उपास्ते। ऊष्मभागा हि पितरः। [14]ब्रह्मवादिनो वदन्ति। प्राश्यां३ न प्राश्या३मिति। यत्प्राश्नीयात्। जन्यमन्नमद्यात्। प्रमायुकस्स्यात्। यन्न प्राश्नीयात्। अहविस्स्यात्॥ ६१॥ पितृभ्य आवृश्चयेत। अ-

---

[12]पराङिति॥ पिण्डं दत्वा उदङ्मुख आवृत्यास्ते। ह्रीका लज्जाशीलाः। तस्मात् भुञ्जानान्नेक्षेत। औणादिकः कन्प्रत्ययः कपिलकादित्वाल्लत्वविकल्पः॥

[13]ओष्मण इति॥ ऊष्मण आव्यावृत उपास्ते। ऊष्मा हि पितॄणां भागः। तस्मादाव्यावृतः आव्यावृत्तेः ऊष्मणि अभिपर्यावर्तेत॥

[14]ब्रह्मवादिन इत्यादि॥ स्थालीशिष्टं किं प्राश्यं किं वा न इति विचारमाहुः ब्रह्मवादिनः। 'विचार्यमाणानां' इति प्लुतः। यदि प्राश्नीयात् जन्यमन्नं अशितं स्यात्। जनेषु प्रसिद्धं जन्यं पित्रर्थत्वात् सर्वजनप्रसिद्धमशितं स्यात्। यद्वा— जन्यत्वादेतं [देव] जन्यं परभूतमशितं स्यात्, ततश्चात्ता प्रमायुकः स्यात् म्रियेत। छान्दसः उकञ्। अप्राशने अहविस्स्यात् हुतहविषां शेषभक्षणस्य दृष्टत्वात् हविर्व्यापत्तौ कर्मलोपात् पितृभ्यो हीयते। तस्मात् अवघ्रेयमेव। तत् हि प्राशितमिव च न भवति, अनभ्यवहृतत्वात्। अप्राशितमिव च न भवति अवघ्रातत्वात्। इवशब्दः कोटिद्वयानिश्चयात्॥

वृघ्रेयमेव । तन्नेव प्राशितं नेवाप्राशितम् । [15]वीरं वा वै पितरः प्रयन्तो हरन्ति । वीरं वा ददति । दशां छिनत्ति । हरणभागा हि पितरः । पितॄनेव निरवदयते । [16]उत्तर आयुषि लोम छिन्दीत । पितृणाᳮ ह्येतर्हि नेदीयः ॥ ६२ ॥ [17]नमस्करोति ।

---

[15]वीरं वेत्यादि ॥ पितरो हि प्रयन्त इतो गच्छन्तः वीरं हरन्ति वा अपहरन्ति वा कर्मणो वैगुण्ये । पौष्कल्ये वा वीरमेकं ददति अपूर्वमुत्पादयन्ति । तस्मादन्यतरस्यावश्यकत्वात् पौष्कल्यस्य च दुस्संपादत्वात् हर्तव्यवीरप्रत्याम्नानतया दशां छिनत्ति वाससोऽन्तं छिन्द्यात् । वासस्थाने निदधातीत्येके । ततो हरणभागान् यस्यकस्य चिद्धरणेन तृप्तान् पितॄन्निरवदयते वीरहरणान्निष्कृष्य अन्येन छिद्यमानेन प्रीणयति ॥

[16]उत्तरे तु आयुषि स्वं लोम छिन्दीत न दशाम् । शतवर्षस्य ब्राह्मणस्यायुषस्तृतीयो भाग उत्तरमायुः षट्षष्टिभ्यो वर्षेभ्यः अष्टाभ्यश्च मासेभ्यः । पञ्चाशत इत्येके । हेतुमाह—अस्मिन्नायुषि पितॄणां लोकः नेदीयः प्रत्यासन्नतरं भवति उपरि भावात् ॥

[17]नमस्करोतीत्यादि ॥ नमस्कारो हि पितॄणां प्रीणनम् ॥

नमस्कारो हि पितृणाम् । [18]नमो वः पितरो रसाय । नमो वः पितरश्शुष्माय । नमो वः पितरो जीवाय । नमो वः पितरस्स्वधायै । नमो वः पितरो मन्यवे । नमो वः पितरो घोराय । पितरो नमो वः । य एतस्मिन्लोके स्थ ॥ ६३ ॥ युष्मा१स्ते नु । येऽस्मिन्लोके । मां ते नु । य एतस्मिन्लोके स्थ । यूयं तेषां वसिष्ठा भूयास्त । येऽस्मिन्लोके । अहं तेषां वसिष्ठो भूयासमित्याह । वसिष्ठस्समानानां भवति । य एवं विद्वान्पितृभ्यः करोति । [19]एष वै मनुष्याणां यज्ञः ॥ ६४ ॥ देवानां वा इतरे यज्ञाः । [20]तेन वा एतत्पितृलोके च-

[18]नमो वः पितर इति नमस्कारमन्त्रेण जपः । एते च मन्त्राः भक्षानुवाके* व्याख्याताः । वसिष्ठो वसुमत्तमः एवं वेदिता यः पितृभ्यः करोति पिण्डपितृयज्ञं करोति ॥

[19]एष वा इति ॥ मनुष्यान् पितॄनुद्दिश्य करणात् मनुष्ययज्ञः॥

[20]तेन वा इत्यादि ॥ यत् अयं पितृभ्यः पिण्डपितृयज्ञं

*सं. ३-२-५.

रति । यत्पितृभ्यः करोति । स ईश्वरः प्रमेतोः । प्राजापत्ययर्चा पुनरैति । [21]यज्ञो वै प्रजापतिः । यज्ञेनैव सह पुनरैति । न प्रमायुको भवति । [22]पितृलोके वा एतद्यजमानश्चरति । यत्पितृभ्यः करोति । स ईश्वर आर्तिमार्तोः । प्रजापतिस्त्वावैनं तत उन्नेतुमर्हतीत्याहुः । [23]यत्प्राजापत्ययर्चा पुनरैति । प्रजापतिरेवैनं तत उन्नयति ।नार्तिमार्च्छति यजमानः ॥ ६५ ॥

करोति तेन हेतुना एतत् एष पितृलोके चरति मृत इव भवति । क्रियाविशेषणं वा पितृलोके खल्वेतच्चरणं यदयं पितृभ्य ः करोति । ततः स एष प्रमेतोः प्रमर्तु ईश्वरस्स्यात् । तस्मात् तत्परिहाराय प्राजापत्यया 'प्रजापते न त्वत्'* इत्येतया ऋचा पुनरैति गार्हपत्यदेशं पुनरागच्छति ॥

[21]यज्ञो वा इत्यादि ॥ गतम् ॥

[22]आर्तिमार्तोः आर्तिं गन्तुं व्यसने पतितुं ईश्वरः स्यात् । तत्र प्रजापतिरेव खलु एनं तत आर्तेः उन्नेतुं उद्धर्तुं अर्हति शक्नोति ॥

*सं. १-२-५.

इत्थंभुते पद्यन्ते पद्यन्ते षड्वा ऋतवो वर्त-
तेऽहंविस्स्यान्नेदीयस्स्थ यज्ञो यजमानश्चरति यत्पि-
तृभ्यः करोति पञ्च च ॥ १० ॥

देवासुरा अग्नीषोमयोर्देवा वै यथा दर्शे दे-
वा वै यदन्यैर्ग्रहैर्ब्रह्मवादिनो नाग्निष्टोमो न सावित्रं
देवस्याहं तार्प्यꣳ सप्तान्नहोमान्वृषदं त्वेन्द्रो वृत्रꣳ
हत्वा दर्श ॥ १० ॥

देवासुरा वाज्यैवैनं तस्माद्वाजपेययाजी देव-
स्याहं वाजस्यावरुद्धया इन्द्रियमेवास्मिन् ह्नीका
हि पितरः पञ्चषष्टिः ॥ ६५ ॥

हरिः ओम्. तत्सत्.

इति तृतीयप्रपाठकः.



[23]यदित्यादि ॥ गतम् ॥

इति श्री भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये
प्रथमेऽष्टके तृतीयप्रपाठके दशमोऽनुवाकः.

तृतीयः प्रश्नस्समाप्तः.



[1]उभये वा एते प्रजापतेरध्यंसृज्यन्त। देवाश्चासुराश्च। तान्न व्यंजानात्। इमेऽन्य इमेऽन्य इति। [2]स देवानꣳशूनंकरोत्। तानभ्यंषुणोत्। तान्पवित्रेणापुनात्। तान्परस्तात्पवित्रंस्य व्यंगृह्णात्। ते ग्रहां अभवन्। तद्ग्रहाणां ग्रहत्वम्॥ १॥ देवता वा एता यजमानस्य गृहे गृंह्यन्ते। यद्ग्रहाः। विदुरेनं देवाः। यस्यैवं विदुष एते ग्रहां गृह्यन्ते।

[1]अथ ब्राह्मणं सोमार्थेयम्—उभये वा इत्यादि॥ 'उभादुदात्तो नित्यम्' इत्ययच्। उदात्तवचनसामर्थ्यात् आद्युदात्तत्वम्। तान्न व्यजानात् इमे देवा इमे असुरा इति॥

[2]स इत्यादि॥ अंशून् सोमलतावयवान् देवानकरोत् विवेकार्थं ताद्रूप्येण स्थापयामास। अथ तान् देवात्मकानंशून् अभ्यषुणोत्। पवित्रेण दशापवित्रेण च अपुनात्। अथ तान् अभिषुतान् देवात्मकान् ऋतुसम्भूतान् परस्तात् स्थितस्य पवित्रस्य सम्बन्धिनोऽधस्तात् स्थितान् व्यगृह्णात् पृथक्पृथक् गृहीतवान् तत्तद्देवतारूपेण स्थापितवान्। अथ ते तथा गृहीता देवा ग्रहा अभवन्। एवं गृहीतत्वात् ग्रहत्वं तेषाम्। तस्मात् ग्रहा नाम देवता एव स्वयं यजमानस्य गृहे हविर्धाने गृह्यन्ते। तस्मात् यस्यैवं विदुषो ग्रहा देवात्मना गृह्यन्ते एनं देवा अपि विदुः जानन्ति॥

[3]एषा वै सोमस्याहुतिः । यदुपाꣳशुः । सोमेन देवाꣳस्तर्पयाणीति खलु वै सोमेन यजते । यदुपाꣳशुं जुहोति । सोमेनैव तद्देवाꣳस्तर्पयति । यद्ग्रहाञ्जुहोति ॥ २ ॥ देवा एव तद्देवान्गच्छन्ति । [4]यच्चमसाञ्जुहोति । तेनैवानुरूपेण यजमानस्सुवर्गं लोकमेति । [5]किं न्वैतदग्रे आसीदित्याहुः । यत्पात्राणीति । इयं वा एतदग्रे आसीत् । मृन्मयानि वा एतान्या-

[3]एषा वा इत्यादि ॥ उपांशुर्नाम स्वरः सोमाहुतिः समाप्तोऽस्यां सोमयागः । कथमित्याह—सोमेनेत्यादि । सर्वान् देवान् सोमेन तर्पयाणीति सोमेन इज्यते उपांशुनैव केवलेन सर्वान् देवांस्तर्पयतीति उपांशुस्तुतिः । यद्ग्रहानित्यादि । अर्थवादः । देवाः परमार्थं देवान् गच्छन्ति । यद्वा—द्वये देवाः सोमलतांश्वात्मकाः द्युलोकवासिनश्च । तत्र उपांशुना प्रथमे देवास्तर्प्यन्ते । देवात्मभिस्तु ग्रहैः ऐन्द्रवायवाद्यैः अन्ये तर्प्यन्ते । देवा एव स्वयं देवांस्तर्पयितुं गच्छन्ति ॥

[4]यच्चमसानिति ॥ चमसहोमेन अनुरूपेण यजमानः स्वर्गं गच्छति ग्रहहोमेन देवानां तर्पितत्वात् स्वर्गप्रयाणैकफलत्वाच्चमसहोमस्य स्वर्गगमनं प्रत्यानुरूप्यं अनन्यार्थत्वात् ॥

[5]किं न्वेतदित्यादि ॥ यस्मात् पात्राणि उपादीयन्ते उपादानं तत् पात्रोत्पत्तेः पूर्वं हि किं नु खल्विदं आसीदिति किमुपादानं

सन् । तैर्दे॒वा न व्या॒वृ॑तमगच्छन् । [6]त ए॒तानि॑ दा॒रु॒मया॑णि॒ पात्रा॑ण्यपश्यन् । तान्य॑कुर्वत ॥ ३ ॥ तैर्वै ते व्या॒वृ॑तमगच्छन् । यद्दा॑रु॒मया॑णि॒ पात्रा॑णि॒ भव॑न्ति । व्या॒वृ॑तमे॒व तैर्यज॑मानो गच्छति । यानि॑ दा॒रु॒मया॑णि॒ पात्रा॑णि॒ भव॑न्ति । अ॒मुमे॒व तैर्लो॒क॒म॒भिज॑यति । यानि॑ मृ॒न्मया॑नि । इ॒ममे॒व तैर्लो॒क॒म॒भिज॑यति । [7]ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । काश्वतस्र-

---

पात्राणामिति यावत् । इयं वा इति । भूमिरेव पात्राणां पूर्वावस्था । एतत् इत्युपादानं उच्यते । तदेवाह—मृन्मयानीति । मृद्विकारभूतानि खलु एतानि भवन्ति । 'एकाचो नित्यं मयट-मिच्छन्ति' । तैरिति । मृन्मयैः पात्रैः असुरेभ्यो व्यावृत्तिं देवा नागच्छन् व्यावृत्तिः व्यावृत् । संपदादिलक्षणः क्विप् ॥

[6]त एतानीत्यादि ॥ दारुमयाणि 'द्व्यचश्छन्दसि' इति मयट् । मृण्मयानि दारुमयाणि च कर्तव्यानीति विधिः । व्यावृतमेव तैरिति । मनुष्येभ्यो व्यावृत्तिं गच्छन्ति दारुमयैः । यानीत्यादि । दारुमयैः द्युलोकजयः, मृन्मयैस्तु मनुष्यलोकजयः ॥

[7]ब्रह्मवादिन इत्यादि ॥ स्थालीः स्थाल्यः सोमो गृह्यते यासु ताः सोमग्रहण्यः । उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते इत्युक्तम् ॥

स्स्थालीवीर्यव्यास्सोमग्रहणीरिति । [8]देवा वै पृश्निमदुह्रन् ॥ ४ ॥ तस्या एते स्तना आसन् । इयं वै पृश्निः । तामादित्या आदित्यस्थाल्या चतुष्पदः पशूनदुह्रन् । यदादित्यस्थाली भवति । चतुष्पद एव तया पशून् यजमान इमां दुहे । तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहत् । यदुक्थ्यस्थाली भवति । इन्द्रियमेव तया यजमान इमां दुहे । तां विश्वे देवा आग्रयणस्थाल्योर्जमदुह्रन् । यदाग्रयणस्थाली भवति ॥ ५ ॥ ऊर्जमेव तया यजमान इमां दुहे । तां मनुष्या ध्रुवस्थाल्याऽऽयुरदुह्रन् । यद्ध्रुवस्थाली

---

[8]एवं ब्रह्मवादिभिः पृष्टे उत्तरमाह—देवा वा इत्यादि ॥ इमां पृथिवीं पृश्निं गोस्थानीयां देवा अदुह्रन् । तस्याः स्तनस्थानीया एताः स्थाल्योऽभवन् । एवमेताभिः स्तनभूताभिः पश्चादिदेवाः पृश्निं दुग्धवन्तः । 'बहुलं छन्दसि' इति रुट् । तामित्यादिना एकैकस्यैव दोहानाचष्टे । चतुष्पद इति । 'सङ्ख्या सुपूर्वस्य' इति लोपः समासान्तः । 'पादः पत्' इति पद्भावः । दुह इति 'लोपस्त आत्मनेपदेषु' इति तलोपः । एवमादित्यस्थाली उक्थ्यस्थाली आग्रयणस्थाली ध्रुवस्थालीति चतस्रः एताः स्थाल्य इत्युत्तरं 'काश्चतस्रः' इति प्रश्नस्य ॥

भवति । आयुरेव तया यजमान इमां दुहे । [9]स्थाल्या गृह्णाति । वायव्येन जुहोति । [10]तस्मादन्येन पात्रेण पशून्दुहन्ति । अन्येन प्रतिगृह्णन्ति । अथो व्यावृत्तमेव तद्यजमानो गच्छति ॥ ६ ॥

ग्रहत्वं ग्रहाञ्जुहोत्यकुर्वतादुहन्नाग्रयण-
स्थाली भवति नवं च ॥ १ ॥

[1]युवꣳ सुराममश्विना। नमुचावाऽसुरे सचा। विपि-

[9]स्थाल्या गृह्णातीति ॥ सामान्येनैकवचनं गोबलीवर्दन्यायेनोक्तम्, ध्रुवस्थाल्याश्चमसेऽवनयनात् । 'यद्धोतृचमसे ध्रुवमवनयति'* इति ॥

[10]तस्मादिति ॥ दोहनपात्रादन्यस्मिन् गृहीत्वा श्रपणादिकं कर्तव्यमित्यर्थः । अथो अपिच तत् तेन प्रयोगेण यजमानो देववन्मनुष्येभ्यो व्यावृत्तिं गच्छति चतुष्पदादिपुष्ट्या ॥

इति चतुर्थे प्रथमोऽनुवाकः.

[1]अथ सौत्रामणीशेषो वैश्वदेवं काण्डं एकोऽनुवाकः ॥ तत्र ग्रहाणां याज्यानुवाक्ये—युवं सुराममश्विनेत्यनुष्टुप्, पुत्रमिवेति त्रिष्टुप्। हे अश्विना! अश्विनौ! । 'सुपां सुलुक्' इत्याकारः । युवं युवां सुरामं सुष्ठु रतिहेतुम् । करणे घञ्........† । केचिदाहुः—असुरापत्यं

* सं.६-५-२.

†अत्र कियानपि ग्रन्थो गलित इव भाति । अत एव (त) कोशे विंशतिवर्णपर्याप्तं स्थलमलेखं विसृज्य ततः परं "केचित्" इत्यादिकं लिखितम्.

पाना शुभस्पती । इन्द्रं कर्मस्वावतम् । [2]पुत्रमिव पितरावश्विनोभा । इन्द्रावतं कर्मणा दंसनाभिः।

आसुर इति। तेषां तद्धितानुपपत्तिः जातिशब्दत्वात्। येन हेतुना असुरः पिता तेनैव हेतुना पुत्रोऽप्यसुरः। यथा—काकाज्जातोऽन्तरेणाप्यपत्यप्रत्ययं काको भवति। अन्ये तु ब्रुवते—असुरशब्दस्यैवायमादिवर्णविकार इति। तदप्ययुक्तं अन्तोदात्तश्रवणात्। असुरशब्दो ह्याद्युदात्तः। तस्मिन् नमुचा सचा समवेतं तस्मिन्मदहेतुत्वेन सर्वदा स्थितम्। क्विपि द्वितीयैकवचनस्य 'सुपां सुलुक्' इत्याकारः। ईदृशं रसं विपिपाना विपिबन्तौ युवां हे शुभस्पती! शुभस्य कर्मणः पातारौ। शोभतेः क्विपि षष्ठ्येकवचनस्य 'षष्ठ्याः पतिपुत्र' इति सत्वम्। 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षष्ठ्यामन्त्रितसमुदायस्य निघातः। तौ युवां कर्मसु पानकर्मसु आवतं रक्षतं तर्पयतं वा, तेन सहैव पिबतमिति यावत्। उपलक्षणत्वात् सरस्वती चेति द्रष्टव्यम्। ब्राह्मणं च भवति—"युवं सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः"* इति। अवतेः 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लङ्॥

[2]अथ याज्या—पुत्रमिवेति॥ पुत्रमिव यथा पितरौ पुत्रं रक्षतः तथा युवां अश्विनौ उभा उभौ उभावपि सह इन्द्रः सरस्वती च आवतं कर्मणा अनेन पानेन। अवतेः पूर्ववच्छान्दसो लङ्। तत्र इन्द्रेत्यामन्त्रितस्य अविद्यमानवत्त्वात् निघाताभावेन

*ब्रा. १-८-६.

यथ्सुरामं व्यपिबश्शचीभिः । सरस्वती त्वा मघव-न्नभीष्णात् । [3]अहांव्यग्ने हविरास्ये ते । स्रुचीव घृतं

आद्युदात्तत्वम् । इन्द्रशब्दस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । केचिदाहुः—इन्द्रमिति वक्तव्ये छान्दसोऽन्त्य लोप इति । तेषामाख्यातस्य निघातप्रसङ्गः । हे इन्द्र ! त्वं सुरामं यथोक्तगुणद्रव्यं दंसनाभिः शचीभिः त्वदीयैः कर्मभिः देवीभिर्वा सह यद्व्यपिबः तत्र विविधं पिबसि । छान्दसे लङि यद्वृत्तयोगान्निघाताभावे अट उदात्तत्वम् । हे मघवन् ! त्वा त्वां मन्यामहे सरस्वती च त्वां अभीष्णात् भिषज्यतु तावश्विनावेव । यद्वा—मया भिषज्यया त्वं शचीभिः सुरामं व्यपिबः तया त्वां सरस्वती आश्विनौ च भिषज्यन्तु । भिषजतिपर्यायः षकारान्तोऽन्यो धातुर्द्रष्टव्यः । भिषज्यतेरेव वा अकारादारभ्य लुप्यते । तस्माच्छान्दसे लङि विकरणव्यत्ययेन श्नाप्रत्ययः, वर्णव्यत्ययेन इकारदीर्घत्वम् । अभिपूर्वाद्वा स्नातेः पञ्चमो लकारः । पानसामर्थ्यं शुद्धिः । छान्दसो विकारः । यद्वा—इष आभीक्ष्ण्ये क्रैयादिकः । तस्मादभिपूर्वात् स एव लकारः । त्वामाभीक्ष्ण्येन पानेन प्रवर्तयत्विति । अनयोः पक्षयोः उपसर्गस्य निघातश्छान्दसः ॥

[3]हुतां हूयमानां वा यजमानोऽनुमन्त्रयते—अहाव्यग्न इति त्रिष्टुप् ॥ हे अग्ने ! ते तव आस्ये हविरहावि हुतं स्रुचीव घृतं यथा स्रुचि घृतं निधीयते यथा चमू चमन्यां चमसे सोमो निधीयते । चमसपर्यायश्चमूशब्दः 'सुपां सुलुक्' इति सप्तम्यालुक् । 'ईदूतौ च

चमू इव सोमः ॥ ७ ॥ वाजसनिꣳ रयिमस्मे सु-
वीरम् । प्रशस्तं धेहि यशसं बृहन्तम् । 'यस्मिन्न-
श्वास ऋषभास उक्षणः । वशा मेषा अवसृष्टास
आहुताः । कीलालपे सोमपृष्ठाय वेधसे । हृदा

सप्तम्यर्थे' इति प्रगृह्यसंज्ञा । अथेदानीं त्वयाऽपीत्थं प्रत्युपकर्तव्य-
मित्याह—त्वमपि अस्मे अस्मभ्यं वाजसनिं अन्नं भजमानम् ।
'छन्दसि वनसन' इति इन्प्रत्ययः । सुवीरं शोभनपुत्रादिसहितं
प्रशस्तं सर्वैः पूजितं बृहन्तं महान्तं ईदृशं रयिं धनं धेहि देहि
अस्मासु वा स्थापय यशसं यशस्करम् । यशश्शब्दात् तत्क-
रोतीति णिजन्तादसुन् । उदात्तनिवृत्तिस्वरेणासुन एवोदात्तत्वम् ।
यद्वा—अर्शआदित्वादच्चि छान्दसमुपोत्तमस्योदात्तत्वम् ॥

'यस्मिन्नश्वास इति जगती ॥ यस्मिन् अग्नौ अश्वासः अश्वाः
ऋषभासः ऋषभाः उक्षणः उक्षाणः । 'वा षपूर्वस्य निगमे'
इति दीर्घाभावः । वशाः वन्ध्या गावः मेषाः च अश्वमेधादौ आ-
हुताः देवतोद्देशेन दत्ताः यस्मिन् अवसृष्टाः यजमानैः प्रक्षिप्ताः
तस्मै कीलालपे अन्नरसपायिने । विचि 'आतो धातोः' इत्या-
कारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । सोमपृष्ठाय
सोमसंस्थाः पृष्ठस्तोत्राणि यस्य तस्मै वेधसे विधात्रे सर्वश्रेयसां
ईदृशाय अग्नये हृदा हृदयेन अवधानेन मतिं बुद्धिं यजे एनमिति
चारुं शोभनां जनय जनयानि । पुरुषव्यत्ययः ॥

मतिं जनय चारुमग्नये। [5]नाना हि वां देवहितꣳ सदो मितम्। मा सꣳसृक्षाथां परमे व्योमन्। सुरा त्वमसि शुष्मिणी सोम एषः। मा मा हिꣳसीस्स्वां योनिमाविशन्॥ ८॥ [6]यदत्र शिष्टꣳरसिनस्सुतस्य। यदिन्द्रो अपिबच्छचीभिः। अहं तदस्य म-

[5]ब्राह्मणो भक्षयति—नाना हि वामिति॥ त्रिष्टुप् जगती वा। हि यस्मात् वां युवयोः नाना पृथक्पृथक् सदः स्थानं मितं निर्मितं देवहितं देवेभ्यो हितं प्राणिभ्यो वा। 'चतुर्थीतदर्थे' इति समासः। 'क्ते च' इति पूर्वपदप्रकृतिस्वरत्वम्। तस्मात् मा संसृक्षाथां संसृष्टौ मा भूतम्। हे सोमसुराग्रहौ! परमे व्योमन् प्रकृष्टे आकाशे भक्षणस्थाने। युवां हि पृथिव्यां भवौ तेन युवयोः स्थानं पृथग्भूतमित्याह—त्वं खलु सुरा शुष्मिणी महाबला एष खलु सोमः सुप्रसिद्धविभवः। तस्मात् सङ्गं मागम। अधुना सङ्गे दोषमाह—हे भक्ष! स्वां योनिं स्थानं आविशन् प्रविशन् त्वं मा मां मा हिंसीः संसर्गे हिंसा स्यात्, तस्मादसंकीर्णं त्वया स्थातव्यमिति॥

[6]इतरयोर्भक्षणमन्त्रौ—यदत्र शिष्टमिति त्रिष्टुभौ॥ यदत्र शिष्टं अवशिष्टं रसिनः रसवतः स्वादोः सुतस्य अभिषुतस्य यदिन्द्रो अपिबच्छचीभिः आत्मीयैः कर्मभिः यदपिबत् अत्र यच्छिष्टं तत् तस्य अस्य एकदेशं सोमं राजानं शिवेन न्तेन मनसा त्वां इह कर्मणि भक्षयामि॥

नसा शिवेन । सोमꣳ राजानमिह भक्षयामि । [7]द्वे स्रुती अशृणवं पितृणाम् । अहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वं भुवनꣳ समेति । अन्तरा पूर्वमपरं च केतुम् । [8]यस्ते देव वरुण गायत्रच्छन्दाः पाशः । तं त एतेनावयजे ॥ १ ॥ [9]यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः । तं त एतेनावयजे । [10]यस्ते दे-

---

[7]द्वितीया—अहमशृणवं श्रुतवानस्मि वेदादृषिभ्यश्च पितॄणां अस्मत्पूर्वपुरुषाणां सम्बन्धिन्यौ देवानां मर्त्यानां च स्रुती । अनावर्तिनो देवीभूता येन यान्ति स देवयानः पन्थाः कश्चित्, येन गता आवर्तिनः पुनरपि मर्त्यलोकमागच्छन्ति पितरः स पितृयाणोऽन्यः पन्थाः । ताभ्यां स्रुतिभ्यां इदं विश्वं भुवनं भूतजातं समेति सङ्गतं भवति, क्व पुनस्ते स्रुती इत्याह—अन्तरा पूर्वं केतुं चिह्नं पृथिवीं अपरं च केतुं दिवम् । अनयोर्मध्ये द्वे एते स्रुती इतोऽमुत्र गच्छताम् । कश्चिदाह—एतयोः पूर्वापरयोर्मध्ये द्वे एते स्रुती इतोऽमुत्र गच्छतां अमुतश्चात्रागच्छताम् । कश्चिदाह—एतयोः पूर्वापरयोर्मध्ये तृतीयं पन्थानं केतुं आदित्यमपि समेति विश्वं भुवनम् ॥

[8—10]आश्विनपात्रमवभृथे प्रविद्ध्यति—यस्त इति ॥ गायत्र्येषा । हे देव! वरुण! यस्ते तव गायत्र्येव गायत्रं तदेव छन्दो यस्य स गायत्रच्छन्दाः गायत्रेण छन्दसा उपबृंहितबलः पाशः तं तादृशं ते तव पाशं एतेन पात्रेण अवयजे नाशयामि अव-

व वरुण जगतीछन्दाः पाशः । तं तं एतेनावयजे ।
[11]सोमो वा एतस्य राज्यमादत्ते । यो राजा सन्ना-
ज्यो वा सोमेन यजते । [12]देवसुवामेतानि हवीꣳषि
भवन्ति । एतावन्तो वै देवानाꣳ सवाः । त एवा-
स्मै सवान्प्रयच्छन्ति । त एनं पुनस्सुवन्ते राज्या-
य । देवसू राजा भवति ॥ १० ॥

सोमं आविशन् यजे राज्यायैकं च ॥ २ ॥

---

मोचयामि मत्तः। 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम्' इत्यण्, विश्वजनादित्वात्तुगभावः । एवमुत्तरयोरपि द्रष्टव्यम् ॥

[11]अथास्मिन्विषये देवसुवां हवींषि विदधाति—सोमो वा इत्यादि ॥ एतस्य राज्यं सोम आदत्ते अपकर्षति यो राजा मुख्यः सन् सोमेन यजते यो वा राज्यः राजभावार्हः स्वयमराजा सोमेन यजते । 'छन्दसि च' इति यः ॥

[12]देवसुवामित्यादि ॥ 'अग्नये गृहपतये पुरोडाशमष्टाकपालम्'* इत्यादीनि । एतावन्त इति । 'सविता त्वा प्रसवानां सुवताम्'* इत्यादयो देवानां सवाः देवसम्बन्धीन्यैश्वर्याणि त एवास्मै सोमेन धर्मपतित्वान्तराज्याय सवान् ऐश्वर्याणि प्रयच्छन्ति । ततः त एनं पुनः राज्यलाभाय सुवन्ते अनुजानन्ति । ततश्चायं राजा देवसूर्भवति देवैस्सूयते अनुज्ञायते राज्यायेति, कर्मणि क्विप् ॥

इति द्वितीयोऽनुवाकः.

---

* सं. १-८-१०.

[1]उदस्थाद्देव्यदितिर्विश्वरूपी । आयुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागम् । मित्राय वरुणाय च । [2]इयं वा अग्निहोत्री । इयं वा एतस्य निषीदति । यस्याग्निहोत्री निषीदति । तामुत्थापयेत् । उदस्थाद्देव्यदितिरिति । इयं वै देव्यदितिः ॥ ११ ॥

---

[1]अतःपरमग्निहोत्रप्रायश्चित्तब्राह्मणमनुवाकद्वयमभ्यर्चोर्षयम् । तत्र यद्यग्निहोत्र्युपसृष्टा निषीदेत्तामुत्थापयेत्—उदस्थाद्देवीति । पुरस्ताद्बृहतीयम् ॥ उदस्थात् उत्तिष्ठतु देवी क्षीरदानादिमती अदितिः स्वयं पृथिवी । अदीना वा । विश्वरूपी नानारूपी । गौरादिलक्षणो ङीष् । यज्ञपतौ यजमाने आयुरधात् दधातु निषीदनापराधतो माभूदायुषो विच्छेदः तव । कथमिति चेत् इन्द्राय मित्राय वरुणाय च भागं कृण्वती कुर्वती अविकलं कर्म निर्वर्त्य आयुर्दधातु । तिष्ठतेर्दधातेश्छान्दसो लुङ् ॥

[2]अथैतस्य मन्त्रस्य ब्राह्मणम्—इयं वा इति ॥ इयं पृथिव्येव स्वयं अग्निहोत्री अग्नेर्हुताज्जाता[1] गौरग्निहोत्रार्था आग्निहोत्री। पूर्ववत् ङीप् । पृथिव्येव एतस्य यजमानस्य निषीदति फलप्रदाने वैमुख्यं भजते यस्याग्निहोत्री दोहाय उपस्थापिता निषीदति । तस्मादनेन मन्त्रेणोत्थापनात् पृथिव्येवोत्थापिता भवति॥

---

[1]अग्नेस्तुताजाता.

इमामेवास्मा उत्थापयति । [3]आयुर्यज्ञपतावधादि-त्याह । आयुरेवास्मिन्दधाति । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्याह । यथायजुरेवैतत् । [4]अवर्तिं वा एषैतस्यं पाप्मानं प्रतिख्याय निषीद-ति । यस्याग्निहोत्र्युपसृष्टा निषीदति । तां दुग्ध्वा ब्राह्मणाय दद्यात् । यस्यान्नं नाद्यात् । अवर्तिमे-वास्मिन्पाप्मानं प्रतिमुञ्चति ॥ १२ ॥ दुग्ध्वा ददा-

---

[3]'आयुर्यज्ञपतौ' इत्यादीनि मन्त्राणां पदमवयुत्य स्तुतिरूपाणि ॥ यथा यजुरिति । इन्द्रादिभ्योऽविकलं यागनिर्वृत्तिं यथा मन्त्रो वदति तथा तद्भवत्येव ॥

[4]अवर्तिं वा इति ॥ अवर्तिः अवर्तनं दारिद्र्यं तदात्मानं पाप्मानं प्रतिख्याय प्रतिमुखं दर्शयित्वा प्रत्यग्रं वा स्थापयि-त्वा प्रत्येकं वा पुत्रादिभ्योपि उत्पाद्य निषीदति यस्य इयं उपसृष्टा निषीदति वत्ससंसृष्टा वत्सेनोपसृष्टा निषीदति । तामि-त्यादि । यस्यान्नं अयं यजमानो नाद्यात् न पुनर्भुञ्जीत तस्मै ब्राह्मणाय दद्यात् तां गां दुग्ध्वा । तद्दुग्धं वा दद्यादित्येके । तां च दुग्धं चेत्यन्ये । प्रतिमुञ्चतीति । पुनरस्मान्मोचनं प्रति-मोचनं, प्रत्येकं वा मोचनम् । दुग्ध्वेति । दर्शयित्वा हि दक्षिणा दीयते इदं ददामीति । तस्माद्दुग्ध्वैव क्षीरं दद्यात् । त्वमेव दुग्ध्वा भुंक्ष्वेति नानुजानाति । दुग्धदानपक्षे इदम् । गोदानपक्षेऽपि दृष्ट-फलाया एव देयत्वात् क्षीरवत्तां प्रदर्श्य दद्यात् ॥

ति । न ह्यदृष्टा दक्षिणा दीयते । [5]पृथिवीं वा एतस्य पयः प्रविशति । यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति । [6]यदद्य दुग्धं पृथिवीमसक्त । यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पयो अस्तु तन्मयीत्याह । पय एवात्मन्गृहेषु पशुषु धत्ते । [7]अप उपसृजति ॥ १३ ॥ अद्भि-

[5]पृथिवीं वा इत्यादि ॥ अग्निहोत्रार्थं द्रव्यं आग्निहोत्रं, तादर्थ्यात्ताच्छब्द्यम् । अग्नये वा होतव्यम् ॥

[6]दुह्यमानावस्थायां आहुतिमात्रस्य स्थाल्या बहिः पतने 'यदद्य' इत्यभिमन्त्रणं स्कन्नस्यैव । त्रिष्टुबेषा ॥ यद्दुग्धमद्य अस्मिन् अहनि पृथिवीमसक्त पृथिव्यां सक्तमभूत् यत् च ओषधीः अप्यसरत् अपिगतं अपिसरणं अनुप्रवेशः । यच्च आपोऽप्यसरत्, विभक्तिव्यत्ययः । तत् पयो गृहेषु गृहजनेषु अविनष्टं स्थितं अस्तु । यद्वा—निमित्तसप्तम्य एताः, गृहादिनिमित्तं अविनष्टमस्तु । अघ्नियासु गोषु च अस्तु वत्सेषु चास्तु मयि चास्तु । अनेनाभिमन्त्रणेन आत्मादिषु पयो धत्ते स्थापयत्येव ॥

[7]तस्मिन्प्रदेशे अप उपसृजति—'समुद्रं वः प्रहिणोमि'* इति ॥ आद्भिः हेतुभिः एनत् विनष्टं पय आप्तं भवति ॥

* तै. सं. २-१.

रे॒वैनं॑दाप्नोति । [8]यो वै य॒ज्ञस्या॑र्ते॒नाना॑र्त॒ꣳ सꣳ सृ॒जति॑ । उ॒भे वै ते त॒र्ह्या॑र्छ॒तः । आर्छ॑ति॒ खलु॒ वा ए॒तद॑ग्निहो॒त्रम् । यद्दु॒ह्यमा॑न॒ꣳ स्कन्द॑ति । यद॑भिदु॒ह्यात् । आर्ते॒नाना॑र्तं॒ य॒ज्ञस्य॒ सꣳसृ॑जेत् । तदे॒व या॒दृक्की॒दृक्क होत॒व्य॑म् । अथा॒न्यां दु॒ग्ध्वा पुन॑र् होत॒व्य॑म् । अना॑र्ते॒नैवार्तिं॑ य॒ज्ञस्य॒ निष्क॑रोति ॥१४॥
[9]यद्यु॒हुत॑स्य॒ स्कन्दे॑त् । यत्ततोऽहु॑त्वा॒ पुन॑रे॒यात् ।

[8]यो वा इत्यादि ॥ इदानीं दोहकाले स्थालीस्थस्यैकदेशस्य स्कन्दने विशेष उच्यते । उभे अपि ते आर्छतः आर्ते भवतः तर्हि तस्मिन्नेव काले आर्तेन अनार्तस्य संसर्गः अनार्तस्याप्यार्ततां आपादयति । आर्तिरयमाङ्पूर्वो विनाशकर्मा । 'उपसर्गादृति धातौ' इति वृद्धिः, पाघ्रादिना ऋच्छादेशः । किंपुनरनार्तमित्याह—यदभिदुह्यादिति । स्कन्नशेषस्य स्थालिस्थस्य उपरि पुनर्दोहोऽभिदोहः, तच्चानार्तं, तस्मादभिदोहं कुर्वन् आर्तेनानार्तं संसृजेत् । तत्र चोक्तो दोषः । तस्मात् स्थालीस्थेन आर्तेन स्तनस्थमनार्तं न संसृजेत् । किन्तु स्थालीस्थं यादृक् कीदृक् च यावत्किंचिद्विद्यते तदेव होतव्यं, न त्वपिदुह्यात् न चार्ताम् । अथान्यां गां दुग्ध्वा अनार्तं पुनर्जुहुयात् । एकं नित्यमितरत् प्रायश्चित्तमिति । एवं कुर्वन् अनार्तेन हविषा यज्ञार्तत्वदोषं निष्करोति समाहितं करोति ॥

[9]उन्नीतस्य स्कन्दने विशेष उच्यते—यद्युहुतस्येत्यादिना ॥

यज्ञं विच्छिन्द्यात् । यत्र स्कन्देत् । तन्निषद्य पुनर्गृह्णीयात् । यत्रैव स्कन्दति । तत एवैनत्पुनर्गृह्णाति। तदेव यादृक्कीदृक्च होतव्यम् । अथान्यां दुग्ध्वा पुनर् होतव्यम् । अनार्तेनैवार्तिं यज्ञस्य निष्करोति॥ १५ ॥ [10]वि वा एतस्य यज्ञश्छिद्यते । यस्याग्निहोत्रेऽधिश्रिते श्वाऽन्तरा धावति । रुद्रः खलु वा एषः। यदग्निः । यद्गामन्वत्यावर्तयेत् । रुद्राय पशूनपि-

उद्द्रवणमुन्नयनम् । उद्द्रुतस्य उन्नीयाहवनीयं प्रति नीयमानस्य यदि स्कन्देत् यावद्दशहोतृपरिसमाप्ति । 'दशहोतारमनुद्रवति' इति दर्शनात् । यत् यदि ततः स्कन्नप्रदेशात् यत्र स्कन्नं तत्प्रदेशात् अहुत्वा एव पुनरेयात् पुनरावर्तेत ततो यज्ञं विच्छिन्द्यात् । तत् तस्मात् यत्र स्कन्देत् तत्रैव निषद्य आसित्वा स्थाल्यामवशिष्टं पुनर्गृह्णीयात् एवं कुर्वन् ततः स्कन्नप्रदेशात् एनत् स्कन्नं पुनर्गृह्णाति, शुद्धदेशे स्कन्नं तदेव होतव्यमित्येके । तस्मात्तदेव यादृक्कीदृक्च यावत्किंचिदस्ति तत् होतव्यम् । एतदेवाग्निहोत्रं स्यादित्याश्मरथ्यः । अन्यां दुग्ध्वा पुनर्होतव्यमिति ॥ पूर्ववत् । आलेखनमतिरेषा । एवं कुर्वता यज्ञस्यार्तत्वं निष्कृतं भवति ॥

[10]वि वा एतस्येत्यादि ॥ अन्तरा गार्हपत्याहवनीययोर्मध्ये । यद्गामन्वित्यादि । यत् यदि यज्ञविच्छेदपरिहाराय गां तदनु

दध्यात् । अपशुर्यजमानस्स्यात् । यदपोऽन्वतिषिञ्चेत् । अनाद्यमग्नेरापः । अनाद्यमाभ्यामपिदध्यात् । गार्हपत्याद्धस्मादाय । इदं विष्णुर्विचक्रम इति वैष्णव्यर्चाऽऽहवनीयाद्धꣳसयन्नुद्रवेत् । यज्ञो वै विष्णुः । यज्ञेनैव यज्ञꣳ संतनोति । भस्मना पदमपिवपति शान्त्यै ॥ १६ ॥

वै देव्यदितिर्मुञ्चति सृजति करोति करोत्याभ्यामपिदध्यात्पञ्च च ॥ ३ ॥

तेनैव शुनो गतेन शुनो मार्गमनुसृत्य अस्त्रावर्तयेत् शुनः पदाक्रमणेन गामावर्तयेत् । 'यद्वृत्तान्नित्यम्' इति निघाते प्रतिषिद्धे 'गतिर्गतौ' इति 'तिङि चोदात्तवति' इति गतीनां निघातः । गामन्वत्या ऋचा श्वानं निवर्तयेदित्येके । तथा कुर्वन्नुद्रात्मनेऽग्नये पशूनपिदध्यात्, ततो यजमानोऽपशुस्स्यात् । अथ यत् यदि अपोऽन्वतिषिञ्चेत् शुनो मार्गानुसारेण आक्रम्य सिञ्चेदपः तथा कुर्वन् अग्नेरनाद्यं अभक्ष्यभूताः आपः आभ्यां आहवनीयगार्हपत्याभ्यां अपिदध्यात् उपहारत्वेन दध्यात्, तस्मादुभयोरपि पक्षयोर्दुष्टत्वात् प्रकारान्तरमाह—गार्हपत्यादिति । आहवनीयात् यावदाहवनीयं भस्म ध्वंसयन् अधः प्रक्षिपन् उद्रवेत् प्रागच्छेत् । गतमन्यत् । पदमिति । शुनः पदं भस्मना अपिवपति पूरयति शान्त्यै भवति दोषस्य ॥

इति तृतीयोऽनुवाकः,

[1]नि वा एतस्याहवनीयो गार्हपत्यं कामयते । नि गार्हपत्य आहवनीयम् । यस्याग्निमनुद्धृतꣳसूर्योऽभिनिम्रोचति । दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत् । अथाग्निम् । अथाग्निहोत्रम् । यद्धिरण्यं पुरस्ताद्धरति । ज्योतिर्वै हिरण्यम् । ज्योतिरेवैनं पश्यन्नुद्धरति । यदग्निं पूर्वꣳहरत्यथाग्निहोत्रम् ॥ १७

[1]नि वा एतस्येत्यादि ॥ द्वावग्नी परस्परं निकामयेते निभृतेनैकाग्र्यं कामयेते । मा वां पृथग्भावयिता यत्रोद्धरणाद्यपेक्षते । ततः तस्य अग्निद्वयाधीनस्वर्गप्रजाद्यसिद्धिः । यद्वा—पृथगात्मन एव कामनं निकामनं, यथा—'तदग्निर्न्यकामयत तेनापाक्रामत्'* । इति । अहमेक एवाग्निर्भूयासं किमनेनेति द्वावपि कामयेते । यस्याग्निमनुद्धृतं 'अभिलक्ष्य सूर्यः अभिनिम्रोचति अस्तमेति । उद्धरणं प्रणयनम् । 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वम् । तत्र समाधानमाह—तत्र हिरण्यं दर्भेण प्रबद्ध्य पुरस्ताद्धरेत् आहवनीयदेशं प्रापयेत् । अथ अनन्तरं अग्निं हरेत् । अथ तदनन्तरं च अग्निहोत्रं होमद्रव्यं हरेत् । तत्र हिरण्यस्य ज्योतिष्ट्वात् ज्योतिः पश्यन् तेन सत्येवादित्ये ज्योतिषि उद्धरणं कृतं भवति । यस्माच्चायं पूर्वंह्रियमाणस्याग्नेः पश्चादग्निहोत्रद्रव्यं हराति तेन भागधेयेन सहित एवाग्निः प्रणीतो भवति ततश्च भागसिद्धेर्निकामना द्वयोर्न भविष्यतीति ॥

* तै. १-५-१.

भागधेयेनैवैनं प्रणयति । [2]ब्राह्मण आर्षेय उद्धरेत् । ब्राह्मणो वै सर्वा देवताः । सर्वाभिरेवैनं देवताभिरुद्धरति । [3]अग्निहोत्रमुपसाद्यातमितोरासीत। व्रतमेव हृतमनु म्रियते । [4]अन्तं वा एष आत्मनो गच्छति । यस्ताम्यति। अन्तमेष यज्ञस्य गच्छति। यस्याग्निमनुद्धृतꣳ सूर्योभिनिम्रोचति ॥ १८ ॥ पुनस्समन्यंजुहोति । अन्तेनैवान्तं यज्ञस्य निष्क-

[2]ब्राह्मण इत्यादि ॥ गतम् । ऋषेरपत्यं आर्षेयः । प्रवर इत्येके । तदपत्यमित्यन्ये । 'इतश्चानिञः' इति ढक् । ब्राह्मणस्य सर्वदेवतात्वं तदधीनस्थितित्वात् तासाम् ॥

[3]अग्निहोत्रमुपसाद्येत्यादि ॥ नित्यं अग्निहोत्रं हविः उपसाद्य आतमितोः आग्लानात् यावन्निरुच्छ्वासं आसीत । 'भावलक्षणे स्थेण्' इत्यादिना ताम्यतेस्तोसुन् । आतमितोरासनेन किं करोतीत्याह— व्रतं कर्म हृतं अभिनिम्रोचनेन विनष्टं अनुम्रियते स्वयमपि तदनु म्रियते तेनैव हेतुना म्रियत इवायं, यथा लोके कश्चित् स्निग्धं म्रियमाणं अनुम्रियते तत्तुल्यमेतदिति । 'अनुर्लक्षणे' इति हेतावनोः कर्मप्रवचनीयत्वम् ॥

[4]अन्तं वा एष इत्यादि ॥ अस्यात्मा च समाप्यते यज्ञश्च तमनादभिनिम्रोचनाच्च । तत्र पुनस्समन्यहोमात् आत्मनोऽन्तेन सह यज्ञस्यान्तो निष्कृतः समाहितो भवति । समननं उच्छ्वासः ॥

रोति । [5]वरुणो वा एतस्य यज्ञं गृह्णाति । यस्या-
ग्निमनुद्धृतꣳ सूर्योऽभिनिम्रोचति । वारुणं चरुं निर्व-
पेत् । तेनैव यज्ञं निष्क्रीणीते । [6]नि वा एतस्याहव-
नीयो गार्हपत्यं कामयते । नि गार्हपत्य आहव-
नीयम् । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति । चतुर्गृ-
हीतमाज्यं पुरस्ताद्धरेत् ॥ १९ ॥ अथाग्निम् । अ-
थाग्निहोत्रम् । यदाज्यं पुरस्ताद्धरति । एतद्वा अग्नेः
प्रियं धाम । यदाज्यम् । प्रियेणैवैनं धाम्ना समर्धं-
यति । यदग्निं पूर्वꣳ हरत्यथाग्निहोत्रम् । भागधेये-
नैवैनं प्रणयति । ब्राह्मण आर्षेय उद्धरेत् । ब्राह्म-
णो वै सर्वा देवताः ॥ २० ॥ सर्वाभिरेवैनं देवता-
भिरुद्धरति । [7]पराची वा एतस्मै व्युच्छन्ती व्यु-
च्छति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति । उषाः

---

[5]वरुणो वा इत्यादि ॥ वारुणत्वाद्रात्रेः । वारुणेन चरुणा वरुणगृहीतो यज्ञः ततो निष्क्रीतो भवति ॥

[6]नि वा एतस्येत्यादि ॥ अनुद्धृतमग्निं अभिलक्ष्य सूर्य उदेति । हिरण्यस्थाने चतुर्गृहीतमाज्यम् । समानमितरत् पूर्वेण ॥

[7]पराची वा इत्यादि ॥ पराची परागता अपुनरावृत्ता व्युच्छन्ती तमसो विवासयित्री उषाः व्युच्छति विभाति अपुनरावृ-

केतुना॑ जुषताम् । य॒ज्ञं दे॒वेभि॑रिन्वि॒तम् । दे॒वेभ्यो॒ मधु॑मत्तम॒ꣳ स्वाहेति॑ प्रत्य॒ङ्ङ्निषद्याज्ये॑न जुहुयात् । प्रतीची॑मि॒वास्मै॒ विवा॑सयति । अ॒ग्नि॒हो॒त्रमु॑प॒साद्या॑-तमि॑तोरासीत । व्र॒तमे॒व ह॒तमनु॑ म्रियते । अन्तं॒ वा ए॒ष आ॒त्मनो॑ गच्छति ॥ २१ ॥ यस्ताम्ये॑ति । अ-न्तमे॒ष य॒ज्ञस्य॑ गच्छति । यस्या॒ग्निमनु॑द्धृत॒ꣳ सू॒र्यो॑ऽ-भ्युदेति॑ । पुन॑स्स॒मन्यं॑जुहोति । अन्ते॑नै॒वान्तं॑ य॒-ज्ञस्य॒ निष्क॑रोति॑ । [8]मि॒त्रो॑ वा ए॒तस्य॑ य॒ज्ञं गृ॒ह्णा-

तैव व्युच्छति न पुनरावर्तते उषाः तस्मिन्नेवाहोरात्रे म्रियत इति यावत् । यस्येत्यादि गतम् । अथ समाधानं "उषाः केतुना" इत्यनया गायत्र्या पुरस्तात्प्रत्यङ्मुख आसित्वा आज्येन चतुर्गृहीतेन जुहुयात् । ततः प्रतीचीं पुनरावृत्तां उपसंविवासयति न म्रियत इति यावत् । विवासनं व्युष्टिः । अग्निहोत्र-मुपसाद्येत्यादि । समानम् ॥

मन्त्रार्थस्तु—उषाः व्युष्टिः केतुना आदित्येन सह जुषतां यज्ञं देवेभिः देवैः इन्वितं प्रीणितम् । 'इवि प्रीणने' देवेभ्यो मधुमत्तमं मधुररसवत्तमं स्वाहा स्वाहुतमिदमस्तु अभ्युदया-पराधशमनायेति ॥

[8]मित्रो वा इत्यादि ॥ मैत्रताशब्दः । [मैत्रतापरोर्विशेषः ।] गतम-न्यत् ॥

ति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति । मैत्रं चरुं निर्वपेत् । तेनैव यज्ञं निष्क्रीणीते । [1]यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेत् ॥ २२ ॥ यदाहवनीयमनुद्वाप्य गार्हपत्यं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यद्वै यज्ञस्य वास्तव्यं क्रियते । तदनु रुद्रोऽवचरति । यत्पूर्वमन्ववस्येत् । वास्तव्यमग्निमुपासीत । रुद्रोऽस्य पशून्घातुकस्स्यात् । आहवनीयमुद्वाप्य । गार्हपत्यं मन्थेत् ॥ २३ ॥

[1]यस्याहवनीय इत्यादि ॥ उद्वानं नाशः । विच्छिन्द्यादिति । अग्न्यभावेन यज्ञविच्छेदस्स्यात् भ्रातृव्यं शत्रुं च अस्मै यजमानाय जनयेत् अनुद्वातस्याप्याहवनीयस्य यज्ञविच्छेदहेतोरवस्थितत्वात् । कथं तस्याहवनीयस्य यज्ञविच्छेदहेतुत्वं भ्रातृव्यजनकत्वं वा? तत्राह—यद्वा इति । यत् खलु यज्ञस्य वास्तव्यं लौकिकं क्रियते शास्त्रीयस्य स्वरूपस्याभावेन वस्तुनि भवं वास्तव्यं तादृशं यद्यज्ञस्य क्रियते तदनु तेनैव हेतुना रुद्रोऽवचरति अवेत्य अपकारं करोति योनिविनाशेन आहवनीयस्य विच्छेदहेतुना, तस्माद्यज्ञं विच्छिन्द्यात् भ्रातृव्यं च जनयेदिति । रुद्रापचाराभिप्रायेण भ्रातृव्यं जनयेदित्युक्तं एवमाहवनीये अनुद्वाते गार्हपत्ये उद्वाते अनर्थहेतुत्वमुक्तम् । अथ यदुक्तं 'यदाहवनीयमनुद्वाप्य गार्हपत्यं मन्थेत्' इति तस्यापि दुष्टतामिदा-

[10]इ॒तः प्र॑थ॒मं ज॑ज्ञे अ॒ग्निः । स्वाद्योनेरधि जा॒तवे॑दाः । स गा॑यत्रि॒या त्रि॒ष्टुभा॒ जग॑त्या । दे॒वेभ्यो॑ ह॒व्यं व॑हतु प्रजा॒नन्निति॑ । [11]छन्दो॑भिरे॒वैन॒ꣳ स्वाद्योने॒ः प्रज॑नयति । [12]गार्ह॑पत्यं मन्थति । गार्ह-

र्नी समर्थयते—यत्पूर्वमित्यादि । अथ यदि तादृशं पूर्वं आहवनीयं अनुलक्ष्य विद्यमान एव तस्मिन् अवस्येत् मन्थनादिक माचरेत् वास्तव्यं एव अग्निमुपासीत उत्पादयेत् । अनुगतेऽप्याहवनीये अग्निररणिं गच्छति 'अरणी वाव गच्छति' इति दर्शनात् । अन्यथा तु मथितोपि वास्तव्यः स्यात् लौकिकीमन्थनजन्मैव स्यात् । ततो रुद्रोऽस्य पशून् घातुकस्स्यात् । तस्मात् आहवनीयमुद्राप्य गार्हपत्यं मन्थेत् इति । ततः प्राश्नमाहवनीयं प्रणीय कर्म प्रवर्तयेत् ॥

[10]इतः प्रथममिति मन्थनमन्त्रः समपङ्क्तिः [अस्तारपङ्क्तिः] । चतुष्पदा वा पुरस्ताज्ज्योतिस्त्रिष्टुप् इत्येके ॥ इतस्स्वाद्योनेरधि जातवेदाः अग्निः प्रथमं जज्ञे । स गायत्र्यादिभिस्सहितः प्रजानन् प्रकर्षेण जानन् देवेभ्यो हव्यं वहत्विति ॥

[11]छन्दोभिरेवेत्यादि ॥ गतम् ॥

[12]गार्हपत्यं मन्थतीति पुनर्विधानं मन्त्रविशेषेणाभिमन्त्रणविधानार्थम् ॥ गार्हपत्यमनु गार्हपत्येन हेतुना आहिताग्निं पशव उप-

पत्यं वा अन्वाहिताग्नेः पशव उप तिष्ठन्ते । स यदुद्वायति । तदनु पशवोऽप क्रामन्ति । इषे रय्यै रमस्व ॥ २४ ॥ सहसे द्युम्नाय । ऊर्जे पत्यायेत्याह । पशवो वै रयिः । पशूनेवास्मै रमयति । [13]सारस्वतौ त्वोत्सौ समिन्धातामित्याह । ऋक्सामे वै सारस्वतावुत्सौ । ऋक्सामाभ्यामेवैनꣳ समिन्धे । सम्राडसि विराडसीत्याह । रथन्तरं वै सम्राट् । बृ-

संगच्छन्ते । सङ्गतिकरणे आत्मनेपदम् । तदनु तेनैवोद्वानेन हेतुना । तस्मात्तं मथितमग्निं अभिमन्त्रयते—इषे रय्यै रमस्वेति। गायत्री विशेषोऽयं यजुरित्येके । इषे अन्नाय रय्यै धनाय सहसे बलाय, द्युम्नाय यशसे ऊर्जे रसाय क्षीराय पत्याय पतित्वाय । भावे छन्दसो यत् । एतानि यथा स्युरिति मयि रमस्व हे अग्ने! अनेनाभिमन्त्रणेन अस्मै यजमानाय पशून्रमयति ॥

[13]अथोपसमिन्धे—सारस्वतौ त्वेति विराजा द्विपदया ॥ केचिद्द्वौ मन्त्रावाहुः । ऋक्सामे वै सारस्वतावुत्सौ सरस्वत्या वाचा उत्पन्नौ उत्स्यन्दनौ अभिमतानां तौ त्वा समिन्धातां संदीपयेताम् । हे अग्ने! सम्राट् संहतदीप्तिस्त्वं असि । विराट् विविधदीप्तिश्च असि । रथन्तरं बृहच्चाग्ने तवैव यत् सम्राड्विराड्हेतुस्तुतिरूपत्वात्ताभ्यां अभेद उपपद्यते ॥

हृद्विराट् ॥ २५ ॥ ताभ्यामेवैनꣳ समिन्धे । [14]वज्रो वै चक्रम् । वज्रो वा एतस्य यज्ञं विच्छिनत्ति । यस्यानो वा रथो वाऽन्तराऽग्नी याति । आहवनीयमुद्वाप्य । गार्हपत्यादुद्धरेत् । यदग्ने पूर्वं प्रभृतं पदꣳ हि ते । सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनु संभरैतम् । सं नस्सृज सुमत्या वाजवत्येति ॥२६॥ [15]पूर्वेणैवास्य यज्ञेन यज्ञमनु सं तनोति । [16]त्वमग्ने सप्रथा असीत्याह । अग्निस्सर्वा देव-

[14]वज्रो वा इत्यादि ॥ अग्न्योर्मध्ये अनआदिगमने वज्रात्मकं चक्रं यज्ञं विच्छिनत्ति । तदानीमाहवनीयमुद्वाप्य गार्हपत्यादुद्धरेत्—यदग्ने पूर्वमिति त्रिष्टुभा, जगत्या वा । हे अग्ने! ते तव यत्पदं पूर्वं प्रभृतं प्रकर्षेण संभृतं प्रभूतं वा पद्यते प्राप्यत इति पदं यज्ञं सूर्यस्य रश्मीन् अनु लक्षीकृत्य आततान विस्तीर्णमभूत् 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते' इति । तत्र पदे एतं यज्ञं अनु सम्भर अनुक्रमेण स्थापय रयिष्ठां धनसाधनत्वेन तत्र स्थिताम् । 'क्विप्च' इति क्विप् । सः नः अस्मान् संसृज संयोजय सुमत्या कल्याणबुद्ध्या अनुग्रहबुद्ध्या वाजवत्या अन्नेन देयेन तद्वत्या ॥

[15]पूर्वेणेति ॥ गतम् । विच्छिन्नेन यज्ञेन अविच्छिन्नं यज्ञं अनुसंतनोति ॥

[16]त्वमग्ने सप्रथा असीत्युद्धरणमन्त्रः । केचिदुपस्थानमन्त्रमाच-

तां: । देवताभिरेव यज्ञꣳ सं तनोति । [17]अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । अग्निमेव पथिकृतꣳ स्वेन भागधेयेनोप धावति । स एवैनं यज्ञियं पन्थामपिनयति । अनड्वान्दक्षिणा । वही ह्येष समृद्ध्यै ॥ २७ ॥

हरत्यथाग्निहोत्रं निम्रोचति हरेद्देवतां गच्छत्युद्वायेन्मन्थेद्रमस्व बृहद्विराडिति नव च ॥४॥

नि वै पूर्वं त्रीणि निम्रोचति दर्भेण यद्धिरण्यमग्निहोत्रं पुनर्वरुणो वारुणं नि वा एतस्याभ्युदेति चतुर्गृहीतमाज्यं यदाज्यं पराङ्युषाः पुनर्मित्रो मैत्रं यस्याहवनीयेऽनुद्वाते गार्हपत्ये यद्वै ॥

क्षते । इयं गायत्री ॥ हे अग्ने! त्वं सप्रथाः सविस्तारः प्रथितकीर्तिः असि । जुष्टः सेवितः सर्वैः प्रीतो वा सर्वदा । होता देवानामाह्वाता । वरेण्यः सर्वैः वरणीयः भजनीयः । त्वया हेतुना सर्वे यज्ञं वितन्वते विस्तारयन्तीति । अग्निरित्यादि । गतम् ॥

[17]अग्नये पथिकृत इति ॥ प्रायश्चित्तार्थम् । यज्ञियं यज्ञार्हम् । 'यज्ञर्त्विग्भ्यां घखञौ' । पन्थां पन्थानं 'छन्दस्यपि दृश्यते' इत्यात्वम् । अपिनयति संयोजयति । अनड्वानिति । वही वहनप्रदेशवान् तस्मात् समृद्ध्यै भवति कर्मणः अपेक्षितवोढृलाभात् ॥

इति चतुर्थोऽनुवाकः.



[1]यस्यं प्रातस्सव॒ने सोमो॑ऽति॒रिच्यते॑। माध्यं॑न्दि॒न२ं॒ सव॑नं का॒मयं॑मानो॒ऽभ्यति॑रिच्यते । गौर्धं॑यति म॒रुता॒मिति॒ धयं॑द्वतीषु कु॒र्वन्ति । हि॒नस्ति॒ वै स॒न्ध्यधी॑तम् । स॒न्धीव॒ खलु॒ वा ए॒तत् । यथ्सवं॑न-

[1]अथाध्वरस्य ब्राह्मणशेषः सोमार्षेयः 'यस्य प्रातस्सवने' इत्यादयः त्रयोऽनुवाकाः । उन्नीतेषु चमसेषु अवशिष्यते हुतः[1] । माध्यन्दिनं अनन्तरभावि सवनं कामयमानः तत्राप्युपयोगो मे स्यादिति वाञ्छया खलु गृहीतः सोमोऽभ्यतिरिच्यते प्रयोजनाद्व्यतिरेकेण वर्तते । अतिरेकित्वं च गृहीतभागिन्यः प्रातस्सवनदेवता न सहन्ते तत्कथं समाधेयमित्याह—"गौर्धयति मरुताम्" इत्यासु धयद्वतीषु धयशब्दवतीषु प्रातस्सवनत्वात् गायत्रीषु उद्गातारो गायत्रं साम कुर्वन्ति स्तुतशस्त्रवन्तं पुनर्होममाचरेत् इति। कथं पुनर्धयद्वतीभिरयं दोषः सन्धीयत इत्याह—हिनस्तीति। अन्यदीयवत्सदोह्या गौस्सन्धिः । इह तु उपचारेण तदीयं क्षीरं सन्धीत्युच्यते । पुनरपि गोसाधर्म्यात् सोमे वर्तते अन्यदीयत्वसामान्यात् । तदिदमुक्तम्- -सन्धीव खलु वा एतत् । यत्सवनस्यातिरिच्यते इति । अधीतं अपीतं अतिरोहितम् पानेन स्वरूपहानिर्लक्ष्यते । अयमर्थः—अयं सन्धिक्षीरसमोतिरिक्तः सोमः स्वरूपेणैव अवस्थितोपि अनपत्यत्वाद्यजमानं । हिनस्ति । तस्मादस्य समाधानं कर्तव्यं, तच्च धयद्वतीभिः क्रियत इति । तदिद-

[1] अवशिष्यते होतुरित्येके । इति पाठान्तरम्.

स्यातिरिच्यते । यद्व्यद्वतीषु कुर्वन्ति । सन्धेश्शान्त्यै । [2]गायत्रꣳ साम भवति पञ्चदशस्स्तोमः । तेनैव प्रातस्सवनान्न यन्ति ॥२८॥ [3]मरुत्वतीषु कुर्वन्ति । तेनैव माध्यन्दिनात्सवनान्न यन्ति । [4]होतुश्च-

माहु—यद्व्यद्वतीषु कुर्वन्ति सन्धेश्शान्त्या इति । यद्वा—सन्धिनीक्षीरसमोऽयं सोमो यदि प्रातःसवन एव पीतस्स्यात् । ततो माध्यन्दिनेऽपि भवन् हिनस्ति यजमानमिति सन्धिगोस्थानीयप्रातस्सवनक्षीरसदृशस्य सोमातिरेकस्यापार्थत्वेन अन्यत्र अनुपयोज्यत्वात् धयद्वतीभिः अत्रैव पीतः क्रियत इति । यद्वा—अधीतं अधिगतं उत्पादितं सन्धिक्षीरं धयद्वतीभिः सामभिः पीतं क्रियत इति ॥

[2]गायत्रमित्यादि ॥ गायत्रपञ्चदशाभ्यां प्रातस्सवनान्न यन्ति न गच्छन्ति उद्गातारः । प्रातस्सवन एव प्रतिपत्तिः कृता भवति ॥

[3]मरुत्वतीष्विति ॥ "गौर्धयति"* इत्यादिभिः मरुच्छब्दवतीभिः स्तवनात् माध्यन्दिनात् अपि सवनात् न गच्छन्ति तत्राप्युपयुक्तोऽसौ भवति यत् कामयमानः सोमोऽतिरिच्यते । केचिदाहुः—उभयसवनाकांक्षितत्वात् सन्ध्याकल्पोऽयमतिरिक्तः सोमः । ततश्च इत्थं क्रियमाणं स्तोत्रादिकं सन्ध्यायामधीतमुच्यमानमिव हिनस्ति । तत्र धयद्वतीनां गायत्रपञ्चदशाभ्यां गानात् सवनद्वयातिरेकेण सान्धिर्नाम कश्चिन्नास्ति ॥

*सा. १-४-५[1]

मुसमनून्नयन्ते । होताऽनुशꣳसति । मध्यत एव यज्ञꣳ समादधाति । [5]यस्य माध्यन्दिने सवने सोमोऽतिरिच्यते । आदित्यं तृतीयसवनं कामयमानोऽभ्यतिरिच्यते । गौरिवीतꣳ साम भवति । अतिरिक्तं वै गौरिवीतम् । अतिरिक्तं यथ्सवनस्यातिरिच्यते ॥ २१ ॥ अतिरिक्तस्य शान्त्यै । बण्महाꣳ असि सूर्येति कुर्वन्ति । यस्यैवादित्यस्य सवनस्य कामेनातिरिच्यते । तेनैवैनं कामेन समर्ध-

---

[4]होतुरिति ॥ होतुश्चमसं अग्रत उन्नीतमनु अन्ये चमसा उन्नयन्ते । होता तु तं अनु शंसति ऐन्द्राग्नमित्येके । ऐन्द्रावैष्णवमित्यन्ये । एवं कुर्वन् यज्ञं मध्यतः समादधाति अन्यूनानतिरिक्तसवनद्वयातिरेकेण समीकरोति । यथा सन्धिदोषो न भवति तथा करोति ॥

[5]यस्य माध्यन्दिन इत्यादि ॥ पूर्ववत् । गौरिवीतमिति । अतिरिक्ताक्षरेण गौरिवीतेन स्तवनात् सोमातिरेकदोषशान्तिः । "बण्महां असि सूर्य" इत्यासु सौरीषु स्तवनात् आदित्यं तृतीयसवनं कामयमानं सोममभिमतेन समृद्धं करोति । गौरिवीतस्य च पृष्ठविकारत्वात् माध्यंदिनात्सवनाच्च यन्ति स्तोमस्य सप्तदशत्वात् तृतीयसवनाच्च यन्ति ॥

यन्ति । गौरिवीतᳪ साम भवति । तेनैव माध्यं-
न्दिनात्सवनान्न यन्ति । सप्तदशस्स्तोमः । तेनैव
तृतीयसवनान्न यन्ति । [6]होतुश्चमसमनून्नयन्ते । हो-
ताऽनुशᳪसति ॥ ३० ॥ मध्यत एव यज्ञᳪ समादं-
धाति । [7]यस्य तृतीयसवने सोमोऽतिरिच्येत । उक्थ्यं
कुर्वीत । यस्योक्थ्येऽतिरिच्येत । अतिरात्रं कुर्वीत ।
यस्यातिरात्रेऽतिरिच्यते । तत्त्वै दुष्प्रज्ञानम् ।
यजमानं वा एतत्पशव आसाद्य यन्ति । बृ-

[6]होतुरित्यादि ॥ समानम् । ऐन्द्रमित्येके । ऐन्द्रावैष्णवमित्यन्ये ॥

[7]यस्य तृतीयसवन इत्यादि ॥ अग्निष्टोमसंस्थे क्रतौ तृतीयसव-
नेऽतिरेकश्चेत् उक्थ्यं कुर्वीत । उक्थ्यसंस्थेऽतिरेकस्तृतीयसवने
चेत्स्यात् अतिरात्रं कुर्वीत । अतिरात्रसंस्थे त्वतिरेके सति यत्समा-
धानं तत् दुष्प्रज्ञानं दुर्बोधनं न वयं जानीमः । तोरन्त्यलोपश्छा-
न्दसः । अथाप्यसमाहिते महान् दोषः । तथा हि—एतत्
एतस्मिन् दोषे सति पशवो यजमानमासाद्य सर्वतोऽभिभूय कथं-
चिदपि व्यवस्थापयितुं अशक्या यन्ति त्यक्त्वा गच्छन्ति । आङ्-
पूर्वात् सहतेर्ल्यपि वर्णव्यत्ययेन दीर्घत्वम् । तस्माद्दुष्प्रज्ञानमिति
नोपेक्षितव्यम् । इदं ब्रूम इत्याह—बृहदित्यादि । इमान् लोकान्
यज्ञद्वारेण बृहत् बिभर्ति पशवः च बार्हताः बृहत उत्पन्नाः ।
बृहच्छन्द उत्सादिः । बृहता पशून् यजमानस्य धारयति ॥

हृ॒ष्साम भवति । बृ॒हद्वा इ॒मान्लो॒कान्दाधार । बार्ह॑ताः प॒शवः । बृ॒ह॒तैवास्मै प॒शून्दाधार । [8]शि॒पि॒वि॒ष्टवतीषु कुर्वन्ति । शि॒पि॒वि॒ष्टो वै दे॒वानां पु॒ष्टम् । पु॒ष्ट्यै॒वैन॒ꣳ सम॑र्धयन्ति । होतुश्च म॒ससमनून्नं-यन्ते । होताऽनुश॑ꣳसति । म॒ध्यत ए॒व य॒ज्ञꣳ स॒मादधाति ॥ ३१ ॥

य॒न्ति॒ सवनस्याति॒रिच्यते शꣳसति
दाधारा॒ष्टौ च ॥ ५ ॥

[1]एकैको वै ज॒नतायामिन्द्रः । एकं वा ए॒ताविन्द्रम॒भि सꣳसुंनुतः । यौ द्वौ सꣳसुनुतः । प्र॒जाप॑ति॒र्वा ए॒ष वि॒तायते । यद्य॒ज्ञः । तस्य॒ ग्रावा॑णो द-

---

[8]शिपिविष्टवतीषु साम कुर्वन्ति । शिपिविष्टो हि देवानां पुष्टिहेतुः । हो तुरित्यादि । गतम् । आश्विनमित्येके । ऐन्द्रावैष्णवमित्यन्ये ॥

इति पञ्चमोऽनुवाकः.



[1]एकैको वा इत्यादि ॥ जनता जनसमूहः । 'ग्रामजनबन्धुसहायेभ्यस्तल्' । एकैकस्मिन् जनसमूहे जनपदे एकैक इन्द्रः प्रति-

न्तोः । अन्यतरं वा एते सꣳसुन्वतोर्निर्बप्सति । पूर्वेणोपसृत्या देवता इत्याहुः । पूर्वोपसृतस्य वै श्रेयान्भवति । एतिवन्त्याज्यानि भवन्त्यभिजित्यै ॥ ३२ ॥ मरुत्वतीः प्रतिपदः । मरुतो वै देवानामपराजितमायतनम् । देवानामेवापराजित आयतने

---

जनपदमिन्द्रो भिद्यते । तस्मात् एतावेकं इन्द्रमभिसुनुतः सोमेन यजेते एकेन्द्राभिसम्बन्धेन उभौ संसवं कुरुतः । यौ द्वौ संसुनुतः एकस्मिन् जनपदे जनस्थाने सह सुनुतः जनपदस्यैकत्वात् । एतस्मादेव ज्ञायते भिन्नजनपदे संसवो नास्तीति । तस्य प्रजापतिस्थानीयस्य यज्ञस्य दन्तस्थानीया ग्रावाणः उपांशुसवनादयः संसुन्वतोः अन्यतरं निर्बप्सति बीभत्सयन्ति कर्मणा निष्कृष्य भक्षयन्ति यस्य देवता नास्ति । भस भर्त्सनदीप्त्योः, श्लौ द्विर्वचने 'अद्भ्यस्तात्' इत्यदादेशो 'घसिभसोर्हलि च' इत्युपधालोपः, 'खरि च' इति भकारस्य बत्वम् । कस्य तर्हि देवतेत्याह—पूर्वेणेत्यादि । पूर्वेण प्रथमेन देवता उपसृत्या उपसरणीयाः प्रथम उपसरति देवता नेतर इत्याहुः । लोकेऽपि हि यः पूर्वमुपगच्छति तस्यैव संबन्धी श्रेयान् स्वामी भवति । तस्मात्पश्चादुपगच्छन्तं निर्देवतं भर्त्सयन्ति ग्रावाण इति । तस्मात् एतिवन्ति आगमनवन्ति आज्यानि स्तोत्राणि भवन्ति । तेषां प्रतिपदः प्रथमाः मरुच्छब्दवत्यो भवन्ति । बहिष्पवमानस्येत्येके । मरुतो वा इत्यादि । गतम् । देवानां मध्ये मरुत एव फ-

यतते । [2]उभे बृहद्रथन्तरे भवतः । इयं वाव रथन्तरम् । असौ बृहत् । आभ्यामेवैनमन्तरैति । वाचश्च मनसश्च । प्राणाच्चापानाच्च । दिवश्च पृथिव्याश्च ॥ ३३ ॥ सर्वस्माद्वित्ताद्वेद्यात् । [3]अभिवर्तो ब्रह्मसामं भवति । सुवर्गस्य लोकस्याभिवृत्त्यै । [4]अभिजिद्भवति । सुवर्गस्य लोकस्याभिजित्यै । वि-

लानामपरिभूतं स्थानम् । यद्वा—देवानामप्यपराजितं स्थानम् । तस्मान्मरुत्वतीभिः प्रतिपद्भिः तादृशे स्थाने यतते फलार्थं प्रवर्तते॥

[2]उभे इति ॥ एनं प्रति सुन्वन्तं आभ्यां द्यावापृथिवीभ्यां अन्तरेति अन्तरितं निर्वासितं करोति । उभाभ्यां बृहद्रथन्तराभ्यां स्तुवन् वागादिभ्योऽप्येनं अन्तरेतीत्येव । द्युस्थेभ्यो देवेभ्यः पृथिवीस्थेभ्यश्च मर्त्येभ्यः सर्वस्मात् च वित्तात् धनात् वेद्यात् ज्ञातव्यात् । यद्वा—वित्तात् लब्धात् वेद्यात् लब्धव्यात् सर्वस्मादन्तरितं करोति उभाभ्यां बृहद्रथन्तराभ्याम् ॥

[3]अभिवर्तो नाम ब्रह्मसामं पृष्ठानां तृतीयं भवति । ब्रह्मणस्साम ब्रह्मसामं यत् ब्रह्मा शंसति । 'अनसन्तान्नपुंसकाच्छन्दसि' इत्यच् समासान्तः । तत् स्वर्गस्य अभिवृत्त्यै आभिमुख्येन वर्तनाय भवति ॥

[4]अभिजित् विश्वजित् वा अहः भवति ॥

श्वजिद्भवति । विश्वस्य जित्यै । [5]यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः । स देवता वृङ्क्त इति । यद्यग्निष्टोमस्सोमः परस्तात्स्यात् ॥ ३४ ॥ उक्थ्यं कुर्वीत । यद्युक्थ्यस्स्यात् । अतिरात्रं कुर्वीत । यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते । [6]यो वै छन्दोभिरभिभवति । स सꣳसुन्वतोरभिभवति । संवेशाय त्वोपवेशाय त्वेत्याह । छन्दाꣳसि वै संवेश उपवेशः।

[5]यस्येत्यादि ॥ भूयांसो विपुलतराः । वैपुल्यवाचिनः ईयसुनि 'बहोर्लोपो भू च बहोः' । सः भूयोयज्ञक्रतुर्यजमानः अल्पयिःक्रतोः देवता वृङ्क्ते वर्जयति स्वयमादत्त इत्याहुः । द्वितीय इतिशब्दो हेतौ । यस्मादेवं तस्मात् यद्यग्निष्टोमः सोमः परस्तात् परस्मिन् प्रतिसुन्वति स्यात् स्वयं उक्थ्यं कुर्वीत । यद्युक्थ्यः परस्तात् स्यात् स्वयं अतिरात्रं कुर्वीत । एवं यज्ञक्रतुभिरेव अविकृतैः अस्य प्रतिसुन्वतो देवता वृङ्क्ते ॥

[6]यो वा इत्यादि ॥ उपानुवाक्ये* व्याख्यातम् । अभिभूतिहोममन्त्राश्च* व्याख्याताः । संसुन्वतोः मध्ये छन्दोभिरभिभवति यः सः इतरमभिभवितुं समर्थः स्यात् संवेशोपवेशौ स्थानासने, तदेतुभिश्छन्दोभिरभिभूतिहोमाराधितैः प्रतिसुन्वतश्छन्दांसि संवेशोपवेशौ स्वयमभिभवति[तः] ॥

* सं. ३-१-७.

छन्दोभिरेवास्य छन्दाꣳस्यभिर्भवति । [7]इष्टर्गो वा ऋत्विजामध्वर्युः ॥ ३५ ॥ इष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयते । प्राणापानौ मृत्योर्मा पातमित्याह । प्राणापानयोरेव श्रयते । प्राणापानौ मा मा हासिष्टमित्याह । नैनं पुराऽऽयुषः प्राणापानौ जहितः । [8]आर्तिं वा एते निर्यन्ति । येषां दीक्षितानां प्रमीयते । तं यदवर्जेयुः । क्रूरकृतामिवैषां लोकस्स्यात् । आहर दहेति ब्रूयात् ॥ ३६ ॥ तं दक्षिणतो वेद्यै निधार्य । सर्पराज्ञिया ऋग्भिस्स्तुयुः । इयं वै सर्पतो राज्ञी । अस्या एवैनं परिददति ।

[7]इष्टर्ग इत्यादि ॥ दर्वीस्थानीय इष्टर्ग इत्येके । इष्टेन यागेन यागावरोधेन आर्तेर्गमक इत्यन्ये । ऋत्विजामिष्टर्गोऽध्वर्युः स्वापराधेन ऋत्विज आर्तिं गमयति । तस्मादयं इष्टर्गः अर्ष्टुः आर्तिं गच्छन् प्रथममेव क्षीयते । तस्मात् "प्राणापानौ"* इति होमेन प्राणापानयोः श्रयते तिष्ठति । तथा एनं प्राणापानौ आयुषः शतवर्षात् पुरा प्राक् न जहितः न त्यजतः ॥

[8]आर्तिं वा इत्यादि ॥ संप्रति सत्रमधिकृत्य किंचिदुच्यते । येषां दीक्षितानां सत्रिणां मध्ये कश्चित् प्रमीयते म्रियते एते सर्वेऽपि आर्तिं व्यसनं नियन्ति नियमेन गच्छन्ति । सर्वेषामेवे-

* सं. १-१-७.

[9]व्यृद्धं तदित्याहुः । यथ्स्तुतमननुशस्तमिति । होता प्रथमः प्राचीनावीती मार्जालीयं परीयात् । यामीरनुब्रुवन् । सर्पराज्ञीनां कीर्तयेत् । उभयोरेवैनं लोकयोः परिददति ॥ ३७ ॥ अथो धुवन्त्ये-

यमार्तिः न तु प्रमीयमाणस्येति मन्तव्यम् । एवं मन्यमाना यत् यदि तं प्रमीयमाणं अववर्जेयुः अवाचीनं निकृष्टं त्यजेयुः एषां त्यक्त्वोत्सृजतां सत्रिणां क्रूरकृतां पापकृतां इव लोकस्स्यात् । तस्मात् आहर दहेति ब्रूयात् प्रैषम् । उपलक्षणमिदं सर्वप्रेतोपचाराणाम् । आहर प्रेतं स्नापय अलंकुरु । दह पच यथाविधीति ब्रूयात् प्रेतसकाशे गत्वा वदेदेव । अथ तं प्रेतं वेद्या दक्षिणतो निधाय सर्पराज्ञियाभिः ऋग्भिः "भूमिर्भूम्ना"[1] इत्यादिभिः स्तुयुः । तेन सर्पतां राज्ञ्यै पृथिव्यै एनं परिददति न्यासं ददति । अत्र दाहात्प्रागेवेत्येके । दग्धस्यास्थीनीत्यपरे कार्ये कारणोपचारात् तमित्यस्थीन्युच्यन्त इति ॥

[9]व्यृद्धमित्यादि ॥ यत् स्तुतं अननुशस्तं शस्त्रोपक्षीणमिति यावत् तद्व्यृद्धं ऋद्धिहीनं इत्याहुः । तस्मात् होता अनुगतः प्राचीनावीती भूत्वा मार्जालीयं परीयात् गच्छेत् । यामीः यमगाथा अनुब्रुवन् सर्पराज्ञीनां कीर्तयेत् । एवं कुर्वन् होता एनं प्रेतं उभयोर्लोकयोः परिददाति । अथो अपि च एनं सिग्वातादिभिरुपचरन्त एते एनं धुवन्त्येव व्यजनादिभिरुपचरन्त्येव। यद्वा—एनं धुवन्ति विधूनयन्ति विद्वेषं[2] त्यजन्ति । धू विधूनने,

[1] सं. १-५-३. [2] विद्विषं.

वैनम् । अथो न्यैवास्मै ह्नुवते । [10]त्रिः परीयन्ति । त्रयं इमे लोकाः । एभ्य एवैनं लोकेभ्यो घुवते । त्रिः पुनः परीयन्ति । षट्थ्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं घुवते ।[11] अग्न आयूꣳषि पवस इति प्रतिपदं कुर्वीरन् । रथन्तरसामैषाꣳ सोमस्स्यात् । आयुरेवात्मन्दधते । अथो पाप्मानमेव विजहतो यन्ति ॥ ३८ ॥

अभिजित्यै पृथिव्याश्च स्यादध्वर्युर्ब्रूयाल्लोकयोः परिददति कुर्वीरꣳस्त्रीणि च ॥६॥

---

तौदादिकः । अथो अपि च अस्मै निह्नुवते नमस्कुर्वते, वियोगमभिनयन्ति वा ॥

[10]त्रिः परियन्तीत्यादि ॥ गतम् ॥

[11]अग्न आयूंषीत्यादि ॥ अस्मिन् यज्ञे बहिष्पवमानस्य प्रतिपत् । रथन्तरसामा च एषां सोमस्स्यात् पृष्ठस्य रथन्तरत्वं विधीयते । एवं कर्म कुर्वन्तः आत्मन्येव आयुर्दधते । अथो अपि च पाप्मानं क्रूरकृतामिव लोककारणं विजहतः त्यजन्त एव अपपाः यन्ति यथेष्टं गच्छन्ति । अतो ज्ञायते नायं प्रेतोपचारः अपि तु कर्तृणामेवैतत् ईदृशं आयुरादिकरं कर्मेति ॥

इति षष्ठोऽनुवाकः.

[1]असुर्यं वा एतस्माद्वर्णं कृत्वा । पशवो वीर्यमपक्रामन्ति । यस्य यूपो विरोहति । त्वाष्ट्रं बहुरूपमालभेत । त्वष्टा वै रूपाणामीशे । य एव रूपाणामीशे । सोऽस्मिन्पशून् वीर्यं यच्छति । नास्मात्पशवो वीर्यमप क्रामन्ति । [2]आर्तिं वा एते निर्यन्ति । येषां दीक्षितानामग्निरुद्वायति ॥ ३१ ॥ य-

[1]असुर्यं वा इत्यादि ॥ यस्य यूपो विरोहति अङ्कुरान् जनयति एतस्मात् पशवो वीर्यं च असुर्यं असुरस्य स्वभूतं बाधकस्वभावं वर्णं रूपं कृत्वा परिगृह्य अपक्रामन्ति । 'असुरस्य स्वं' इति यत् । त्वाष्ट्रमित्यादि । गतम् । बहुरूपं अनेकवर्णम् । 'बहोर्नञ्वत्' इति नञ्वद्भावादुत्तरपदान्तोदात्तत्वम् । ईश इति । 'लोपस्त अत्मनेपदेषु' इति तलोपः ॥

[2]आर्तिं वा इत्यादि ॥ आहवनीयोद्वाने तस्यैव मन्थने यज्ञो विच्छिन्नस्स्यात् गार्हपत्ययोनेरेव यज्ञियत्वात् भ्रातृव्यं जनयेत् अग्न्योः सम्बन्धाभावेन परस्परविरुद्धत्वात् । तस्मात् आग्नीध्रादुद्धरेत् । आग्नीध्रोद्वाने गार्हपत्यादुद्धरेत् । गार्हपत्योद्वाने तु अत एव अस्मादेव शेषात् पुनर्मन्थेत् । अत्र खल्वेव शेषेषु सः अग्निः निलयते निलीयते । व्यत्ययेन लीयतेश्शप् । यद्वा—लयतिश्चुरादिराधृषीयः । तस्मादत एव पुनर्मन्थेत् । लोकेऽपि हि यत्र उत्तमं धनं निलीनं अन्तर्हितं पश्यन्ति जनाः तत् तत्र एनमिच्छन्ति अन्विच्छन्ति । यद्वा—तत्रैव एनं लब्धुमि-

दाहवनीयं उद्वायेत् । यत्तं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यदाहवनीयं उद्वायेत् । आग्नीध्रादुद्धरेत् । यदाग्नीध्र उद्वायेत् । गार्हपत्यादुद्धरेत् । यद्गार्हपत्य उद्वायेत् । अत एव पुनर्मन्थेत् ॥ ४० ॥ अत्र वाव स निलयते । यत्र खलु वै निलीनमुत्तमं पश्यन्ति । तदेनमिच्छन्ति । यस्माद्दारोरुद्वायेत् । तस्यारणी कुर्यात् । क्रुमुकमपि कुर्यात् । एषा वा अग्नेः प्रिया तनूः । यत्क्रुमुकः । प्रिययैवैनं तनुवा समर्धयति । [3]गार्हपत्यं मन्थति ॥ ४१ ॥ गार्हपत्यो वा अग्नेर्योनिः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयति। [4]यस्य सोमं उपदस्येत् । सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्य । ऋजीषेऽन्यदाधूनुयात् । जुहुयादन्यत् ।

च्छन्ति लभन्ते वा । यस्माद्दारोरुद्वायेत् अन्तत उद्वातं पश्यन्ति तस्य एव विकारभूते अरणी कुर्यात् । क्रुमुकं इन्धनं शकलानि अपि तस्यैव कुर्यात् । एषा वा इत्यादि । गतम् ॥

[3]गार्हपत्यमित्यादि ॥ गार्हपत्यो ह्याहवनीयादेः योनिः जन्मकारणम् ॥

[4]यस्येत्यादि ॥ उपदस्येत् उपहीयेत । सुवर्णं हिरण्यमिति द्वयोरुपादानं रजतनिवृत्त्यर्थम् । द्वेधा विच्छिद्य तुल्यप्रमाणं शक-

सोमंमेवाभिषुणोति । सोमं जुहोति । सोमंस्य॒ वा अभिषूयमाणस्य प्रिया तनूरुदंक्रामत् ॥ ४२ ॥ तथ्सुवर्णꣳ हिरण्यमभवत् । यथ्सुवर्णꣳ हिरंण्यं कुर्वन्ति । प्रियय़ैवैनं तनुवा समर्धयन्ति । [5]यस्याक्रीतꣳ सोमंमपहरेयुः । क्रीणीयादेव । सैव ततः प्रायश्चित्तिः । यस्य क्रीतमंपहरेयुः । आदाराꣳश्च फाल्गुनानि चाभिषुणुयात् । [6]गायत्री यꣳ सोममाहरत् । तस्य योऽꣳशुः पराऽपतत् ॥ ४३ ॥ त

लं छेदयित्वा ऋजीषे अन्यत् एकं शकलं आधूनुयात् संमिश्रच्य सहाभिषुणुयात् । एकं तु चमसे मुख्ये निधाय जुहुयात् । तथा कृते सोम एवाभिषुतो भवति सोम एव हुतो भवति । न तु हिरण्यशकलमभिषुतं, नापि तद्धुतम् । तत्कथमित्याह—सोमस्येत्यादि । गतम् । कुर्वन्तीति । यथोक्तं कुर्वन्ति ॥

[5]यस्याक्रीतमित्यादि ॥ अक्रीतस्य विनाशे क्रय एव प्रायश्चित्तिः। क्रीतस्य विनाशे—आदारानित्यादि । आदाराः क्षीरतृणानि । फाल्गुनानि हैमन्तानि तृणानि हिमप्लुष्टानि । एतानि सोमस्थाने अभिषुणुयात् ॥

[6]गायत्री यमित्यादि ॥ अंशुः लतावयवः । वल्कः शकलः फाल्गुनानि । आदाराणां तु तदंशुत्वादेव सोमात्मकत्वमुक्तमेव । तस्मादेषामभिषवे सोम एव अभिषुतो भवति ॥

आदारा अभवन् । इन्द्रो वृत्रमहन् । तस्य वल्कः पराऽपतत् । तानि फाल्गुनान्यभवन् । पशवो वै फाल्गुनानि । पशवस्सोमो राजा । यदादाराꣳश्च फाल्गुनानि चाभिषुणोति । सोममेव राजानमभिषुणोति । [7]शृतेन प्रातस्सवने श्रीणीयात् । दध्ना मध्यंदिने ॥ ४४ ॥ नीतमिश्रेण तृतीयसवने । [8]अग्निष्टोमस्सोमस्स्याद्रथन्तरसामा । य एवर्त्विजो वृतास्स्युः । त एनं याजयेयुः । एकां गां दक्षिणां दद्यात्तेभ्य एव । पुनस्सोमं क्रीणीयात् । यज्ञेनैव

[7]शृतेनेत्यादि ॥ श्रयणमुपरिमिश्रणम् । शृतेन पयसा सोमं आधवनीयावासं श्रीणीयात् । दध्ना आतक्तेन मध्यन्दिने नवनीतोत्पत्तेः प्रागवस्थं नीतमिश्रं तेन तृतीयसवने श्रीणीयात् ॥

[8]अग्निष्टोम इत्यादि ॥ संस्थान्तरारम्भेऽपि अग्निष्टोमसंस्थ एवेति नियमः । रथन्तरसामैव सर्वत्र साम भवति । ये पूर्वं वृताः ऋत्विजः त एव याजयेयुरिति नियमः । पुनर्वरणं निवर्तते । एकामेव गां दक्षिणां दद्यात् तेभ्यस्सर्वेभ्य एव सोमस्यारक्षणे एष दण्डः । पुनरिति । आरब्धसंस्थार्थं पुनस्सोमं क्रीणीयात् एवं यज्ञेनैव आधारभूतेन यज्ञमिच्छति लिप्सते । तस्मात् स एव यज्ञः ततो दोषान्मोक्षे प्रायश्चित्तिः ॥

तद्यज्ञमिच्छति । सैव ततः प्रायश्चित्तिः । [9]सर्वाभ्यो वा एष देवताभ्यस्सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते । यस्सत्रायागुरते । एतावान्खलु वै पुरुषः । यावदस्य वित्तम् । सर्ववेदसेन यजेत । सर्वपृष्ठोऽस्य सोमस्स्यात् । सर्वाभ्य एव देवताभ्यस्सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते ॥ ४५ ॥

उद्धारयति मन्थेन्मन्थत्यक्रामत्पराऽपतन्मध्यंदिन आगुरते पञ्च च ॥७॥

[1]पवमानस्सुवर्जनः । पवित्रेण विचर्षणिः ।

---

[9]सर्वाभ्य इत्यादि ॥ आगुरते उद्यच्छते तादर्थ्येन विनियुङ्क्ते आत्मानम् । कः यस्सत्रायागुरते यक्ष्य इत्युक्त्वा मनः प्रत्याहरति । गुरी उद्यमने । एतावानिति । वित्तमात्रसारः पुरुषो नाम । तस्मात् सर्ववेदसेन सर्वस्वदक्षिणेन यजेत । सर्वपृष्ठोऽस्य सोमस्स्यात् । एवं कुर्वन् सर्वदेवतापृष्ठसकाशात् आत्मानं निष्क्रीणीते आदत्ते । सर्वाणि वेदांसि धनान्यस्मिन् सन्तीति । अर्शआदित्वादच् ॥

इति सप्तमोऽनुवाकः.

---

'अनारभ्याधीतानां प्रकृतिगामित्वम्' इति न्यायात् दर्शपूर्णमासयोश्चाविनियोगात् ज्योतिष्टोम एकाहानां प्रकृतौ एकविंशत्या

यः पोता स पुनातु मा । [2]पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्व आयवः । [3]जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण

दर्भपुञ्जीलैः पाव्यमानो यजमानो जपति, अन्यत्र च स्मार्ते स्नानादौ मार्जनार्थोऽयमनुवाकः । सोमः काण्डऋषिः ॥

[1]प्रथमा—पवमान इति गायत्री ॥ पवमानः शोधनकुशलः सुवर्जनः स्वर्गवास्येव यो जनः समस्तमेव स्वरिति स्वर्गवासी जन उच्यते । [स्वर्गवासिनमभिधत्ते] 'मञ्चाः क्रोशन्ति' इतिवत् । विचर्षणिः विशिष्टज्ञानः सर्वस्य सुकृतदुष्कृतप्रत्यवेक्षणकुशलः यः सर्वस्य साधु पोता पविता पवित्रेण पावनेन दर्शनानुध्यानादिना पुनातु शोधयतु ॥

[2]द्वितीया—गायत्री ॥ पुनन्तु मा देवजनाः देवा एव ये जनाः पुनन्तु च मां मनवः स्वायंभुवादयः धिया प्रज्ञया कर्मणा वा, बुद्धिविशेषैः कर्मविशेषैर्वा । मां पुनन्तु । विश्वे च आयवः* मनुष्या मां पुनन्तु ॥

[3]तृतीया—अनुष्टुप् ॥ हे जातवेदः! जातानां वेदितः! पवित्रवत् पवित्रार्हं यथा पवित्राणि शोधयितुमर्हन्ति । 'तदर्हम्' इति वतिः । तदनुरूपं मां पुनाहि पुनीहि । ईत्वाभावश्छान्दसः । पवित्रेण दर्शनादिना पुनीहि हे देव! देवनशील! शुक्रेण निर्मलेन तेजसा द्यद्यत् दीप्यमानस्त्वम् । दीद्यतेः दीप्तिकर्मणः शतरि "अ य-

*स्वकर्मवशान्मनुष्यलोकमायन्तीत्यायवो मनुष्या इति माधवीये.

देव दीद्यत् । अग्ने क्रत्वा क्रतूꣳरनु ॥ ४६ ॥ [4]यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे । [5]उभाभ्यां देव सवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे । [6]वैश्वदेवी पुनती देव्या-

स्तानामादिः " इत्याद्युदात्तत्वम्, छान्दसमेवाभ्यस्तत्वम्, कृताद्विर्वचनोऽयं द्रष्टव्यः । हे अग्ने! त्वं दीद्यत् [केन कान् दीद्यत्] इत्याह—क्रतून् आस्माकीनानि कर्माणि प्रज्ञाभेदान्वा अनु लक्षीकृत्य । 'दीर्घादटि' इति रुत्वम् । क्रत्वा क्रतुना प्रज्ञया कर्मविशेषेण वा दीद्यत् त्वं मां पुनीहीति । 'जसादिषु वा वचनम्' इति नाभावाभावः ॥

[4]अथ चतुर्थी—यत्त इति गायत्री ॥ हे अग्ने! यत् ते तव अर्चिषि अन्तरा ज्वालासु मध्ये विततं ब्रह्म परिवृढं पवित्ररूपं तेन आत्मानं पुनीमहे । यद्वा—यज्ज्वालासु पवित्रं रूपं तेन ब्रह्म वयं पुनीमहे आस्माकीनं ब्रह्मवर्चसं ऋगादिकं वा ब्रह्म आत्मानं वा पुनीमहे ॥

[5]अथ पञ्चमी—उभाभ्यामिति गायत्री ॥ हे देव! सवितः! सर्वस्य प्रेरक! यश्च सवः अनुज्ञा प्रेरणं वा ताभ्यां इदं ब्रह्म पुनीमहे । गतम् ॥

[6]अथ षष्ठी—वैश्वदेवीति त्रिष्टुप् ॥ वैश्वदेवी विश्वेषां देवानां सम्बन्धिनी सा देवी पुनती शोधयन्ती अस्मानागात् आगच्छतु । यस्यै यस्या देव्याः बह्वीः बह्व्यः अनेकाः तनुवः शरीराणि

गा॑त् । यस्यै॑ ब॒ह्वीस्त॒नुवो॑ वी॒तपृ॑ष्ठाः । तया॑ मद॑-
न्तस्सध॒माद्ये॑षु । व॒यꣳ स्या॑म॒ पत॑यो र॒यी॒णाम् ॥
४७ ॥ [7]वै॒श्वा॒न॒रो र॒श्मिभि॑र्मा पुनातु । वात॑ः प्रा॒णे-
नै॑षि॒रो म॑यो॒भूः । द्यावा॑पृथि॒वी पय॑सा॒ पयो॑भिः ।

शच्यादिनाम्नचः वीतपृष्ठाः कान्तस्तुतयः तया देव्या मदन्तः मोदमानाः । व्यत्ययेन शप् । सधमाद्येषु सह माद्यन्ति येषु सवनेषु । अधिकरणे ण्यति व्यत्ययेनोत्तरपदाद्युदात्तम् । यद्वा—ण्यन्तात् 'अचो यत्' 'सधमादस्थयोः' इति सधादेशः । तेषु-तेषु स्थानेषु मोदमाना वयं रयीणां धनानां पतयः स्वामिनः स्याम ॥

[7]अथ सप्तमी—वैश्वानर इति त्रिष्टुप् ॥ वैश्वानरः विश्वेषां नराणां स्वामित्वेन सम्बन्धी अग्निरादित्यो वा । मां रश्मिभिः पवित्रैः पुनातु । वातश्च मां पुनातु कीदृशः प्राणेन प्राण-रूपेण स्थित्वा इषिरः सर्वप्राणिषु प्रविष्टवान् । इष गतौ औ-णादिकः किरच् । यश्च सर्वस्य मयोभूः सुखस्य भावयिता । किञ्च—द्यावापृथिवी द्यावापृथिव्यावपि मां पुनीतां शोधयतां, कीदृश्यौ, पयसा उदकेन पयोभिरन्यैश्च हेतुभिः ऋतावरी ऋतं यज्ञः सत्यं वा तद्वत्यौ । 'छन्दसीवनिपौ' इति वनिप्, 'वनोरच' इति ङीब्रेफौ । यज्ञिये यज्ञसंपादिन्यौ यज्ञार्हे । 'यज्ञर्त्विग्भ्याम्' इति घः । यद्वा—यज्ञिये कर्मणि वर्तमानं पुनीताम् ॥

ऋतावरी यज्ञिये मा पुनीताम् । [8]बृहद्भिस्सवितस्तृभिः । वर्षिष्ठैर्देव मन्मभिः । अग्ने दक्षैः पुनाहि मा । [9]येन देवा अपुनत । येनापो दिव्यं कशः । तेन दिव्येन ब्रह्मणा ॥ ४८ ॥ इदं ब्रह्म पुनीमहे । [10]यः पावमानीरध्येति । ऋषिभिस्संभृतꣳ रसम् । सर्वꣳ स पूतमश्नाति । स्वदितं मातरिश्व-

[8]अथाष्टमी—बृहद्भिरिति गायत्री ॥ हे सवितः ! बृहद्भिः महद्भिः तृभिः त्रिषु लोकेषु त्रिधा स्थितैः । छान्दसं प्रसारणम् । यद्वा—सर्वस्य प्रीणनैः । तृप्यतेः करणे क्विप्, छान्दसोऽन्त्यलोपः आद्युदात्तत्वं च । त्रिशब्दपक्षेऽपि उपोत्तमत्वाभावत् 'झल्युपोत्तमम्' इति न सिद्ध्यति । वर्षिष्ठैः प्रवृद्धधर्मैः हे देव! देवनादिगुणयुक्त! अग्ने ! मन्मभिः मननीयैः[1] दक्षैः शीघ्रैः मां पुनाहि शोधय ॥

[9]अथ नवमी—येन देवा इत्यनुष्टुप् ॥ येन देवा आत्मानं अपुनत अशोधयन् येन च दिव्यं अप्राकृतं कशः गतिस्वभावः। कशेर्गतिकर्मणोऽसुन् । तादृशीं गतिं आपोऽपुनत तेन दिव्येन दिवि भवेन ब्रह्मणा परिवृढेन पवित्रेण रूपेण इदं ब्रह्म पुनीमहे ॥

[10]अथ दशमी—यः पावमानीरित्यनुष्टुप् ॥ यः पावमानीः पवमानानुवाकसम्बन्धिनीः "पवमानस्सुवर्जनः"[2] इत्याद्या ऋचः अध्येति अधीते पठति । व्यत्ययेन परस्मैपदम् । यद्वा—अध्येति एताः

[1] माननीयैः. [2] ब्रा. १-४-८.

ना । [11]पावमानीर्यो अध्येति । ऋषिभिस्संभृतꣳ रसम् । तस्मै सरस्वती दुहे । क्षीरꣳ सर्पिर्मधूदकम्[12] । पावमानीस्स्वस्त्ययनीः ॥ ४१ ॥ सुदुघा हि पयस्वतीः । ऋषिभिस्सम्भृतो रसः । ब्राह्मणेष्व-

---

स्मरति । इकू स्मरणे । यद्वा—अध्येति अधिगच्छति जानाति याथात्म्येन ग्रन्थतोऽर्थतश्च । इण् गतौ । गत्यर्थाः बुद्ध्यर्थाः । कीदृशीरित्याह—ऋषिभिः द्रष्टृभिः संभृतं संचितं रसं सारं मन्त्राणां सः सर्वं पूतं शोधितं अश्नाति स्वदितं स्वादुकृतं च अश्नाति मातरिश्वना वायुना । तस्याशनीयं सर्वं मातरिश्वा स्वयमेव शोधयति स्वादु च करोति ॥

[11]अथ एकादशी—पावमानीरित्यनुष्टुप् ॥ अर्धर्चो गतः । तस्मै महाभागाय सरस्वती दुहे दुग्धे समृद्धं ददाति क्षीरादि । अध्ययनमात्रस्यैवेयत्फलमिति स्तुतिः ॥

[12]अथ द्वादशी—पावमानीरित्यनुष्टुप् ॥ पावमानीः पावमान्यः एता ऋचः स्वस्त्ययनीः अविनाशनप्राप्तिसाधनभूताः । उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । सुदुघाः शोभनं फलानां दोग्ध्र्यः । 'दुहः कब्घश्च' इति कप् । पयस्वतीः उदकवत्यः अन्नवत्यो वा, तद्धेतुत्वात् । हि यस्मादर्थे; यस्मादेवं एता एतादृश्यः तस्मादेता ऋषिभिः संभृतो रसः । किञ्च—ब्राह्मणेष्वमृतं अमरणनिमित्तं हितं निहितम् । यद्वा—अमृतमपवर्गः अपवर्गहेतुत्वेन ज्ञानिषु ब्राह्मणेषु इदं निहितम् ॥

मृतꣳ हितम् । [13]पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् । कामान्त्समर्धयन्तु नः । देवीर्देवैस्समाभृताः । [14]पावमानीस्स्वस्त्ययनीः । सुदुघा हि घृतश्चुतः । ऋषिभिस्सम्भृतो रसः ॥ ५० ॥ ब्राह्मणेष्वमृतꣳ हितम् । [15]येन देवाः पवित्रेण । आत्मानं पुनते सदा । तेन सहस्रधारेण । पाव-

[13]अथ त्रयोदशी—पावमानीरित्यनुष्टुप् ॥ पामानीः पावमान्यः नः अस्मभ्यं दिशन्तु ददतु इमं च लोकं अथो अपि च अमुं च लोकम् । किञ्च—नः अस्माकं कामान् अस्यां अमुष्यां च स्थितान् समर्धयन्तु समृद्धान् कुर्वन्तु देवीः देव्यः देवनादिमत्यः देवैः समाभृताः एकत्र समाहृताः । 'हृग्रहोर्भः' ॥

[14]अथ चतुर्दशी—पावमानीरित्यनुष्टुबेव ॥ पावमानीरिति गतम् । घृतश्चुत इति विशेषः । घृतस्योदकस्य क्षारयित्र्यः कर्मसिद्ध्या वृष्टिहेतुत्वात् ॥

[15]अथ पञ्चदशी—येनेति त्रिष्टुबेव ॥ देवाः वस्वादयः ऋत्विगादयो वा येन पवित्रेण पवमानेन रूपेण पावमानीनां सम्बन्धिना आत्मानं सदा पुनते तेन सहस्रधारेण बहुप्रकारशोधनेन पवित्रेण आत्मीयेन पावमान्यः एताः ऋचः मा मां पुनन्तु ॥

मान्यः पुनन्तु मा । [16]प्राजापत्यं पवित्रम् । शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे । [17]इन्द्रस्सुनीती सह मा पुनातु । सोमस्स्वस्त्या वरुणस्समीच्या । यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ॥

अनु रयीणां ब्रह्मणा स्वस्त्ययनीस्सुदुघा हि घृतश्चुत ऋषिभिस्सम्भृतो रसः पुनातु त्रीणि च ॥

[16]अथ षोडशी—प्राजापत्यमित्यनुष्टुबेव ॥ प्राजापत्यं प्रजापतेः स्वं पवित्रं येन स आत्मानं शोधितवान् एता ऋच उच्यन्ते । शतोद्यामं बहुप्रकारोद्धारणं हिरण्मयं हिरण्यपरिणामवत् पवमानं अविनाशं वा हरणशीलं वा पापानां तेन ब्रह्मणा विदितेन वयं ब्रह्मविदः सन्तः पूतं शुद्धं सदा यथा भवति तथा पुनीमहे ब्रह्म आत्मानं, आत्मीयं वा ब्रह्मवर्चसं, ऋगादिकं वा मन्त्रम् ॥

[17]अथ सप्तदशी—इन्द्रः सुनीतीति त्रिष्टुप् ॥ सुनीती सुनीत्या नयतीति तथा । तादृश्या सेनया शक्त्या वा सह मा मां इन्द्रः पुनातु । 'सुपां सुलुक्' इति तृतीयैकवचनस्य पूर्वसवर्णदीर्घत्वम् सोमश्च स्वस्त्या अविनाशहेतुभूतया सह मां पुनात्विति । वरुणश्च समीच्या सम्यगञ्चनया सह मां पुनातु । यमश्च राजा प्रमृणाभिः प्रमारिकाभिः सेनाभिः शक्तिभिर्वा सह मा मां पुनातु । जातवेदाश्च ऊर्जयन्त्या ऊर्जं हविरात्मकं अन्नं आत्मन इच्छन्त्या विश्वं वा जगदूर्जयन्त्या बलप्राणनप्रदानेन धारयन्त्या सह मा मां पुनातु । 'ऊर्ज बलप्राणनयोः' ॥

इति चतुर्थे अष्टमोऽनुवाकः.

[1]प्रजा वै स॒त्रमा॑सत॒ तप॒स्तप्य॑माना अजु॑ह्वतीः। दे॒वा अ॑पश्यञ्चम॒सं घृ॒तस्य॑ पू॒र्णꣳ स्व॒धाम्। तमु॒पो॑दति॑ष्ठ॒न्तम॑जुहवुः। तेनार्धमा॒स ऊर्ज॒मवा॑रुन्धत। तस्मा॑दर्धमा॒से दे॒वा इ॒ज्यन्ते[2]। पि॒तरो॑ऽपश्यञ्चम॒सं घृ॒तस्य॑ पू॒र्णꣳ स्व॒धाम्। तमु॒पो॑दति॑ष्ठ॒न्तम॑जुहवुः।

---

[1]अथ राजसूयब्राह्मणशेषः, चातुर्मास्यानां राजसूय एवोत्पत्तेः॥ 'प्रजा वै सत्त्रमासत' इति द्वावनुवाकौ वैश्वदेवं काण्डम्॥

प्रजाः वक्ष्यमाणा देवादयः सर्वे संहत्य सत्रमासत सत्रासनं कुर्वन्त इव दीर्घकालं सहासत किं कुर्वन्तः तपस्तप्यमानाः गार्हस्थ्ये स्थित्वा उपवासादीनि तपांसि कुर्वत्यः अजुह्वतीः अजुह्वत्यः होमं कंचिदप्यकुर्वाणा आस्त। 'तपस्तपः कर्मकस्यैव' इत्यात्मनेपदम्। अथ तासां देवतानां मध्ये देवाश्चमसं पात्रं घृतस्य पूर्णं स्वधां अमृतात्मकं स्वस्यात्मनो धारकं वा। दधातेर्विच्, 'पूरणगुण' इति षष्ठीसमासप्रतिषेधेन षष्ठी ज्ञापिता। ईदृशं चमसं तपःप्रभावादाविर्भूतं अपश्यन्। अथ तं द्रष्टुं उपोदतिष्ठन् समीपतो होतुमुद्यताः अथ अजुहवुश्च तम्। ते न च होमेन अर्धमासे ऊर्जं अन्नं अवारुन्धत लब्धवन्तः। सामर्थ्याद्वीप्स्यते अर्धमासेअर्धमासे। तस्मादर्धमासे पौर्णमास्याममावास्यायां च देवा इज्यन्ते। एवं सर्वत्र वेदितव्यम्॥

[2]पितरो मासि अन्नं अवारुन्धत। तस्मान्मासि पितृभ्यः क्रियते मासिमासि पिण्डपितृयज्ञः क्रियते। पद्दन्नादिना मासस्य मास्भावः। 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम्॥

तेन॑ मा॒स्यूर्ज॒मवा॑रुन्धत । तस्मा॑न्मा॒सि पि॒तृभ्यः॑ क्रियते। [3]म॒नु॒ष्या॑ अपश्यञ्च॒म॒सं घृ॒तस्य॑ पूर्ण॒ꣳ स्व॒धाम् ॥ ५२ ॥ तमुपोद॑तिष्ठ॒न्तम॑जुहवुः । तेन॑ द्व॒यीमूर्ज॒मवा॑रुन्धत । तस्मा॑द्द्विरह्नो॑ मनु॒ष्ये॑भ्य॒ उप॑ ह्रियते। प्रा॒तश्च॑ सा॒यं च॑। [4]प॒शवो॑ऽपश्यञ्च॒म॒सं घृ॒तस्य॑ पूर्ण॒ꣳ स्व॒धाम् । तमुपोद॑तिष्ठ॒न्तम॑जुहवुः । तेन॑ त्र॒यीमूर्ज॒मवा॑रुन्धत। तस्मा॑त्त्रिरह्नः॑ प॒शव॒: प्रेर॑ते। प्रा॒तस्स॑ङ्ग॒वे सा॒यम्। [5]अ॒सु॑रा अपश्यञ्च॒म॒सं घृ॒-

[3]मनुष्या द्वयीं ऊर्जं अन्नं अवारुन्धत । द्वावयववावस्य कालद्वयसम्बन्धात् । 'द्वित्रिभ्यां तयस्यायज्वा' स्थानिवद्भावेन तयबन्ततया उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तस्मान्मनुष्येभ्यः एकस्य अह्नः अहोरात्रस्य द्विरुपह्रियते प्रातश्च सायं च प्रतिदिवसमह्नि रात्रौ च॥

[4]पशवः त्रयीं त्र्यवयवां ऊर्जं अन्नं अवारुन्धत । तस्मादह्नस्त्रिः प्रेरते पशवश्चरणार्थं प्रतिष्ठन्ते प्रातस्सङ्गवे सायं च । एभिः त्रिभिः विभागैः दिवसो भवति नैतद्व्यतिरिक्तः कश्चिद्दिवसांशः । तस्मात् सामर्थ्यात् सर्वमहश्चरन्ति पशव इत्युक्तं भवति । ततस्साति अत्यन्तसंयोगे संख्याविशेषोपादानस्य तद्विरोधित्वात् द्वितीयाभावे संबन्धसामान्ये षष्ठ्येव । ईर गतौ, आदादिकः अनुदात्तेत्॥

[5]असुराः संवत्सरे अन्नमलभन्त संवत्सरेऽन्तर्भाविताब्दाः सकृत् संवत्सरे भुञ्जते । अथ तथाविधानसुरान् पश्यन्तः ते देवा अमन्यन्त ।

तस्यं पूर्णꣳ स्वधाम् ॥ ५३ ॥ तमुपोदतिष्ठन्तमं- जुहवुः । तेनं संवथ्सर ऊर्जमवारुन्धत । ते देवा अंमन्यन्त । अमी वा इदमंभूवन् । यद्वयꣳ स्म इतिं। [6]त एतानिं चातुर्मास्यान्यंपश्यन् । तानि निरंवपन्। तैरेवैषां तामूर्जंमवृञ्जत । ततो देवा अभंवन् । प- राऽसुराः ॥ ५४ ॥ [7]यद्यजते । यामेव देवा ऊर्ज- मवारुन्धत । तां तेनावरुन्धे । यत्पितृभ्यः करोतिं। यामेव पितर ऊर्जमवारुन्धत । तां तेनावरुन्धे । यदांवसथेऽन्नꣳ हरंन्ति। यामेव मंनुष्या ऊर्जमवा- रुन्धत । तां तेनावरुन्धे । यद्दक्षिणां ददांति॥५५॥ यामेव पशव ऊर्जमवारुन्धत । तां तेनावरुन्धे । य-

---

अमी असुरा इदं सर्वं अभूवन् यद्वयं स्मः । एभिः अपहृतं अस्मदैश्व- र्यमिति यावत् ॥

[6]त एतानीत्यादि ॥ गतम् ॥

[7]यद्यजत इति ॥ यदुक्तं 'तस्माद्दर्शमासे देवा इज्यन्ते' इति ब्राह्म- णेन तदाह—तत्र यत् दर्शपूर्णमासाभ्यां यजते यजमानो देवान् तेन देवानां ऊर्जं अवरुन्धे । पितृभ्यः पिण्डपितृयज्ञेन पितृणामूर्जमवरुन्धे। आवसथे वैश्वदेवातिथिपूजादिना अन्नदानेन मनुष्याणामूर्जमवरुन्धे । दक्षिणात्वेन पश्वादिदानात् पशूनामूर्जमवरुन्धे । चातुर्मास्यैरसुराणामू- र्जमवरुन्धे संवत्सरसाध्यत्वात् भवत्यात्मना स्वयं भूतिमान् संपद्यते । अस्य भ्रातृव्यः पराभवति विनश्यति ॥

श्चातुर्मास्यैर्यजते । यामेवासुरा ऊर्जमवारुन्धत । तां तेनावरुन्धे । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति । [4]विराजो वा एषा विक्रान्तिः । यच्चातुर्मास्यानि । वैश्वदेवेनास्मिन्लोके प्रत्यतिष्ठत् । वरुणप्रघासैरन्तरिक्षे । साकमेधैरमुष्मिन्लोके । एष ह त्वावैतथ्सर्वं भवति । य एवं विद्वाꣳश्चातुर्मास्यैर्यजते ॥ ५६ ॥

मनुष्या अपश्यश्चमसं घृतस्य पूर्णꣳ स्वधामसुरा अपश्यश्चमसं घृतस्य पूर्णꣳ स्वधामसुरा ददात्यतिष्ठच्चत्वारि च ॥ ९ ॥

[4]विराजो वा इत्यादि ॥ विराट् प्रजापतिः । तदीया विक्रान्तिः लोकत्रयमाक्रम्यावस्थानम् । सैव चातुर्मास्यानि । इदानीं विराज एव विक्रान्तिं दर्शयति—वैश्वदेवेनेत्यादि ॥ यस्मादेवं तस्मात् एवं विद्वान्यश्चातुर्मास्यैर्यजते एष खलु एतत्सर्वं त्रैलोक्यं भवति, एतदाधारं सर्वं भवति एतस्माद्वा देवाद्यैश्वर्यं प्राप्नोति । तोरन्त्यलोपश्छान्दसः । एवं चातुर्मास्यानामेव स्तुत्यर्थं तदवयवानां नित्यानां कर्मणामनुवाद इति ॥

इति चतुर्थे नवमोऽनुवाकः.

[1]अग्निर्वाव संवथ्सरः। आदित्यः परिवथ्सरः। चन्द्रमा इदावथ्सरः। वायुरनुवथ्सरः। यद्वैश्वदेवेन यजते। अग्निमेव तथ्संवथ्सरमाप्नोति। तस्माद्वैश्वदेवेन यजमानः। संवथ्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत। यद्वरुणप्रघासैर्यजते। आदित्यमेव तत्परिवथ्सरमाप्नोति ॥ ५७ ॥ तस्माद्वरुणप्रघासै-

[1]अग्निर्वावेत्यादि ॥ अत्र बार्हस्पत्यं षष्टिवर्षं प्रभवादिसंज्ञं महायुगम् । तत्र बार्हस्पत्या द्वादशाब्दाः पञ्चकृत्व आवर्तन्ते आश्वयुजकार्तिकमार्गशीर्षपौषमाघफाल्गुनचैत्रवैशाखज्येष्ठाषाढश्रावणप्रोष्ठपदाख्याः ।
आहुश्च—

गुरुभगणा राशिगुणा आश्वयुजाद्या गुरोरब्दाः ।*

तथा—

यस्मिन्नुदेति नक्षत्रे प्रवासोपगतोऽङ्गिराः ।
तस्मात्संवत्सरो मासात् बार्हस्पत्यः प्रशस्यते ॥ इति ॥

ततश्चैतैरेव पञ्चकृत्व आवर्तमानैः द्वादशाब्दप्रमाणानि पञ्चावान्तरयुगानि भवन्ति, तत्र प्रथमे युगे योऽब्दः कार्तिकादिसंज्ञः स संवत्सरोनाम। द्वितीये युगे परिवत्सरोनाम, तृतीये इदावत्सरः, चतुर्थे अनुवत्सरः, पञ्चमे इद्वत्सर इति । केचिदाहुः—षड्भिष्षड्भिरब्दैरवान्तराणि युगानि भवन्तीति ॥ तत्र प्रथमादयः षडब्दाः संवत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरवत्सराख्या इति । तत्र प्रथमतस्सङ्कृतो वत्सरः संवत्सरः। अथ

*आर्यभटीये कालक्रियापादे.

यजमानः । परिवथ्सरीणा॒ᳫ्ँ स्वस्तिमाशास्त इत्याशासीत । यथ्साकमेधैर्यजते । चन्द्रमसमेव तदिदावथ्सरमाप्नोति । तस्माथ्साकमेधैर्यजमानः । इदावथ्सरीणा॒ᳫ्ँ स्वस्तिमाशास्त इत्याशासीत । [2]यत्पितृयज्ञेन यजते । देवानेव तदन्ववस्यति । अथ वा अस्य वायुश्चानुवथ्सरश्चाप्रीतावुच्छिष्येते । यच्छुनासीरीयेण यजते ॥ ५८ ॥ वायुमेव तदनुव-

स एव वत्सरो धर्मविशेषपरिग्रहेण पुनः परिवर्तत इति परिवत्सरो द्वितीयः । इदमेव संवत्सररूपं धर्मान्तरपरिग्रहेण आवृत्तमिति इदावत्सरस्तृतीयः । स एव पुनरप्यनुवर्तत इति अनुवत्सरः । अस्यैवानुवृत्तेः इद्वत्सरः कालानुवृत्तिमात्रात् वत्सरः । तत्रैते संवत्सराद्योऽग्न्यादिभावेन स्तूयन्ते तत्प्राप्तिहेतुत्वेन वैश्वदेवादीनि पर्वाणि स्तूयन्ते ॥ संवत्सरीणामिति सूक्तवाकस्याशिष्षु एवं होता आशासीत "संवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्ते"* इति । संवत्सरं भाविनी संवत्सरीणा 'संपरिपूर्वात्ख च' इति खः । एवं परिवत्सरीणामित्यत्र । इदावत्सरीणामित्यादौ छान्दसः खः ॥

[2]देवानेवेति ॥ पितृयज्ञेन अग्न्यादिव्यतिरिक्तानपि देवान् पित्रादिरूपान् अन्ववस्यति अनुक्रमेण प्राप्नोति । पित्रात्मका देवा गृह्यन्ते। यथा—"देवान्वै पितॄन् प्रीतान्"† इति । अथ इदानीं अस्य वायुश्चानुवत्सरश्चाप्रीतौ अनाराधितौ उच्छिष्येते । तत्र शुनासीरीयेण तदनुवत्सरस्याप्तिरिति ॥

* तै. ब्रा. ३-५-१०, † तै. ब्रा. १-३-१०

थ्सरमाप्नोति । तस्माच्छुनासीरीयेण यजमानः । अनुवथ्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । [3]संवथ्सरं वा एष ईफ्सतीत्याहुः । यश्चातुर्मास्यैर्यजत इति । एष ह त्वै संवथ्सरमाप्नोति । य एवं विद्वाꣳ श्चातुर्मास्यैर्यजते । [4]विश्वे देवास्समयजन्त । तेऽग्निमेवायजन्त । त एतं लोकमजयन् ॥ ५१ ॥ यस्मिन्नग्निः । यद्वैश्वदेवेन यजते । एतमेव लोकं जयति । यस्मिन्नग्निः । अग्नेरेव सायुज्यमुपैति । [5]यदा वैश्वदेवेन यजते । अथ संवथ्सरस्य गृहपति-

---

[3]संवत्सरं वा इत्यादि ॥ चातुर्मास्ययाजी संवत्सरमाप्नुमिच्छति तस्मादस्माभिरुक्तं 'अग्निमेव तत्संवत्सरमाप्नोति' इत्यादिकमिति भावः । अस्ति त्वत्र विशेष इति तुशब्दो वेदितुर्वैशिष्ट्यमाह । एवं विदित्वा यश्चातुर्मास्यैः यजते स एव संवत्सरमाप्नोति नाविद्वानिति । तोरन्त्यलोपश्छान्दसः ॥

[4]विश्वे देवा इत्यादिश्चातुर्मास्यहविषां विधिः । विश्वे देवाः संहत्याग्निमेवेष्ट्वा अग्निलोकं अजयन् ॥ एतमिति ॥ इदानीं लोकतया प्रसिद्धं व्यपदिशति । एवं सर्वत्र ॥ तस्माद्वैश्वदेवेनेष्ट्वा एतं लोकं जित्वा अग्नेस्सायुज्यं गच्छति यजमानः ॥

[5]यदा इत्यादि ॥ वैश्वदेवयाजी संवत्सरस्य गवामयनस्य गृहपतिं प्रधानं यज्ञपतिं आप्नोति तन्महिमानं भजते । तत्प्राप्तौ च सहस्रयाजिनं सहस्रदक्षिणयाजिनं आप्नोति । तस्य चाप्तौ गृहमेधिनं याया-

माप्नोति। यदा संवथ्सरस्य गृहपतिमाप्नोति। अथ सहस्रयाजिनमाप्नोति। यदा सहस्रयाजिनमाप्नोति ॥ ६० ॥ अथ गृहमेधिनमाप्नोति। यदा गृहमेधिनमाप्नोति। अथाग्निर्भवति। यदाऽग्निर्भवति। अथ गौर्भवति। एषा वै वैश्वदेवस्य मात्रा। एतद्वा एतेषामवमम्। अतोऽतो वा उत्तराणि श्रेयाꣳसि भवन्ति। यद्विश्वे देवास्समयजन्त। तद्वैश्वदेवस्य वैश्वदेवत्वम् ॥ ६१ ॥ [6]अथादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत। स एतं लोकमजयत्। यस्मिन्नादित्यः। यद्वरुणप्रघासैर्यजते। एतमेव लोकं जयति।

वरं सकलश्रुतिस्मृत्युदितगार्हस्थ्यानुष्ठायिनं वा आप्नोति। तदाप्त्यनन्तरं च अग्निः एव संपद्यते। तदनन्तरं च गौः एव संपद्यते। गवां महिमानमाप्नोति गवादिकमाप्नोतीति केचित्। एषा एतावती वैश्वदेवस्य मात्रा फलपरिमाणम्। एतच्च फलं एतेषां चातुर्मास्यफलानां अवमं निकृष्टं वेदितव्यम्। उत्तराणि तु पर्वफलानि अतोऽतः अस्मादस्मात् उत्तराणि श्रेयांसि प्रशस्यानि भवन्ति। पूर्वस्मात्पूर्वस्मादुत्तरोत्तराणि प्रकृष्टफलानीति यावत्। यत् विश्वेदेवाः संहत्य अयजन्त तस्मादस्य वैश्वदेवत्वम् ॥

[6]अथादित्य इत्यादि ॥ तेनेष्ट्वा आदित्यलोकं जितवान् आदित्यः यस्मिन् इदानीं स्वयं वर्तते। राजग्रहणमुदकमिति धीनिवृत्त्यर्थम्।

यस्मिन्नादित्यः। आदित्यस्यैव सायुज्यमुपैति। यदादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत। तद्वरुणप्रघासानां वरुणप्रघासत्वम्। [7]अथ सोमो राजा छन्दाꣳसि साकमेधैरयजत ॥ ६२ ॥ स एतं लोकमजयत्। यस्मिꣳश्चन्द्रमा विभाति। यत्साकमेधैर्यजते। एतमेव लोकं जयति। यस्मिꣳश्चन्द्रमा विभाति। चन्द्रमस एव सायुज्यमुपैति। सोमो वै चन्द्रमाः। एष ह त्वै साक्षात्सोमं भक्षयति। य एवं विद्वान्त्साकमेधैर्यजते। यत्सोमश्च राजा छन्दाꣳसि च समैधन्त ॥ ६३ ॥ तत्साकमेधानाꣳ साकमेधत्वम्। [8]अथर्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। त एतं लोकमजयन्।

---

वरुणप्रघासत्वमिति। वरुणसंबन्धिनः प्रघासा हविर्विशेषा वरुणप्रघासाः ॥

[7]अथ सोम इत्यादि ॥ छन्दांसि साकमेधैरयजत। इष्ट्वा च एतं लोकं जितवान् यस्मिन् इदानी विशेषेण भाति इति। सोमो वा इत्यादि। सोमो रसात्मा चन्द्रमाः। तस्मादेवं विदित्वा साकमेधयाज्येव साक्षादव्यवधानेन सोमं भक्षयति। सोमश्च छन्दांसि च समैधन्त तत् साकमेधानां साकमेधत्वम् ॥

यस्मिन्नृतवः । यत्पितृयज्ञेन यजंते । एतमेव लोकं जंयति । यस्मिंन्नृतवंः । ऋतूनामेव सायुंज्यमुपैति। यदृतवंः पितरंः प्रजापतिं पितरं पितृयज्ञेनायंजन्त । तत्पितृयज्ञस्यं पितृयज्ञत्वम् ॥ ६४ ॥ [9]अथौषंधय इमं देवं त्र्यंम्बकैरयजन्त प्रथैमहीतिं । ततो वै ता अंप्रथन्त । य एवं विद्वाꣳस्त्र्यंम्बकैर्यजंते । प्रथंते प्रजयां पशुभिः ।[10]अथ वायुः परमेष्ठिनꣳ शुनासीरियेणायजत ।स एतं लोकमंजयत् । यस्मिन्वायुः । यच्छुनासीरियेण यजंते । एतमेव लोकं जंयति । यस्मिन्वायुः ॥ ६५ ॥ वायोरेव सायुंज्यमुपैति ।[11]ब्रह्मवादिनों वदन्ति । प्र चातुर्मास्ययाजी मींयता३ न प्रमींयता३ इतिं । जीवन्वा एष ऋतू-

[8]अथर्तव इत्यादि ॥ पितरं पितृयज्ञेन अयजन्त, तस्मादस्य पितृयज्ञत्वम् ॥

[9]अथौषधय इत्यादि ॥ इमं तेषु मन्त्रेषु प्रसिद्धं त्र्यम्बकं अयजन्त । गतमन्यत् ॥

[10]अथ वायुरित्यादि ॥ गतम् ॥ एवं विश्वदेवादयो वैश्वदेवादिभिः अग्निवरुणच्छन्दःप्रजापतित्र्यम्बकपरमेष्ठिनोऽयजन्तेति ॥

[11]ब्रह्मवादिन इत्यादि ॥ चातुर्मास्ययाजी किं प्रमीयते किं वा नेति। 'विचार्यमाणानाम्' इति प्लुतः । 'एचोऽप्रगृह्यस्य' इति पूर्व-

नप्यैति । यदि वसन्ता प्रमीयते। वसन्तो भवति । यदि ग्रीष्मे ग्रीष्मः । यदि वर्षासु वर्षाः । यदि शरदि शरत् । यदि हेमन् हेमन्तः । ऋतुर्भूत्वा संव-थ्सरमप्यैति । संवथ्सरः प्रजापतिः । प्रजापतिर्वा-वैषः ॥ ६६ ॥

परिवथ्सरमाप्नोति शुनासीरियेण यजतेऽजय-न्थ्सहस्रयाजिनमाप्नोति वैश्वदेवत्वᳲ साकमेधैरय-जत समैधन्त पितृयज्ञत्वं जयति यस्मिन्वायुर् हे-मन्तस्त्रीणि च ॥ १० ॥

उभये युवᳲ सुराममुदस्थाग्नि वै यस्य प्रातस्स-वन एकैकोऽसूर्यं पवमानः प्रजा वै सत्रमासताग्नि-र्वाव संवथ्सरो दश ॥ १० ॥

---

स्यार्थस्याकारः । छान्दसत्वादेव उत्तराद्यविकारो लुप्यते । अथ नेतीत्युत्तरं ब्रूते । जीवन्नित्यादि ॥ जीवन् खलु एष ऋतूनप्येति अनुप्रविशति । तस्माद्गृहादिष्विवानुप्रविश्य तिष्ठन् कथमसौ मृतस्स्यात्, एवं सामान्येन उक्तान् ऋतून् दर्शयति—यदि वसन्ता वसन्ते प्रमीयते देहोपाधिना वियुज्यते सप्तम्या आदादेशे "लघावन्तः" इति मध्योदात्तत्वम् । तदाऽसौ वसन्तमनुप्रविष्टो वसन्त एव भूत्वा वर्तते । निवृत्तेऽपि देहोपाधौ तदानीमेव विद्यमानवसन्तोपाधिपरि-

उभये वा उदस्थाथ्सर्वाभिर्मध्यतोऽत्र वाव ब्राह्मणेष्वथ गृहमेधिनꣳ षट्थूर्षष्टिः ॥ ६६ ॥

हरिः ओं श्रीकृष्णार्पणमस्तु.

चतुर्थप्रपाठकस्समाप्तः.



हरिः ओं पञ्चमप्रपाठकप्रारम्भः.

[1]अग्नेः कृत्तिकाः । शुक्रं परस्ताज्ज्योतिरवस्तात् ।

ग्रहेण वर्तमानो जीवन्नेव भवतीति ॥ एवं ग्रीष्मादिषु ॥ हेमन्निति 'सुपां सुलुक्' इति सप्तम्या लुकि तलोपश्छान्दसः । एवमृतुभूतस्संवत्सरमनु प्रविशति । संवत्सरस्स्वयं प्रजापतिरेव सर्वान्प्रति कारणत्वात् । एवमुक्तेन प्रकारेण प्रजापतिरेव स खलु एष यजमानः, स चेदानीमपि विद्यत इति कस्मान्म्रियते इति ॥

इति श्री भट्टभास्करमिश्रविरचिते पारक्षुद्रभाष्ये
प्रथमेऽष्टके चतुर्थप्रपाठके दशमोऽनुवाकः.

चतुर्थप्रश्नस्समाप्तः.



[1]अग्नेः कृत्तिका इत्यादि ॥ नक्षत्रेष्टिकाण्डम् । "त्रयोऽग्निर्देवता" [कृत्तिका नक्षत्रमग्निर्देवता*] इत्यादिभिः एते विकल्प्यन्ते इत्येके । प्रकरणाम्नातैर्बाधितत्वाद्विकृत्यर्थमेत इत्यन्ये ॥

*सं. ४-४-१०.

[2]प्रजापते रोहिणी । आपः परस्तादोषधयोऽवस्तात् । [3]सोमस्येन्वका विततानि । परस्ताद्वयन्तोऽवस्तात् । [4]रुद्रस्य बाहू । मृगयवः परस्ताद्विक्षारोऽ-

---

अग्नेः कृत्तिकाः स्वभूताः । यद्वा—अग्नेरेव स्वरूपं कृत्तिकादिनक्षत्रं नाम, अग्निरेव कृत्तिकात्मना वर्तत इति। शुक्रं परस्तात् ज्योतिरवस्तात् ज्वाला यदैतत्त्रयं भवति तदा दग्धं मृष्टं वा दृश्यते ॥

[2]प्रजापते रोहिणी रोहणं मृष्टिः । तत्र प्रजापतेः सृजतः त्रयं भवति परस्तादापः सर्वस्य कारणभूताः। मध्ये कालात्मिका रोहणशक्तिः। अवस्तादोषधयः सर्वविकाराणामुपलक्षणम् । यदैतत्त्रयं भवति तदा सृष्टं दृश्यते ॥

[3]सोमस्येन्वका मृगशीर्षः। 'इवि प्रीणने'। "सौम्यं वै वासः"* इति वासोभिर्जगत् प्रीणयितुः सोमस्य त्रयं भवति । परस्ताद्विततानि तन्तुरूपाणि मध्ये कालात्मिका प्रीणनशक्तिः । अवस्ताद्वयन्तः वास उत्पादयन्तः । एवमेतत्त्रयसन्निपाते तज्जगत् प्रीणनसमर्थं भवति ॥

[4]रुद्रस्य बाहू आर्द्रा । द्विवचनान्तमेव संज्ञा । बाह्व प्रयत्ने । यद्वा—ज्ञादिकं यद्वाह्वादिकं विध्यतो[1] रुद्रस्य त्रयं भवति परस्तान्मृगयवः मृगान्वेषणस्वरूपा पङ्क्तिः[2] । मध्ये कालात्मिका धनव्ययस्य यत्नशक्तिः[3] अवस्ताद्विक्षारः लक्ष्यविहतिः एतत्त्रयोपपत्तौ तद्विद्धं भवति ॥

---

[1] बाह्व प्रयत्ने । तमद्वारादिकं विध्यतः इत्यपि पाठः । [2] मृगयवो व्याधविशेषा देवा इति माधवीयं भाष्यम् । [3] कालात्मिका बाधा व्याधस्य यत्नशक्तिः इत्यपि पाठः ।

* मा. ३-२-६.

वस्तात् । [5]अदित्यै पुनर्वसू । वातः पुरस्तादार्द्रम-
वस्तात् ॥ १ ॥ [6]बृहस्पतेस्तिष्यः । जुह्वतः पुर-
स्ताद्यजमाना अवस्तात् । [7]सर्पाणामाश्रेषाः । अ-
भ्यागच्छन्तः पुरस्तादभ्यानृत्यन्तोऽवस्तात् । [8]पि-
तॄणां मघाः । रुदन्तः पुरस्तादपभ्रंशोऽवस्तात् ।

[5]अदित्यै पुनर्वसू वसूनां वसुत्वं आपादयन्त्या अदित्यास्त्रयं भवति परस्तात् वातः विकासहेतुर्भावानाम् । मध्ये कालात्मिका वसुत्वप्रापणशक्तिः । अवस्तात् आर्द्रं वृष्ट्युदकादि । एतत्त्रयोपपत्तौ लतादिकं पुनर्भद्रं दृश्यते ॥

[6]बृहस्पतेस्तिष्यः । "रुद्रो वै तिष्यस्सोमः पूर्णमासस्साक्षादेव ब्रह्मवर्चसमवरुन्धे"[1] इति ब्रह्मवर्चसहेतुस्तिष्यः । बृहस्पतेस्तदुत्पादयतस्त्रयं भवति, परस्तात् जुह्वतः । मध्ये कालात्मिका तदुत्पादनशक्तिः । अवस्तात् यजमानाः । एतत्त्रयोपपत्तौ ब्रह्मवर्चसं संपन्नं भवति ॥

[7]सर्पाणामाश्रेषाः । श्रिषु श्लिषु दाहे । सर्पाणां विषाग्निना दहतां त्रयं भवति । परस्तादभ्यागच्छन्तः द्रष्टव्यसकाशं प्रत्यागच्छन्तः । मध्ये कालात्मिका विषाश्लेषणशक्तिः । अवस्तादभ्यानृत्यन्तः कम्पयन्तः स्वेदादिना ॥

[8]पितॄणां मघाः । परस्तात् रुदन्तः बन्धून् रोदयन्तः । मध्ये कालात्मिका त्यागे क्षेपणीशक्तिः[2] । अवस्तादपभ्रंशः देहपातः । एतत्त्रयोपपत्तौ आक्षिप्तचैतन्यो मृत इत्युच्यते ॥

[1]सं. २-२-१०. [2]कालात्मिका देहपातनशक्तिः इत्यपि पाठः.

[9]अर्यम्णः पूर्वे पल्गुनी। जाया परस्ताद्दृषभोऽवस्तात् । [10]भगस्योत्तरे । वहतवः परस्ताद्वहमाना अवस्तात् ॥ २ ॥ [11]देवस्य सवितुर् हस्तः । प्रसवः परस्तात्सनिरवस्तात् । [12]इन्द्रस्य चित्रा । ऋतं

[9]अर्यम्णः पूर्वे फल्गुनी फल्गुन्यौ । उपसर्या गावः फल्गुन्यः अर्यमा वृषभः "अर्यमाऽऽयाति वृषभस्तुविष्मान्"[1] "फल्गुनीनामृषभो रोरवीति"[2] इति च । तत्र निषिञ्चतोऽर्यम्णः त्रयं भवति—परस्तात् जाया स्वयं जायते यत्र प्रजार्थेन । मध्ये कालात्मिका प्रजननशक्तिः । अवस्तात् ऋषभः रेतस्सेचनः । एतत्त्रयोपपत्तौ निषिक्तो गर्भो भवति ॥

[10]भगस्योत्तरे फल्गुन्यौ 'भगो ह दाता भग इत्प्रदाता'[2] इति भगो ददाति 'तत्त्वा विदुः फल्गुनीः'[2] इति । फल्गुन्यौ गृह्णन्ति पितृकुलधनार्थिन्यः फल्गुन्यः । फल्गु फलम् । पामादित्वान्नः शार्ङ्गरवादित्वात् ङीन्प्रत्ययः । भरणस्य धनं भाजयतस्त्रयं भवति । परस्ताद्वहतवः पितृकुलान्नीयमानं धनं वहतुः यथा 'कन्या इव वहतुमेतवा उ'[3] इति । मध्ये कालात्मिका चायनीशक्तिः । अवस्ताद्वहमानाः वहतून्वध्वा पतिकुलं प्रापयन्तो वोढारः । एतत्त्रयसंपत्तौ फलं संपन्नं भवति ॥

[11]देवस्य सवितुर्हस्तः सविता अनुज्ञाता हस्तेन तद्भवति । सवितुरनुज्ञानेन अर्थं लम्भयतस्त्रयं भवति परस्तात्प्रसवः प्रेरणा । मध्ये कालात्मिका हस्तस्थानीयाऽऽगमशक्तिः । अवस्तात् सनिः लाभः । एतत्त्रयसंपत्तौ लब्धव्यं हस्तस्थं भवति ॥

[1]सं. २-३-१४. [2]ब्रा. १-१-१. [3]ऋ. सं. १-८-११.

परस्ताथ्सत्यमवस्तात् । [13]वायोर्निष्ट्या व्रततिः । परस्तादासिद्धिरवस्तात् । [14]इन्द्राग्नियोर्विशाखे । युगानि परस्तात्कृषमाणा अवस्तात् । [15]मित्रस्यानू-

[12]इन्द्रस्य चित्रा चायनीयशक्तिः इन्द्र ईश्वरः यतः चित्रा चायनीयशक्तिः पूजनीयान् कुर्वतः पूजायां त्रयं भवति परस्तात् ऋतं मनसा अमोघत्वम् । मध्ये कालात्मा चायनीयशक्तिः । अवस्तात् सत्यं वाचिकं यो वाचः फलाविसंवादः । एतत्त्रयसंपत्तौ कर्ता पूजामधिगच्छति ॥

[13]वायोर्निष्ट्या स्वाती संघातात् पदार्थानां निष्टयानम् । स्त्यै ष्ट्यै शब्दसंघातयोः, 'आतश्चोपसर्गे' इत्यङ् । वायुश्च ध्वंसयिता, तस्य ध्वंसयितुः त्रयं भवति । परस्ताद्व्रततिः विस्तारणा इतश्चेतश्च व्यापना । मध्ये कालात्मिका निष्ट्याशक्तिः अवस्तात् असिद्धिः रूपाच्च्युतिः । एतत्त्रयसंपत्तौ पदार्थः प्रध्वंसमुपैति ॥

[14]इन्द्राग्नियोर्विशाखे इन्द्र आसीत्सुरपतिः शतक्रतुः अग्निश्च कृषिं प्रवर्धयति । तयोर्विविधशाखे विविधकार्यरूपे विशाखे । शाख[खृ]व्याप्तौ । देवयमनक्षत्रकोटिद्वयमध्यस्थिते उभयानुग्राहिणी विशाखे इत्येके । इन्द्राग्न्योर्विविधं कृष्यर्थं यतमानयोस्त्रयं भवति—परस्ताद्युगानि सिराणि । मध्ये कालात्मिके कर्षणकृषिसिद्ध्यनुरूपे व्यापनशक्ती । अवस्तात् कृषमाणाः कृषिसिद्धिं लभमानाः । एतत्त्रयसंपत्तौ कृषिफलपौष्कल्यं भवति ॥

[15]मित्रस्यानूराधाः 'अन्वेषामराथ्स्म'* इति सिद्धेर्हेतुत्वम् । मित्रस्य जगत्त्रायतस्त्रयं भवति—परस्तादभ्यारोहत् उपर्युपचयं प्राप्नु-

*आ. १-५-२.

राधाः । अभ्यारोहत्परस्तादभ्यारूढमवस्तात् ॥ ३ ॥
[16]इन्द्रस्य रोहिणी । शृणत्परस्तात्प्रतिशृणदवस्तात् ।
[17]निरृत्यै मूलवर्हणी । प्रतिभञ्जन्तः परस्तात्प्रतिशृणन्तोऽवस्तात् । [18]अपां पूर्वा अषाढाः ।

मारब्धम् । मध्ये कालात्मिका राधनशक्तिः, अवस्तादभ्यारूढः अभ्याक्रान्तं उच्छ्रितं पदम् । एतत्तूयोपपत्तौ राधो भवति ॥

[16]इन्द्रस्य रोहिणी ज्येष्ठा । इन्द्रः शूरः तस्य संग्रामे रोहणम् । तत्रेन्द्रस्य शक्नुवतः शौर्यं रोहयतः परस्तात् शृणत् हिंसना[दा]त्मबलं मध्ये कालात्माऽऽरोहणशक्तिः अवस्तात्प्रतिशृणत् परसेना आगच्छन्ती प्रतिमुखं हिंसन [सत्] बलं एतत्तूयोपपत्तौ शौर्यमस्य रूढं भवति ॥

[17]निरृत्यै मूलवर्हणी । वृहू उद्यमने। उद्वर्हणमुन्मूलविनाशनम्। निरृतिः पापदेवता अलक्ष्मीः । उन्मूलयन्त्यास्त्रयं भवति—परस्तात्प्रतिभञ्जन्तः प्रत्येकं भञ्जयन्तो विरुद्धाः पदार्थाः । मध्ये कालात्मा वर्हणशक्तिः । अवस्तात् प्रतिशृणन्तः संघर्षेण प्रतीपं हिंसन्तः मारयन्तः। एतत्तूयसंपत्तौ निरृतिगृहीतं नश्यति ॥

[18]अपां पूर्वा अषाढाः यन्नासहन्त तदषाढाः अपामसहमानानाममृष्यमाणानामिव परस्ताद्वर्चः बलं अभिभवसमर्थम् । मध्ये कालात्मिकामर्षस्वभाववत्ता । अवस्तात् समितिः संश्लिष्टता समनुप्रविश्य विनाशनं वा । एतत्तूयोपपत्तौ अनाप्लुताभावा[1]न्नश्यन्ति अपां प्रमाणत्वं यद्वर्चोग्रहणं (अपां प्रवहमाणत्वाय वर्चोग्रहणम् ) ॥

[1] अलाप्लुताभावादिति, अलाप्यताभावादिति च पाठान्तरम्.

वर्चः पुरस्तात्समितिरवस्तात् । [19]विश्वेषां देवानामुत्तराः । अभिजयत्पुरस्तादभिजितमवस्तात् । [20]विष्णोश्श्रोणा पृच्छमानाः । पुरस्तात्पन्था अवस्तात् ॥ ४ ॥ [21]वसूनाꣳ श्रविष्ठाः । भूतं पुरस्ताद्भूतिरवस्तात् । [22]इन्द्रस्य शतभिषक् । विश्वव्यचाः

[19]विश्वेषां देवानां उत्तरा अषाढाः संघो गृह्यते । ते चाराधिता जयहेतवः सर्वस्य । तेषां जयं ददतां च त्रयं भवति—परस्तादभिजयत् आभिमुख्येन जयदात्मीयं बलम् । मध्ये कालात्मिका अप्रधृष्या शक्तिः । अवस्तादभिजितं फलम् । एतत्त्रयसंपत्तौ अप्रधृष्यो जेता भवति ॥

[20]विष्णोः श्रोणा । शोण संघाते, विष्णुर्व्यापनसंघातकारी प्रपश्चात्मकत्वात्तस्य । तथा भवतस्त्रयं भवति—परस्तात् पृच्छमानाः चेतयमाना अमूढा जायन्ते । मध्ये कालात्मिका संहननशक्तिः । अवस्तात् पन्थाः पन्थानः ॥

[21]वसूनां श्रविष्ठाः वसवो वासयितारः अतिशयेन श्रोत्रिष्ठाः श्रविष्ठाः । 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः । वसूनां वासयतां त्रयं भवति—परस्तात् भूतं जन्म । मध्ये कालात्मा अतिशयेन ख्यापयित्री शक्तिः । अवस्तात् भूतिः अभिवृद्धिः । एतत्त्रयोपपत्तौ लोके नृसंघातो[1] भवति । उत्क्रमनेन शृणोति विधेया भवति प्रजा ॥

[22]इन्द्रस्य शतभिषक् । इन्द्रः ईश्वरः नक्षत्रस्य वारुणत्वात् वर्षण-

1 नृसङ्ख्यातो इति पाठान्तरम्.

परस्ताद्विश्वाक्षितिरवस्तात् । [23]अजस्यैकपदः पूर्वे प्रोष्ठपदाः । वैश्वानरं परस्ताद्वैश्वावसवमवस्तात् । [24]अहेर्बुध्नियस्योत्तरे । अभिषिञ्चन्तः परस्तादभिषु-

समर्थः पर्जन्यात्मा गृह्यते । स शतधा बहुधा भूत्वा भिषज्यति चिकित्सते निरुपद्रवं करोति लोकमिति । तस्य तथा भिषज्यतस्त्रयं भवति— परस्ताद्विश्वव्यचाः विश्वं व्यचति विविधं गच्छतीति विश्वव्यचाः व्यापकः । "गतिकारकयोरपि" इत्यसुन् । पूर्वपदप्रकृतिस्वरत्वं च । मध्ये कालात्मा बहुप्रकारभैषज्यशक्तिः । अवस्ताद्विश्वक्षितिः विश्वाः क्षितयः क्षेत्राणि धान्यानां भवनानि यस्मिन् । एवमेतत्त्रयसंपत्तौ निरुपद्रवो लोको भवति ॥

[23]अजस्यैकपदः पूर्वे प्रोष्ठपदाः अज एकपात् अग्निविशेषः पदद्वयेनोच्यते । एकः पादोऽस्येति पादस्य लोपे 'पादः पत्' इति पद्भावः। प्रोष्ठा इव पादाः सोमार्हाः यथा—'प्रोष्ठपदेषूदयच्छन्त'* इति। एकेन पादेन यज्ञियेन हविषा यजतोऽग्नेः त्रयं भवति—परस्ताद्वैश्वानरं विश्वेभ्यो नरेभ्यो हितं रूपम् । मध्ये कालात्मिका यजमानोद्यमनशक्तयः। अवस्ताद्वैश्वावसवं विश्वेभ्यो देवेभ्यो हितं रूपम् । एतत्त्रयोपपत्तौ विश्वं लोकं धारयन्ति ॥

[24]अहेर्बुध्नियस्योत्तरे प्रोष्ठपदाः ॥ अहिर्मेघः तात्स्थ्यादुच्यते । बुध्ने मेघे भवो बुध्नियः । मेघानां पतिः कश्चिद्रुद्रः पदद्वयेनोच्यते । वृष्ट्या जगद्धारयतस्त्रयं भवति—परस्तादभिषिञ्चन्तः महीमभिवर्षन्तो मेघाः । मध्ये कालात्मिका वर्षोद्यमनशक्तयः । अवस्तादभिषुण्वन्तः

*ब्रा. १-५-१.

ण्वन्तोऽवस्तात् । [25]पूष्णो रेवती । गावः परस्ताद्वत्सा अवस्तात् । [26]अश्विनोरश्वयुजौ । ग्रामः परस्तात्सेनाऽवस्तात् । [27]यमस्यापभरणीः । अपकर्षन्तः परस्तादपवहन्तोऽवस्तात् । [28—29]पूर्णा पश्चा-

सस्यसमृद्धायाश्मान् [....समृद्धानस्मान्] कुर्वाणा यतमानाः । एतत्त्रयोपपत्तौ लोकत्रयं स्थितिं भजते ॥

[25]पूष्णो रेवती धनवतीः । 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । जगत् पोषयतः पूष्णस्त्रयं भवति—परस्तात् गावः । मध्ये कालात्मिका क्षीराद्याप्यायनी शक्तिः । अवस्ताद्वत्साः । एतत्त्रयोपपत्तौ जगत् पुष्टं भवति ॥

[26]अश्विनोरश्वयुजौ अश्विनौ भिषजौ । तयोर्भिषज्यतोस्त्रयं भवति परस्ताद्ग्रामः चिकित्सितव्याः प्रजा देवा मनुष्याश्च । मध्ये कालात्मिका शीघ्रव्यापिनी शक्तिः । अवस्तात् सेना घृतचरुपूर्णा दिव्यौषधसंहतिः* । एतत्त्रयोपपत्तौ विश्वं जगदरोगं भवति ॥

[27]यमस्यापभरणीः ॥ अपभरणं मारणम् । यमस्य मारयतः प्रजास्त्रयं भवति—परस्तादपकर्षन्तः शरीरात्प्राणानपकर्षन्तः । मध्ये कालात्मिका अपभरणी शक्तिः । अवस्तादपवहन्तः अवाच्छिद्य पितृलोकं प्रापयन्तः । एतत्त्रयसंपत्तौ परेताः प्रजा भवन्ति ॥

[28—29]'पूर्णा पश्चात्, यत्ते देवा अदधुः' इत्येतयोः 'कृत्तिका नक्ष-

* पूर्णादिपीठवसंपत्तिः इति पाठान्तरम्.

द्यत्तै देवा अदधुः ॥ ५ ॥

आर्द्रमवस्ताद्रोहमाना अवस्तादभ्यारूढमवस्तात्पन्थां अवस्ताद्भूयसा अवस्तात्पश्वं च ॥ १ ॥

[1]यत्पुण्यं नक्षत्त्रम्। तद्बट् कुर्वीतोपव्युषम्। यदा वै सूर्य उदेति। अथ नक्षत्त्रं नैति। यावति तत्र

त्रम्'* इत्यत्रैव विनियोगः। व्याख्याते चैते औपानुवाक्ये†। तयोरेतत् प्रतीकग्रहणम्। पूर्णा पश्चात्। पुरस्ताच्च पूर्णा। मध्यतश्च पूर्णा। तस्मात् पौर्णमासी पूर्णेन च चन्द्रमसा योगात् सेयं पौर्णमासी उज्जिगाय अन्याः स्थितीरुज्जयति, तस्यामधिसंवसन्तो देवा उत्तमे नाकस्थानीये अस्मिन् स्थाने मादयन्तां माद्यन्तु ॥

अथ द्वितीया—हे अमावास्ये! तुभ्यं देवाः यस्माद्भागधेयमादधुः संवसन्तः सहासीना महिम्ना माहात्म्येन, सा त्वं हे विश्ववारे! विश्वकाले नोऽस्माकं यज्ञं पिपृहि पालय, हे सुभगे नोऽस्मभ्यं सुवीरं शोभनपुत्रादिकं धनं धेहि इति ॥

इति पञ्चमे प्रथमोऽनुवाकः.



[1]यत्पुण्यं इत्यादि ॥ पुण्यकर्मणोऽनुरूपं आत्मनश्चानुकूलं यन्नक्षत्रं इष्टं तत् बट् कुर्वीत। बडिति सत्यनाम। तत् सत्यं चिह्नं कुर्वीत। तेन वा चिह्नमाकाशं कुर्वीत। अस्मिन् आकाशावकाशे इदं नक्षत्रमिति।

* सं. ४-४-१०. † सं. ३-५-१.

सूर्यो॒ गच्छे॑त् । यत्र॑ ज॒घन्यं॑ प॒श्येत् । ताव॑ति कु॒र्वी॒त यत्का॒री स्यात् । पु॒ण्या॒ह ए॒व कु॑रुते । [2]ए॒वꣳ ह॒ वै य॒ज्ञेषु॑ च श॒तद्यु॑म्नं च मा॒त्स्यो निरवसा॒यया-

उपव्युषं उषस्समीपे विवासनकाले । छान्दसो डः समासान्तः । पुनः कालं विशिनष्टि—यदा सूर्य उदेति अथ तत्पुण्यं नक्षत्रं नैति न तिरोहितं भवति तादृशे विवासनकाले तत्पुण्यं नक्षत्रं यत्राकाशावकाशे तिष्ठति तं प्रदेशं सत्यं कुर्वीत अविपर्यस्तं जानीयात् । अथैवं ज्ञात्वा तस्मात् चिह्नितात् प्रदेशात् जघन्यं पश्चाद्भागत्वेन यत्र पश्येत् तत्राकाशप्रदेशे यावति काले सूर्यो गच्छेत् तावति ततः प्रागेव कुर्वीत अविपर्यस्तः स्वं तत् कर्म यत्कारी यत्कर्मकरिष्यन् स्यात् । पुण्याह एव कुरुते । एवं क्रियमाणं सत्स्वपि दोषेषु पुण्याहे कृतं भवति, अज्ञातानामपि मुहूर्तादिदोषाणां शान्त्यै भवतीति भावः । अथ यत्र न चेत् कर्मयोग्यं नक्षत्रं तदहर्नातीव पुण्यमिति । केचिदाहुः—“अथ नक्षत्रं नैति” इत्यन्तं समानम् । यावति काले तत्र चिह्निते प्रदेशे सूर्यो गच्छेत् यावता कालेन तं प्रदेशं प्रविशेत् ततः प्रभृति कर्म कुर्यात् । आकुत इत्याह—यावति काले तत्पुण्यं नक्षत्रं जघन्यं अस्तं गतं पश्येत् अस्तं गच्छतां चरमं पश्येत् गणयेत् तावति ततः ततः प्रागेव कुर्यात् न ततः परमिति ॥

अनारभ्योक्तत्वेऽपि प्राकृतानां नियतकालत्वात् तद्व्यतिरिक्तार्थमिदम् ॥

[2]एवमित्यादि ॥ निरवसाययांचकार ईदृशे मुहूर्ते कर्म कारयित्वा अन्योन्यो[न्यं]निष्कृष्य श्रैष्ठ्ये स्थापयामास । अभ्यषिञ्चदित्येके ॥

श्चकार ॥ ६ ॥ [3]यो वै नक्षत्त्रियं प्रजापतिं वेद । उभयोरेनं लोकयोर्विदुः । हस्त एवास्य हस्तः । चित्रा शिरः । निष्ट्या हृदयम् । ऊरू विशाखे । प्रतिष्ठाऽनूराधाः । एष वै नक्षत्त्रियः प्रजापतिः । य एवं वेद । उभयोरेनं लोकयोर्विदुः ॥ ७॥ अस्मिꣳश्चामुष्मिꣳश्च । [4]यां कामयेत दुहितरं प्रिया स्यादिति । तां निष्ट्यायां दद्यात् । प्रियैव भवति । नेव तु पुन-

[3]यो वा इत्यादि ॥ नक्षत्रियं नक्षत्रसमूहात्मानम् । 'नक्षत्राद्घः' इति घः । एनमुभयोर्लोकयोः दिवि पृथिव्यां च विदुः जानन्ति । उभयोर्लोकयोरपि विख्यातो भवतीत्यर्थः । हस्त एवेत्यादि । व्यपदेशादिभिः तद्भाव उपचर्यते । चित्रा चायनीया उत्तमाङ्गम् । निष्ट्या स्वाती । "अधो निष्ट्या वितस्त्यां तु"* इति हृदयत्वम् । विविधशाखत्वात् ऊरूविशाखे । ऋद्धिहेतुत्वात् प्रतिष्ठा अनूराधाः ॥

[4]ईदृशत्वज्ञानस्य फलं वक्तुं पुनराम्नातं—यामित्यादि ॥ प्रिया पत्युः स्यादिति । तां स्वात्यां दद्यात् । प्रिया भवत्येव, निष्ट्याया हृदयत्वात् । अपि च निष्ट्यायास्तस्याङ्गविशेषत्वात् न पुनरियं पितृगृहं आगच्छति । यद्वा—न पुनरागच्छतीव । पत्युरतिवल्लभत्वात् क्षणमात्रमपि तत्पार्श्वं न जहाति । तुशब्दोपि व्यावृत्त्या निन्दास्तुतिमाचष्टे, न निषेधति ॥

[5]अभिजिदित्यादि ॥ गतम् ॥ अनपजय्यं पुनरन्येनापजेतुमशक्यं

*याज्ञिकी. ११.

रागच्छति । [5]अभिजिन्नाम नक्षत्रम् । उपरिष्टादषाढानाम् । अवस्ताच्छ्रोणायै । देवासुरास्संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् ॥ ८ ॥ यदभ्यजयन् । तदभिजितोऽभिजित्वम् । यं कामयेतानपजय्यं जयेदिति । तमेतस्मिन्नक्षत्रे यातयेत् । अनपजय्यमेव जयति । पापपराजितमिव तु । [6]प्रजापतिः पशूनसृजत । ते नक्षत्रं नक्षत्रमुपातिष्ठन्त । ते समावन्त एवाभवन् । ते रेवतीमुपातिष्ठन्त ॥ ९ ते रेवत्यां प्राभवन् । तस्माद्रेवत्यां पशूनां कुर्वीत ।

---

'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अनपजय्यं यथा तथा । एतस्मिन्निति । अषाढाश्रोणयोराद्यन्तयोः पादयोः । आद्यन्तयोरिति केचित् । यातयेत् जयोपायेषु प्रवर्तयेत् । यती प्रयत्ने । पापपराजितं पापेन पराजितं पापोपहतमिव निवारकाभावात् । यद्वा—यत्नेन [यत्नो न ?] जयति तस्य पापमेव तज्जयति न तस्य यत्नोपेक्षित इति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । पूर्ववन्निन्दास्तुतिरेव ॥

[6]प्रजापतिः पशूनित्यादि ॥ पशवस्सर्वं नक्षत्रं उपातिष्ठन्त उपासर्पन् । ते समावन्त एवाभवन् । समा अनुपचिता एवातिष्ठन्त न वृद्धिं गताः । समादावतुप् स्वार्थिकः । ते रेवत्युपस्थानेन प्रभूता अभवन् तस्माद्रेवत्यां पशूनां संबन्धि कर्म इष्टिपश्वादिकं प्राक् सोमात् कुर्वीत । प्रभवन्त्येव ॥

यत्किं चार्वाचीनꣳ सोमात् । प्रैव भवन्ति । [7]सलि-
लं वा इदमन्तरासीत् । यदतरन् । तत्तारकाणां
तारकत्वम् । [8]यो वा इह यजते । अमुꣳ सलोकं
नक्षते । तन्नक्षत्राणां नक्षत्रत्वम् ॥ १० ॥ देवगृहा
वै नक्षत्राणि । य एवं वेद । गृह्येव भवति । यानि
वा इमानि पृथिव्याश्चित्राणि । तानि नक्षत्राणि ।

[7]सलिलं वा इत्यादि ॥ इदं द्यावापृथिव्योरन्तरं सलिलं सलिलकल्पं अप्रतिष्ठत्वात् अव्यक्तावस्थां गतं आसीत् तत्र पृथिव्युद्धरणक्षोभे बुद्बुदकल्पा यस्मात् अतरन् उत्तीर्यान्तस्स्थिताः तत् आसां तारकत्वम् ॥

[8]यो वा इत्यादि ॥ इह इष्ट्वा अमुं च लोकं नक्षत्रपथात्मकं नक्षते गच्छति देवीभूय वर्तते । नक्ष गतौ । तस्मात् नक्षत्रत्वं तेन निहितत्वात् नक्षेरौणादिकः कर्मण्यत्रप्रत्ययः । यस्माद्दिवं गच्छतां नक्षत्रैस्सम्बन्धात् तेषां देवीभवतां गृहाः नक्षत्राणि नक्षत्रतुल्यानि चित्राकारत्वादेव पृथिव्याश्चित्रस्थानीयानि नक्षत्रस्थानीयानि दिविष्ठानां तथोपलब्धेश्च । तस्मादश्लीलनाम्नि विकृतस्वभावे प्रतिकूलनक्षत्रस्थानीये अत एव अश्लीलनाम्नि निन्दिते ग्रामादौ नावस्येत् न वसेत् । न च तत्र यजेत । इदं च पुण्याहप्रसङ्गेनोक्तं अपुण्याहस्थानीयत्वादस्य ग्रामादेः । तदेव वैकृतमश्लीवदश्लीलम् । मत्वर्थीयः सिध्मादिलक्षणो लच् । तादृशं नाम यस्य । तादृशनामग्रहणं प्रसिद्ध्युपसंग्रहार्थम् । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'न ङिसंबुद्ध्योः' इति लोपप्रतिषेधः । यथा पापा-

तस्मा॑दश्ली॒लना॑मꣳश्चि॒त्रे । नाव॒स्ये॑न्न य॑जेत । य॒था॑ पा॒पा॒हे कु॑रु॒ते । ता॒दृगे॒व तत् । [1]दे॒व॒न॒क्ष॒त्त्रा॒णि॒ वा अ॒न्यानि॑ ॥ ११ ॥ य॒म॒न॒क्ष॒त्त्रा॒ण्य॒न्यानि॑ । कृ॒त्ति॑काः प्र॒थ॒मम् । वि॒शा॑खे उ॒त्त॒मम् । तानि॑ देवन॒क्ष॒त्त्रा॒णि॑ । अ॒नू॒रा॒धाः प्र॑थ॒मम् । अ॒प॒भ॒र॑णीरु॒त्त॒मम् । तानि॑ यमन॒क्ष॒त्त्रा॒णि॑ । यानि॑ देवन॒क्ष॒त्त्रा॒णि॑ । ता॒नि॒ द॒क्षि॑णेन॒ परि॑यन्ति । यानि॑ यमन॒क्ष॒त्त्रा॒णि॑ ॥ १२॥

हे पापनक्षत्रे कर्मायोग्ये कर्म कुरुते तादृक् पापनक्षत्रकल्पे चित्रे ग्रामादौ लोकनिन्दिते यदवस्यति यच्च यजते ॥

[1]देवनक्षत्राण्यन्यानि एतेन पुण्याहपापाहकोटिद्वयात्मना नक्षत्राणि विभजाति । देवनक्षत्राणि देवलोकप्रत्यासन्नानि पुण्यान्यहानि । यमनक्षत्राणि पापाहानि । कानि पुनस्तानीत्याह—कृत्तिकाः प्रथममित्यादि । किंपुनर्लक्षणमित्याह यानीत्यादि। देवनक्षत्राणि देवलोकं दक्षिणेन परियन्ति यमनक्षत्राणि तु यमलोकमुत्तरेण परियन्ति । 'एनबन्यतरस्याम्' इत्येनप्प्रत्ययः। परियन्ति परिपाट्या क्रमेणावतिष्ठन्ते गत्यभावात् । नक्षत्राणां ज्योतिश्चक्रापेक्षया पर्ययणम् । कृत्तिकादीन्युत्तरेण तावति प्रदेशे अदूरेण देवलोकः, अभ्यन्तरत्वात् । अनूराधादीनि तु दक्षिणेन तावति प्रदेशे यमलोकः बाह्यत्वात् केचित् आहुः—देवनक्षत्राणीति देवानां संनिधिन्य इष्टका अभेदेन उच्यन्ते । तान्यग्नौ दक्षिणतः परिपाट्या उपधीयन्ते । यमनक्षत्राणि तूत्तरत उपधीयन्ते इतीष्टकाद्वारेण नक्षत्राणामेव लक्षणमुक्तमिति ॥

तान्युत्तरेण । [10]अन्वेषामराथ्स्मेति । तदनूराधाः । ज्येष्ठमेषामवधिष्मेति । तज्ज्येष्ठघ्नी । मूलमेषामवृक्षामेति । तन्मूलवर्हणी । यन्नासहन्त । तदषाढाः । यदश्लोणत् ॥ १३ ॥ तच्छ्रोणा । यदशृणोत् । तच्छ्रविष्ठाः । यच्छतमभिषज्यन् । तच्छतभिषक् ।

[10]इदानीं यमनक्षत्राणां पापाहत्वं दर्शयितुं अनूराधादीनि पदानि व्युत्पादयति—अन्वेषामित्यादि ॥ देवासुरास्संयत्ता आसन्नित्यत्र प्रकृतमधिकृत्योच्यते । तत्र देवनक्षत्रैरसुरानजयन् देवा हीनशक्तिकानकुर्वन्, यमनक्षत्रैस्तु दिनेदिने विविधान्निग्रहानकुर्वन् असुराणां तानीदानीं क्रमेण दर्शयति—एषां अनूराधानां अन्वरात्स्म वयं हेतावनोः कर्मप्रवचनीयत्वम् । व्यत्ययेन षष्ठी । एता अनु एतैः हेतुभिः वयं संसिद्धिं युद्धसामग्रीसंपत्तिं गताः तस्मात् अनूराधाः। अधिकरणे घञ् ''उपसर्गस्य घञ्यमनुष्ये' इति दीर्घत्वं थाथादिना उत्तरपदान्तोदात्तत्वम् । असुरानभिभूय यस्मादेषु देवैरित्थं कृतार्थता ख्यापिता तस्मादनूराधाः । एषां असुराणां ज्येष्ठं प्रधानं अवधिष्मेति यत्रामन्यन्त सा ज्येष्ठघ्नी । ज्येष्ठी ज्येष्ठा एकदेशो लुप्यते यथा—भीमसेनो भीम इति । 'अमनुष्यकर्तृके च' इति टक् । एषां असुराणां मूलमवृक्षाम उत्पाटितवन्तो वयं स्यामेति यस्याममंसत सा मूलवर्हणी । सहनमासु नास्तीति अषाढाः । 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यस्मादियमसुरशरीरेषु अश्लोणत्, श्लोणृ संघाते । प्लक्षाम्रजम्बूवृक्षाणां शोणितक्षयमकरोदिति यावत् । तस्मात् श्रोणा । कपिलकादित्वाल्लत्वविकल्पः । यस्मादियं देवेभ्यः अशृणोत् उक्तं शृणोति स्व-

प्रोष्ठपदेषूदयच्छन्त । रेवत्यामरवन्त । अश्वयुजोर-युञ्जत । अपभरणीष्वपावहन् । तानि वा एतानि यमनक्षत्राणि । यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते ॥ १४ ॥

चकारैवं वेदोभयोरेनं लोकयोर्विदुरजयन्रेवती-मुपातिष्ठन्त नक्षत्रत्वमन्यानि यानि यमनक्षत्राण्य-श्लोणद्यमनक्षत्राणि त्रीणि च ॥ २ ॥

विधेयभूताऽतिष्ठत् तस्मात् श्रविष्ठाः । 'तुश्छन्दसि' इतीष्ठन् । यस्माद्देवाः शतं बहूनात्मीयान् अभिषज्यन् क्षताद्यपनोदनाय अचिकित्सन्त तस्मात् शतभिषक् । यस्मादेषु देवाः पादौ चरणावात्मीयौ उदयच्छन्त प्रोत्थितावकुर्वन् युद्धभूमेरुत्थिता इति यावत्, तस्मात् प्रोष्ठपदा । पृषोदरादिः । यस्मादस्यां अरवन्त शब्दमकुर्वन् । व्यत्ययेन शप् । युद्धभूमेरुत्थाय यस्यां सिंहनादमकुर्वन् तस्माद्रेवती । पृषोदरादिः । यस्मादनयोः अयुञ्जत अश्वादिकं गमनाय युक्तं अकुर्वन् तस्मादश्वयुजौ । यस्मादसुरान् परागतामून्यसुरशरीराणि अपावहन् अपानुदन्त तस्मादपभरण्यः । अधिकरणे ल्युट् । यस्मादेवं तस्मात् तानि तादृग्विधानि एतानि अनूराधादीनि नक्षत्राणि अमङ्गल्यकर्माधारभूतत्वाद्देवानां, तस्माद्देतद्व्यतिरिक्तानि यानि देवनक्षत्राणि कृत्तिकादीनि तेष्वेव स्वानुकूलेषु कर्मानुरूपेषु च इष्टं कर्म कुर्यात् । एवं कृतं पुण्याहे एव कृतं भवति ॥

इति पञ्चमे द्वितीयोऽनुवाकः

[1]देवस्य सवितुः प्रातः प्रसवः प्राणः । वरुणस्य सायमासवोऽपानः । [2]यत्प्रतीचीनं प्रातस्तनात् । प्राचीनꣳ संगवात् । ततो देवा अग्निष्टोमं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः । मित्रस्य संगवः । तत्पुण्यं तेजस्व्यहः । तस्मात्तर्हि पशवस्समायन्ति ।

[1]देवस्य सवितुरित्यादि ॥ सवितुर्निजोदयेन सर्वस्य प्रेरयितुः देवस्य प्रसवः अनुज्ञैव स प्रातःकालः, तत्र सर्वाणि कर्माणि निजोदयेन देवोऽनुजानातीति कृत्वा, अत एव प्राणः प्राणस्थानीयः कर्मणाम् । अनेन कर्माणि प्राणन्तीव । वरुणस्य वारकस्य तमसा विश्वं छादयितुमारभमाणस्य आसवः अनुज्ञैव सायंकालः प्रदोषः । यद्वा—आच्छेद आसवः कर्मणामुपरमः । अत एव अपानः अपानस्थानीयः, अपानन्त्येव कर्माणि अनेनेति ॥

[2]एवमिमौ द्वौ कालौ आद्यन्तौ, अथ मध्यवर्तिन आह—यदित्यादि ॥ प्रातस्तनात् कालात् प्रतीचीनं संगवात् कालात् प्राचीनं दिवसस्याष्टमं द्वितीयम् । ततः कालात् सारमादाय अग्निष्टोमं निरमिमत देवाः । तत् तस्मात् तत् आत्तवीर्यं गृहीतसारं अत एव निर्मार्गः । ऋजीषः । निर्मृज्यते त्यज्यते इति निर्मार्गः । अयं संगवः तृतीयं अष्टमो भागो मित्रस्य । तत् अनात्तसारत्वात् पुण्यं तेजस्वि उज्ज्वलं अहः अह्नेरकदेशः । तस्मात् तर्हि तस्मिन् काले पशवस्समायन्ति दिगन्तेषु चरित्वा व्रजं समागच्छन्ति तस्मात्सङ्गवत्वमिति ॥

[3]यत्प्रतीचीनꣳ संगवात् ॥ १५ ॥ प्राचीनं मध्यन्दिनात् । ततो देवा उक्थ्यं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः । बृहस्पतेर्मध्यन्दिनः । तत्पुण्यं तेजस्व्यहः । तस्मात्तर्हि तेक्ष्णिष्ठं तपति । [4]यत्प्रतीचीनं मध्यन्दिनात् । प्राचीनमपराह्णात् । ततो देवाष्षोडशिनं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः ॥ १६ ॥ भगस्यापराह्णः । तत्पुण्यं तेजस्व्यहः । तस्मादपराह्णे कुमार्यो भगमिच्छमानाश्चरन्ति । [5]यत्प्रतीचीनमप-

[3]अथ सङ्गवमध्यन्दिनयोः मध्यमादष्टमांशाच्चतुर्थात उक्थ्यं निरमिमत ॥ तत्तदित्यादि । गतम् । अथ बृहस्पतेर्मध्यन्दिनः पञ्चमोऽष्टमांशः । तत्पुण्यमित्यादि । गतम् । तस्मात्तर्हि तदानीं तेक्ष्णिष्ठं तीक्ष्णतमं तपति तपनः । छान्दसमेत्वम् ॥

[4]अथ मध्यन्दिनापराह्णयोः मध्यमादष्टमांशात् षष्ठात् षोडशिनं निरमिमत ॥ तदित्यादि । गतम् । अथ भगस्य सप्तमोऽष्टमांशः अपराह्णः, तत्पुण्यं, तेजस्वि । तस्मात् तदानीं कुमार्यो भगं श्रियं सौभाग्यमिच्छन्त्यः चरन्ति मण्डनपरा वर्तन्ते ॥

[5]अथापराह्णसायंकालयोर्मध्यमादष्टमांशात् अतिरात्रं निरमिमत ॥ तदित्यादि । गतम् । अथ वरुणस्य सायं प्रदोषकालः । तत्पुण्यं तेजस्वि तस्मात् तदानीं नानृतं वदेत् वारुणत्वात्तस्य। ब्राह्मणं हि भवति—'अनृतवादिनो वरुणो हिनस्ति'* इति, "अनृते खलु वै क्रियमाणे वरुणो गृह्णाति" इति च । तूष्णीमेवासनं वरमिति ॥

राह्णात् । प्राचीनꣳ सायात् । ततो देवा अतिरात्रं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः । वरुणस्य सायम् । तत्पुण्यं तेजस्व्यहः । तस्मात्तर्हि नानृतं वदेत् ॥ १७ ॥ [6]ब्राह्मणो वा अष्टाविꣳशो नक्षत्राणाम् । समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । चत्वार्यश्लीलानि । तानि नव । [7]यच्च परस्तान्नक्षत्राणां यच्चावस्तात् । तान्येकादश । ब्राह्मणो द्वादशः । य एवं विद्वान्थ्संवथ्सरं व्रतं चरति । संवथ्सरेणैवास्य व्रतं गुप्तं भवति । समानस्याह्नः पञ्च पुण्यानि

---

[6]ब्राह्मणो वा इत्यादि ॥ अष्टाविंशमिदं नक्षत्रं ब्राह्मणो नाम । अष्टाविंशतेः पूरणोऽष्टाविंशः । नक्षत्राणीवायमपि पुण्याहवाचनमुहूर्तकारीति कृत्वा । अथ तत्र देवनक्षत्रैस्समानकार्यत्वं ब्राह्मणस्याह—समानस्य एकस्य अह्नः उक्तेन प्रकारेण पुण्यानि शोभनानि नक्षत्राणि नक्षत्रांशाः पञ्च प्रातःकालसङ्गवमाध्यन्दिनापराह्णसायंकालाः । अथ अश्लीलानि अशोभनानि चत्वारि अग्निष्टोमोक्थ्यषोडश्यतिरात्रोत्पत्त्या हृतसाराणि । तान्युभयानि संहृत्य नव भवन्ति ॥

[7]अथ यच्च परस्तान्नक्षत्राणां सायंकालात्पूर्वा सन्ध्या यच्चावस्तात् प्रातस्सन्ध्या ते द्वे भवतः । अथ ताभ्यां संहतानि एकादश भवन्ति । ब्राह्मणो द्वादशः । इदं नक्षत्रकार्यकारित्वं ब्राह्मणस्य । एवं ब्राह्मणेन सह द्वादशत्वान्वयात् संवत्सरं संवत्सरस्थानीयं ऐका-

नक्षत्राणि। चत्वार्यश्लीलानि । तानि नव । आग्नेयी रात्रिः। ऐन्द्रमहः। तान्येकादश। आदित्यो द्वादशः। य एवं विद्वान्थ्संवथ्सरं व्रतं चरति। संवथ्सरेणैवास्य व्रतं गुप्तं भवति ॥ १८ ॥

संगवाथ्षोडशिनं निरमिमत तत्तदात्तवीर्यं निर्मार्गो वदेद्भवति समानस्याह्नः पञ्च पुण्यानि नक्षत्राण्यष्टौ च ॥ ३ ॥

[1]ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं वहन्तीति । त्रयोदशेति ब्रूयात् । स यद्ब्रूयात् । क-

हि कं व्रतं कर्म विद्वान्यश्चरति अस्य एतत् व्रतं एकेनाह्ना क्रियमाणमपि संवत्सरेण गुप्तं भवति। केचिदाहुः—"शुक्रं परस्तात् ज्योतिरवस्तात्"* इति उक्ते तयोरपि तस्मिन्नक्षत्रे क्रियमाणस्य कर्मणः साद्गुण्यहेतुत्वात् संवत्सरसिद्धिरिति। समानस्येत्यादिना अन्यथा द्वादशत्वं प्रतिपादयति । आग्नेय्या रात्र्या ऐन्द्रेण चाह्ना आदित्येन सह तानि द्वादशेति । गतमन्यत् ॥

इति पञ्चमे तृतीयोऽनुवाकः.

[1]अथाध्वरब्राह्मणशेषः सोमार्षेयम् ॥ ब्रह्मवादिनो वदन्ति कति पात्रणीत्यादिरनुवाकः सोमार्षेयम् । कतीति संख्याप्रश्नः। कति पात्राणि यज्ञोपकरणानि यज्ञं वहन्ति निर्वर्तयन्ति । स इति

*ब्रा. १-५-१.

स्तानि निरंमिमीतेति । प्रजापंतिरिति ब्रूयात् । स यद्ब्रूयात् । कुतस्तानि निरंमिमीतेति । आत्मन इति । [2]प्राणापानाभ्यामेवोपाꣳश्वन्तर्यामौ निरंमिमीत ॥ ११ ॥ व्यानादुपाꣳशुसवनम् । वाच ऐन्द्रवायवम् । दक्षक्रतुभ्यां मैत्रावरुणम् । श्रोत्रांदाश्विनम् । चक्षुषश्शुक्रामन्थिनौ । आत्मनं आग्रयणम् । अङ्गेभ्य उक्थ्यम् । आयुंषो ध्रुवम् । प्रतिष्ठाया ऋतुपात्रे । [3]यज्ञं वाव तं प्रजापंतिर्निरंमिमीत । स निर्मितो नाध्रियत समम्लीयत । स ए-

स पर्यनुयोक्ता यदि ब्रूयात् यदि पुनरपि पृच्छेत् इति । क इति कर्तृप्रश्नः । आत्मन इति । स्वस्मादित्यर्थः ॥

[2]अथैकैकश्येन व्याचष्टे—प्राणापानाभ्यामिति ॥ प्राणादिभ्य उत्पन्नत्वात् गृहीतत्वात्तेभ्य एव साद्यन्ते 'एष ते योनिः प्राणाय त्वा'* इत्यादिना । दक्षक्रतू उत्साहसंकल्पौ । आत्मा देहः । प्रतिष्ठा पादौ ॥

[3]यज्ञं वावेत्यादि ॥ यज्ञापेक्षमेकवचनं पुल्लिङ्गता च । तान्येतानि खलु पात्राणि प्रजापतिः पूर्वं यज्ञं निर्मितवान् । स तथा निर्मितो यज्ञो नाध्रियत नावातिष्ठत, अपि तु समम्लीयत व्यशीर्यत । म्ली विशरणे । स इत्यादि विशीर्णं यज्ञं पश्यन् स प्रजापतिरेतान् अपिवापान् प्रतिनिग्राह्यादीन् अप-

*सं. १-४-२,

तान्प्रजापतिरपिवापानपश्यत् । तान्निरवपत् । तै-
र्वै स यज्ञमप्यवपत् । यदपिवापा भवन्ति । यज्ञ-
स्य धृत्या असंल्लयाय ॥ २० ॥

उपाꣳश्वन्तर्यामौ निरमिमीतामिमीत षट् च ॥

[1]ऋतमेव परमेष्ठि । ऋतं नात्येति किं चन ।
ऋते समुद्र आहितः । ऋते भूमिरियꣳ श्रिता ।
[2]अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा ।

श्यत् निरवपत् । विशीर्णस्य यज्ञस्य अपिवपनं पुनरुत्पादनं येषु ते अपिवापाः । करणे घञ्, थाथादिना उत्तरपदान्तोदात्तत्वम् । स तैर्यज्ञमप्यवपत् पुनरुदपादयत् । यदित्यादि गतम् । असंल्लयः अविशरणम् ॥

इति पञ्चमे चतुर्थोऽनुवाकः.

---o---

[1]ऋतमित्यादि* ॥ गायत्र्यः । ऋतं यज्ञः तत् एव परमेष्ठि परमे महिम्नि तिष्ठति । यद्वा—तदेव प्रजापतिः । ऋतं नात्येति नातिक्रामति किंचन किंचिदपि ऋतं एव सर्वं भूतम् । समुद्रोपि ऋते आहितः अवस्थितः । इयं च भूमिः ऋते स्थिता सर्वोत्पादकत्वाद्यज्ञस्य ॥

[2]अग्निरिति ॥ अयं अग्निः तिग्मेन निशितेन शोचिषा तेजसा इत्थंभूतः । अञ्जनादिमान् आयसे निशितः क्षुर उच्यते ।

*"चातुर्मास्यशेषा वपनमन्त्राः । वैश्वदेवं काण्डम् । तत्रादौ वैश्वदेवपर्वणोऽनुष्ठानान्ते यद्वपनं तत्र विनियुक्ता मन्त्राः" इत्यवतारणमावश्यकम् ॥

शिर॒स्तप॒स्याहि॑तम् । [3]वै॒श्वा॒न॒रस्य॒ तेज॑सा । ऋ॒ते- ना॑स्य॒ निर्व॑र्तये । स॒त्येन॒ परि॑वर्तये ॥ २१ ॥ [4]त- प॑सा॒ऽस्या॒नु॑वर्तये । शि॒वेना॒स्योप॑वर्तये । श॒ग्मेना- स्या॒भिर्व॑र्तये । [5]तद्दृ॒तं तथ्स॒त्यम् । तद्व्र॒तं तच्छ॑केय-

किञ्च—तपः तप्ताङ्गोऽयःक्षुरः उष्णिहा त्रिपदया त्रेण्या शल- ल्या आक्रान्तं अधिष्ठितः । किञ्च—अस्मिन् तपसि क्षुरे अस्य तानस्य शिर आहितं तदधीनत्वात् शिरस्संस्कारस्य ॥

[3]वैश्वानरस्येति ॥ वैश्वानरस्य विश्वेषां नराणां सम्बधिनोऽग्नेः तेजसा तेजःपरिणामेन त्रेण्या ऋतेन सत्येन सेचनादिना अस्य केशान् निवर्तये आवप्तव्येभ्यः पृथक्करोमि । सत्येन स्वकार्या- व्यभिचारिणा अनेन क्षुरेण केशान् परिवर्तये परिवापयामि । परिवापणं मद्राकरणम् । यथा 'मद्रात् परिवापणे' इति ॥

[4]अस्य क्षुरस्य तपसा तापकार्येण नैशित्येन अनुवर्तये अ- नुधावामि अनुरूपं वपामि अस्य क्षुरस्य शिवेन सुखहेतुना रूपेण उपवर्तये उप्तानुप्तसमीकरणाय उप्तसमीपे वर्तयामि । अस्य क्षु- रस्य शग्मेन शक्तिविशेषेण अभिवर्तये उपरि वर्तये । अभिरूप- त्वाय वा श्लक्ष्णीकरोमि उप्तकेशं प्रदेशम् ॥

[5]निवर्त्यमाने यजमानो जपति—तद्दृतमित्यादि ॥ यजुः । यदेतत् क्रियते निवर्तनं तत् एतत् ऋतं यज्ञः । तत् एतत् सत्यं अमोघम् । तत् एतत् व्रतं नातः परं व्रतमस्ति । तादृशं तत् कर्म शकेयं निर्वोढुं समर्थो भूयासम् । तेन अनेन शकेयं

यम् । तेन॑ शकेयं॒ तेन॑ राध्यासम् । [6]यद्घर्मः पर्य॑व॑र्तयत् । अन्तान्पृ॑थि॒व्या दि॒वः । अ॒ग्निरीशा॑न॒ ओज॑सा । वरु॑णो धी॒तिभि॑स्स॒ह ॥ २२ ॥ इन्द्रो॑ म॒रुद्भि॒स्सखि॑भिस्स॒ह । अ॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॑ । तप॒ आक्रा॑न्तमु॒ष्णिहा॑ । शिर॒स्तप॒स्याहि॑तम् । वै॒श्वा॒न॒रस्य॒ तेज॑सा । ऋ॒तेना॑स्य॒ निव॑र्तये । स॒त्येन॒ परि॑वर्तये । तप॑सा॒ऽस्यानु॑वर्तये । शि॒वेना॒स्योप॑वर्तये । श॒ग्मेना॑स्य॒भिव॑र्तये ॥ २३ ॥ तदृ॒तं तथ्स॒त्यम् । तद्व्र॒तं तच्छ॑केयम् । तेन॑ शकेयं॒ तेन॑ राध्यासम् ।

---

अभिमतं फलं साधयितुं समर्थो भूयासं तेन चानेन राध्यासं बुद्धिमान् भूयासम् । शकेराशिषि लिङि 'लिङ्याशिष्यङ्' ॥

[6]वरुणप्रघासेषु पूर्ववत् निवर्तनं, सर्वं वापयेत्, मन्त्रादिर्विक्रियते—

यद्घर्म इति ॥ त्रिष्टुप् "चतुर्भिरष्टाक्षरैर्द्वादशाक्षरेण चैकेन त्रिष्टुप्" इति । पङ्क्तिर्वा । घर्मः आदित्यः यत् यस्मात् पर्यवर्तयत् रश्मिभिर्निर्जलानकरोत् मुण्डीकृतवानिव । पृथिव्या अन्तान् अवयवान् दिवश्चान्तान् पर्यवर्तयदित्येव । अग्निरीशानः समर्थः ओजसा तयोरन्तान् पर्यवर्तयत् । वरुणश्च धीतिभिः उदकव्यापारैः सह तयोरन्तान् पर्यवर्तयत् । इन्द्रश्च मरुद्भिः सखिभिः समानख्यानैः सह तयोरन्तान् पर्यवर्तयत् यस्मादेवं तेऽप्यकुर्वन् तस्मादहमपि अग्निस्तिग्मेनेति । समानं पूर्वेण ॥

[7]यो अस्याः पृथिव्यास्त्वचि । निवर्तयत्योषधीः । अग्निरीशान ओजसा । वरुणो धीतिभिस्सह । इन्द्रो मरुद्भिस्सखिभिस्सह । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा ॥ २४ ॥ शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसाऽस्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये । तदृतं तथ्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् ॥ २५ ॥ [8]एकं मासमुदसृजत् । परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहत् । अमृतं

[7]अथ साकमेधेषु पूर्ववन्निवर्तनादीनि । मन्त्रादिस्तु विक्रियते यो अस्या इति । पङ्क्तिः ॥ यो अस्याः पृथिव्याः त्वचि उपरि प्ररूढामोषधिं (डा ओषधीः) निवर्तयति दाहेन परिवापयति वा । अग्निरीशान इत्यादि ॥ समानम् ॥

[8]अथ शुनासीरीये निवर्तनादि पूर्ववत् । मन्त्रादिविकारस्तु— एकं मासमिति । तिस्रोऽनुष्टुभः ॥ अष्टपदाष्टिर्वा द्वितीया । एकं मासं कालांशं परमेष्ठी प्रजाभ्यः उदसृजत् उत्सृष्टमकरोत् पुत्रादिसाधारणत्वात् । यमुदसृजत् तेन कालेन आभ्यः मर्त्याभ्यो मरणशीलाभ्यः महो महत् महनीयं वा अमृतं अमृतत्वं आवहत् । किं पुनस्तदित्याह—प्रजामनु प्रजया सह प्रजायसे । तृतीयार्थेऽनोः कर्मप्रवचनीयत्वम् । हे मर्त्य! यजमान! मरणधर्मन्!

मर्त्येभ्यः । प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम् । येन मासा अर्धमासाः । ऋतवः परिवत्सराः । येन ते ते प्रजापते । ईजानस्य न्यवर्तयन् ॥ ॥ २६ ॥ तेनाहमस्य ब्रह्मणा । निवर्तयामि जीवसे । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसाऽस्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् ॥ २७ ॥

परिवर्तये सहाभिवर्तय उष्णिहा राध्यासं न्यवर्तयन्ननुपवर्तये चत्वारि च ॥ ५ ॥

ते तव तदु तदेव अमृतं अमृतत्वम् । न हि म्रियसे पुत्रपौत्रनप्त्रादिभावेन त्वमेवावतिष्ठसे । तस्मात्तं कालमेव प्रजाभ्य उदसृजत् उत्सृज्य चामृतत्वमावहद्येन परमेष्ठी । अथ हे प्रजापते! तासां प्रजानां तादृशामृतत्वभाजां पते! ते च मासादयो येन ते तव ईजानस्य इष्टवतो न्यवर्तयन् तेन तादृशेन प्रशस्तेन ब्रह्मणा मन्त्रेण कर्मणा वा अस्य यजमानस्य निवर्तयामि जीवसे जीवयितुं यथोक्तामृतत्वलक्षणं प्राजात्यमप्यायुरस्य यथा स्यादिति आयुष्यमिदं कर्म करोमि—अग्निस्तिग्मेनेति । समानं परम् ॥

इति पञ्चमे पञ्चमोऽनुवाकः.

[1]देवा वै यद्यज्ञेऽकुर्वत । तदसुरा अकुर्वत । तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन् । ते केशानग्रेऽवपन्त । अथ श्मश्रूणि । अथोपपक्षौ । ततस्तेऽवाञ्च आयन् । पराऽभवन् । यस्यैवं वपन्ति । अवाङेति । ॥ २८ ॥ अथो परैव भवति । [2]अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन् । त उपपक्षावग्रेऽवपन्त । अथ श्मश्रूणि । अथ केशान् । ततस्तेऽभवन् । सुवर्गं लोकमायन् । यस्यैवं वपन्ति । भवत्यात्मना । अथो सुवर्गं लोकमेति ॥ २९ ॥ [3]अथैतन्मनुर्वप्त्रे मिथुनमपश्यत् । स श्मश्रूण्यग्रेऽवपत । अथोपपक्षौ ।

---

[1]देवा वै यद्यज्ञ इत्यादि ॥ अयमनुवाको राजसूयब्राह्मणम् । वैश्वदेवं काण्डम् । यज्ञे यज्ञविषये यद्देवा अकुर्वत असुरा अपि तदकुर्वत अथ असुराः पृष्ठभागात् ऊर्ध्वं यद्वपनं पृष्ठमुपक्रम्य उपपक्षश्मश्रुकेशक्रमेण यदूर्ध्वं वपनं तत् नापश्यन् । पृष्ठग्रहणेन तत्सहचरितौ उपपक्षौ लक्ष्येते । कथं तर्हि तेऽवपन्तेत्याह—ते केशानित्यादि । केशश्मश्रूपपक्षक्रमेणावाचीनं वपनमकुर्वन् । ततस्ते अवाञ्चः पतित्वा पराभूता अभवन् । यस्येत्यादि । गतम् ॥

[2]अथ देवा इत्यादि ॥ उपपक्षश्मश्रुकेशक्रमेण ऊर्ध्वमवपन्त ततस्ते संपन्नास्स्वर्गं गताः । यस्येत्यादि । गतम् ॥

[3]अथैतदित्यादि ॥ वप्त्रे वपनार्थं एतन्मिथुनं एतत्प्रकृतमुपायं ऊर्ध्वमवाचीनं च वपनं अपश्यत् मनुः । तत्कथमित्याह—सः

अथ केशान् । ततो वै स प्राजायत प्रजया पशुभिः । यस्यैवं वपन्ति । प्र प्रजया पशुभिर्मिथुनैर्जायते । [4]देवासुरास्संयत्ता आसन् । ते संवथ्सरे व्यायच्छन्त । तान्देवाश्चातुर्मास्यैरेवाभि प्रायुञ्जत ॥ ॥ ३० ॥ वैश्वदेवेन चतुरो मासोऽवृञ्जतेन्द्रराजानः । ताञ्छीर्षन्नि चावर्तयन्त परि च । वरुणप्रघासैश्चतुरो मासोऽवृञ्जत वरुणराजानः । ताञ्छीर्षन्नि चावर्तयन्त परि च । साकमेधैश्चतुरो मासोऽवृञ्जत सोमराजानः । ताञ्छीर्षन्नि चावर्तयन्त परि च । [5]या संव-

श्मश्रूणीत्यादि । गतम् । मिथुनसंपत्त्या प्रजया पशुभिश्च मनुः प्राजायत । गतमन्यत् ॥

[4]देवासुरा इत्यादि ॥ संवत्सरे संवत्सरनिमित्तं अस्माकं संवत्सर इति देवाः अस्माकमेवेत्यसुराः एवं संवत्सरोपजीविफलार्थं व्यायच्छन्त व्यायामं कृतवन्तः । अथ ते देवाः तान् तथा कुर्वतोऽसुरान् अभिलक्ष्य प्रायुञ्जत कांश्चित्प्रयोगान् संवत्सरात्मसात्करणोपायानकुर्वन् चातुर्मास्यैः साधनभूतैः । तत्कथमित्याह—वैश्वदेवेनेत्यादि । अवृञ्जत आहरन् आत्मसात्कृतवन्तः इन्द्रराजानः इन्द्रो राजा येषामिति बहुव्रीहौ टजभावः । तान् चतुरो मासान् शीर्षन् शिरसि न्यवर्तयन्त पर्यवर्तयन्त च क्षुरेण । वरुणप्रघासैरित्यादि । गतम् ॥

[5]या संवत्सर इत्यादि ॥ एवं संवत्सरे या उपजीवा यदुपजीव्यम-

थ्सर उपजीवाऽऽसीत्। तामेषामवृञ्जत । ततो देवा अभवन् । पराऽसुराः ॥ ३१ ॥ य एवं विद्वाꣳश्चातुर्मास्यैर्यजते । भ्रातृव्यस्यैव मासो वृक्त्वा । शीर्षन्नि च वर्तयते परि च । यैषा संवथ्सर उपजीवा। वृङ्क्ते तां भ्रातृव्यस्य। क्षुधाऽस्य भ्रातृव्यः परा भवति । [6]लोहितायसेन निवर्तयते । यद्वा इमामग्निर् ऋतावागते निवर्तयति । एतदेवैनाꣳ रूपं कृत्वा निवर्तयति। सा ततश्श्वश्श्वो भूयसी भवन्त्येति। ॥ ३२ ॥ प्रजायते । य एवं विद्वाँल्लोहितायसेन निवर्तयते । एतदेव रूपं कृत्वा निवर्तयते । स त-

---

न्नादि तत् एषां,असुराणां अवृञ्जत आहरन् । 'गुरोश्च हलः' इत्यकारप्रत्ययः । ततो देवा इत्यादि । गतम् ॥

[6]लोहितायसेनेत्यादि ॥ ताम्रमयेन क्षुरेण मुण्डयते । 'अनोश्मायः' इति टच् समासान्तः । यत् यदा ऋतौ वसन्तादौ आगते इमां पृथिवीं अग्निः निवर्तयाति दहति शुष्कसलिलसलिलाशयां शातितपलाशपादपां पक्वलूनधान्यां मुण्डितामिव करोति तदानीं अयमग्निः एतदेव लोहितं रूपं कृत्वा एनां पृथिवीं निवर्तयाति । सा च पृथिवी ततः परं श्वश्वो भूयसी उत्तरोत्तरदिनेषु बहुतरा भवन्ती आपूर्यमाणसलिलाशया विरोहत्पलाशपादपा उप्यमानधान्या भवन्ती एति अविच्छेदेन वर्तते प्रजायते। य एवं विद्वानित्यादि। गतम्। एतदेव आग्नेयं लोहितं रूपं कृत्वा निवर्तयते । गतमन्यत् ॥

तुश्श्वश्श्वो भूयान्भवन्नेति । प्रैव जायते । [7]त्रेण्या शलल्या निर्वर्तयेत । त्रीणित्रीणि वै देवानामृद्धानि । त्रीणि छन्दाꣳसि । त्रीणि सवनानि । त्रय इमे लोकाः ॥ ३३ ॥ ऋद्ध्यामेव तद्वीर्ये एषु लोकेषु प्रति तिष्ठति । [8]यच्चातुर्मास्ययाज्यात्मनो नावद्येत् । देवेभ्य आवृश्च्येत । चतुषु चतुषु मासेषु निवर्तयेत । परोक्षमेव तद्देवेभ्य आत्मनोऽवद्यत्यनाव्रस्काय । [9]देवानां वा एष आनीतः । यश्चातुर्मास्ययाजी । य एवं विद्वान्नि च वर्तयते परि

[7]त्रेण्येति ॥ तिस्र एन्यः श्वेता राजयो यस्य सा त्रेणी । पृषोदरादिः । शलल्या शल्यकस्य सूचिलोम्ना । त्रीणित्रीणीत्यादि । त्रिसंख्याविशिष्टानि देवानां ऋद्धिरूपाणि यथा छन्दांसि सवनानि लोकाश्च । तस्मादृद्धिरूपे वीर्ये एषु लोकेषु च प्रतिष्ठितो भवति त्रेण्या निवर्तयमानः ॥

[8]यदित्यादि ॥ यत् यदि चातुर्मास्ययाजी देवेभ्यः अवदानार्थं आत्मानं नावद्येत् नावखण्डयेत् देवेभ्य आवृश्च्येत हीयेत । तस्माच्चतुर्षुचतुर्षु मासेषु निवर्तनं कुर्वन् परोक्षमेव निवर्तनव्याजेन देवेभ्यः आत्मानं अवद्यति । तच्च देवेभ्यः आत्मनोऽनाव्रस्काय अनावृश्चनाय भवति । वृश्चेर्घञ्, कत्वे श्चुत्वं निवर्तते ॥

[9]देवानां वा इत्यादि ॥ चातुर्मास्ययाजिनां देवानां स्वभूतः आनीतः । तस्मात् एवं विद्वान्यो निवर्तयते परिवर्तयते च स देवता

च । देवता एवाप्येति । नास्य रुद्रः प्रजां पशूनभि मन्यते ॥ ३४ ॥

एत्येत्ययुञ्जतासुरा एति लोका मन्यते ॥ ६ ॥

[1]आयुषः प्राणꣳ संतनु । [2]प्राणादपानꣳ संतनु। [3]अपानाद्व्यानꣳ संतनु । [4]व्यानाच्चक्षुस्संतनु । [5]चक्षुषश्श्रोत्रꣳ संतनु । [6]श्रोत्रान्मनस्संतनु । [7]मनसो वाचꣳ संतनु । [8]वाच आत्मानꣳ संतनु । [9]आत्म-

एवाप्येति अनुप्रविशति । न च अस्य पश्वादिकं रुद्रोऽभिमन्यते न क्रोधेन पश्यति ॥

इति पञ्चमे षष्ठोऽनुवाकः ॥



[1-12]अतः परं [*]द्वावनुवाकावग्निकाण्डमग्न्याचार्येयम्। तत्र प्रथमायां चितौ द्वादशसंतनीरुपदधाति आयुषः प्राणं इत्याद्याः ॥ आयुषो वयसोऽवस्थितत्वाद्धेतोः प्राणं संतनु, संततमविच्छिन्नं कुरु। सति ह्यायुषि प्राणास्सन्तन्यन्ते तस्मादायुरेव तावत्संतनु ततः प्राणादिकमिति गम्यते । स त्यपि प्राणे निश्शेषनिष्क्रमणभयादपानाविच्छेदः प्रार्थ्यते । तदुभयसद्भावे रसव्यापनाय व्यानप्रार्थना, अन्यथा शरीरधारणासिद्धेः । ध्रियमाणेऽपि शरीरे चक्षुः प्रधानं करणमिति प्रार्थ्यते रूपग्रहणार्थम् । नामग्रहणार्थं श्रोत्रप्रार्थना । एतेष्ववस्थितेष्वपि वाङ्मनसाधीना व्यवहारास्थिति[1]रिति प्रार्थ्यते । सर्वेषामेषामवस्थितौ आत्मा तन्त्रं इत्यत्र

[1] व्यवहारादि.

नः पृथिवी संतनु । [10]पृथिव्या अन्तरिक्षं संतनु । [11]अन्तरिक्षाद्दिवं संतनु । [12]दिवस्सुवस्संतनु ॥

अन्तरिक्षं संतनु द्वे च ॥ ७ ॥

[1]इन्द्रो दधीचो अस्थभिः । वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव । [2]इच्छन्नश्वस्य यच्छिरः । पर्व-

तस्य सन्तानप्रार्थना । तस्य सन्ततस्य उपकारकत्वात् पृथिव्यादिसन्तानं प्रार्थयते । एतेषां सर्वेषां उपकाराय सुवः आदित्यः प्रवर्तत इति तत्संतानमिति प्रार्थयते । देवानामपि संसारित्वात् । एवं अयं जीवादिरादित्यपर्यन्तः संसारप्रवाहोऽविच्छेदेन प्रवर्ततामिति प्रार्थयते ॥

इति पञ्चमे सप्तमोऽनुवाकः.



[1]अथर्वशिरो दशाविषक्ताः[2] शिरस्युपदधाति—इन्द्रो दधीच इत्याद्याः ॥ सर्वा गायत्र्यः । दध्यङ्ङामार्षिराथर्वणः । तस्य अस्थभिः "अस्थिदधिसक्थ्यक्ष्णां" "छन्दस्यपि दृश्यते" इत्यनङ् । तन्निर्मितेन वज्रेण वृत्राणि वारकाणि शत्रुबलानि इन्द्रो जघान हतवान् अप्रतिष्कुतः केनचिदप्यनभियुक्तः । स्कुञ् आप्रवणे । केनचिदप्यनभिभूतः । यद्वा—अप्रतिष्कुतः अप्रतिरथः । प्रतिकूलमाचरन्तो यं कुत इति वदन्तोऽभिभवन्ति स प्रतिष्कुतः । पृषोदरादिः । तादृशानि कियन्ति वृत्राणि—नवतीर्नव दशाधिकान्यष्टौ च शतानि बहुतमानीत्यर्थः । स एवमिमामुपदधात्विति शेषः ॥

[1] प्रवहत्विति.. [2] दशातिषक्ताः

तेष्वपश्रितम् । तदिच्छन्त्यर्यणावति । [3]अत्रा ह गोरमन्वत । नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे । [4]इन्द्रमिद्गाथिनो बृहत् ॥३६॥ इन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत । [5]इन्द्र इद्धर्योस्सचा । संमिश्ल

[2]इच्छन्निति ॥ अश्वस्य व्यापकस्य यज्ञस्य यच्छिरः शिरस्थानीयोऽग्निः पर्वतेषु गिरिषु मेत्रेषु वा अपश्रितं तिरोभूय स्थितं तादिच्छन् अन्विच्छन् इन्द्रः विदत् अलब्ध । लुङ् 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमः । शर्यणावति एतन्नाम्नि पर्वते लब्धवान् उपलब्धवान् समूहवदभित्यकावदिति केचित् । अस्मिन् कर्मणीत्येके ॥

[3]अत्रेति ॥ त्वष्टुः आदित्यमण्डलस्य गोः अग्नेः सुषुम्ना*ख्यस्य यत् नाम नमनं जगद्रक्षणे प्रह्वीभावः अपीच्यं पुनरञ्चितं अविच्छेदेन प्रवृत्तं अत्र कर्मणि अमन्वत ज्ञातवन्तः जानन्ति वा अनेन कर्मणा हेतुना स तथा प्रवर्तते । चन्द्रमसोपि गृहे मण्डले इत्था इत्थमेव गोर्नाम मन्वते अनेन हेतुनेति । 'थाहेतौ च'† इति थाप्रत्ययः ॥

[4]इन्द्रमिदिति ॥ 'इन्द्रं वः'§ इत्यत्र व्याख्यातेयम् । गाथिनः उद्गातारः इन्द्रमेव बृहत् महत् स्तुवन्ति । अर्किणो होतारश्च अर्केभिः अर्कैः स्तोत्रैः इन्द्रमेव स्तुवन्ति । अध्वर्यूणां च वाण्यः इन्द्रमेव अनूषत नुवन्ति स्तुवन्ति ॥

[5]इन्द्र एव हर्योः अश्वयोः मुख्ययोः सचा समचेत ताभ्यां

*सुमना. †इदं च सूत्रं काशिकायां कौमुद्यां च किंशब्दात् थाप्रत्ययविधायकतयैव व्याख्यातम्. §सं. १-६-१२.

आवचो युजा । इन्द्रो वज्री हिरण्ययः । [6]इन्द्रो दीर्घाय चक्षसे । आ सूर्यꣳ रोहयद्दिवि । वि गोभिरद्रिमैरयत् । [7]इन्द्र वाजेषु नो अव । सहस्रप्रधनेषु

नित्ययुक्तः । सचतेः क्विप्, प्रथमैकवचनस्य 'सुपां सुलुक्' इत्याकारः । किञ्च—संमिश्लः सममिश्रः ताभ्यां युक्तः इन्द्रः आवचः यावद्वचांसि विद्यन्ते तावन्नित्यमिति युजा युक्तः केन कैः स्तुतिवचोभिः । क्विबन्तात्पूर्ववत्सोराकारः । यद्वा—वचोभिः स्तुतिलक्षणैः युज्यत इति वचोयुक् । आकारः समुच्चये—इन्द्र एव हरिभ्यां युज्यते संमिश्रश्च ताभ्यां वचोयुक्तः स्तुतिवाग्भिश्च युक्तो भवतीति । इन्द्र एव वज्री हिरण्ययः हिरणमयाभरणः । हरणशीलोदकहेतुर्वा ॥

[6]इन्द्रो दीर्घायेति ॥ दीर्घाय दीर्घकालभाविने चक्षसे दर्शनाय पश्येदेनं सर्वलोक इति सूर्यं दिवि इन्द्र एव आरोहयत् । उपर्यारोपितवान् यः सूर्यो गोभिः रश्मिभिः अद्रिं मेघं व्यैरयत् वृष्ट्यर्थं भिनत्ति । यद्वा—इन्द्रः गोभिः वज्रैरद्रिं पर्वतं व्यैरयत् भित्वा न्यपातयत् ॥

[7]इन्द्रेति ॥ हे इन्द्र! नः अस्मान् वाजेषु अन्नेषु निमित्तभूतेषु अव रक्ष यथा वाजान् लप्स्यामहे अन्नदानेन अस्मान् तर्पय सहस्रप्रधनेषु च अपि सहस्रलं धनेषु वाजेषु सहस्रं प्रकृष्टानि धनानि येषु तादृशेषु । यद्वा—सहस्रप्रधानेषु, छान्दसं ह्रस्वत्वम् । उग्रः उद्गूर्णः तं उग्राभिरूतिभिः उद्गूर्णाभिः रक्षाभिः तर्पणेन वा । यद्वा—वाजेषु ग्रामेषु सहस्रप्रधनेषु सहस्रं प्रधनाः प्रकृष्टधनाः पुरुषा

च ॥ ३७ ॥ उग्र उग्राभिरूतिभिः । [8]तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् । [9]इन्द्रस्स दामने कृतः । ओजिष्ठस्स बले हितः । द्युम्नी श्लोकी स सौम्यः । [10]गिरा वज्रो न सम्भृतः । सबलो अनपच्युतः । ववक्षुरुग्रो अस्तृतः ॥

बृहच्चास्तृतः ॥ ८ ॥

---

येषु तेषु । यद्वा—सहस्रं प्रकृष्टधना रथगजतुरगपदातयो येषु तेष्वस्मानव । उग्रः उद्गूर्णस्त्वं उग्राभिरूतिभिः गतिभिः वेगगमनैः ॥

[8]तमिति ॥ तादृशं इन्द्रं वाजयामसि वाजयामः गमयामः । 'इदन्तोमसि'। किमर्थं महे वृत्राय । कर्मणस्संप्रदानत्वाच्चतुर्थी । महावृत्रं हन्तवे हन्तुम् । 'तुमर्थे सेसेन्' इति तवेन् प्रत्ययः । स इन्द्रो वृषा स्वयमेव वर्षणशीलः अस्माकं वृषभः कामानां पूरयिता भुवत् भवतु । लेटि अडागमः 'भूसुवोस्तिङि' इति गुणाभावः॥

[9]इन्द्रस्स इति ॥ स तादृश इन्द्रः अस्मान् दामने दमनार्थे दमनकृत्ये वा बन्धने कृतः बन्धनयोगैर्वशीकृतकृत्य इत्यर्थः । उत्सादिर्द्रष्टव्यः । किञ्च—स इन्द्रः ओजिष्ठः बलवत्तरः अभीतः बले हितः स बलीन्द्रो बले स्थितः द्युम्नी अन्नवान् यशस्वी वा । श्लोकी स्तुतिमान् । सौम्यः सोमार्हः । 'तदर्हति' इति यत् । ततश्छान्दसमन्तस्वरितत्वम् । ईदृश इन्द्रो अस्माभिस्स्वीकृत इति ॥

[10]गिरेति ॥ गिरा स्तुतिवाचा वज्रोन वज्र इव संभृतः सम्यक् हस्ते भृतः गृहीतः । सबलः बलसहितः अनपच्युतः

[1] देवासुरास्संयत्ता आसन् । स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमप न्यधत्त । नेदेनमसुरा बलीयाꣳसो हनन्निति । प्रह्रादो ह वै कायाधवः । विरोचनꣳ स्वं पुत्र-

---

बभ्रुः संभ्रमेषु धुरो वोढुमिच्छन् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इतीत्वाभावः । वर्णव्यत्ययेन वा इकारस्याकारभावः । उग्रः उद्गूर्णबलः सदोद्यतः अस्तृतः केनचिदप्यनाच्छादितः । अनुमहिंसितो वा । ईदृशोऽयमिन्द्रः सर्वार्थसाधनभूतो वज्र इवास्माभिः संभृतः ॥

इति पञ्चमे अष्टमोऽनुवाकः.

---

अतः परं चत्वारोऽनुवाकाः अध्वरब्राह्मणं सोमार्षेयम्—

[1]देवासुरा इत्यादि ॥ अपन्यधत्त देवसमूहसकाशादपकृष्य गूढं निहितवान् नेदेनमसुरा बलीयांसो हन्युरित्यभिप्रायेण । अथ प्रह्रादो नाम कायाधवः कयाधोः पुत्रः कश्चिदसुरो विरोचनाख्यं स्वं पुत्रमपन्यधत्त नैवैनं देवा हन्युरित्यभिप्रायेण । हन्तेर्व्यत्ययेन शप् । कया सामग्र्या धूयते कम्प्यत इति कयाधूः । प्रकर्षेण ह्रादयति शब्दयति पीड्यमानाः प्रजा इति प्रह्रादः । ह्राद अव्यक्ते शब्दे । यद्वा—प्रकर्षेण ह्रादेन नदति सिंहनादं करोतीति प्रह्रादः, पचाद्यचि 'परादिश्छन्दसि' इत्युत्तरपदान्तोदात्तत्वम् ॥

मप॒ न्यधत्त । नेदेनं दे॒वा अहनन्निति । [2]ते दे॒वाः प्रजापतिमुपस॒मेत्योचुः । नारा॒जकस्य यु॒द्धमस्ति। इन्द्र॒मन्विच्छा॒मेति । तं यज्ञक्र॒तुभि॒रन्वैच्छन्॥३१॥ तं यज्ञक्र॒तुभि॒र्नान्वविन्दन् । तमिष्टिभि॒रन्वैच्छन् । तमिष्टिभि॒रन्वविन्दन् । तदिष्टीनामिष्टि॒त्वम् । एष्ट-यो ह॒ वै नाम । ता इष्टय॒ इत्याचक्षते प॒रोक्षेण । प॒रोक्षप्रिया इव॒ हि दे॒वाः। [3]तस्मा एतमाग्नावैष्ण॒-वमेकादशकपालं दीक्ष॒णीय॒ं निरवपन् । तदप॒ब्रु-

---

[2]ते देवा इत्यादि ॥ अराजकस्य बलस्य युद्धं नास्ति । तस्मात् त्वदनुज्ञाता इन्द्रमन्विच्छामेति देवा ऊचुः । यज्ञक्रतवो यूपवन्तः । तदिष्टीनामिति । अन्विष्य अन्वविन्दन्निति । अन्विष्यालम्भि इन्द्र आभिरिति एष्टयः । अन्वर्थे आकारः । यद्वा—आयजनं लाभः, एज्यते लभ्यते आभिरिति एष्टयः । एवमेष्टयोनामैतानि मित्यचाद्दष्ट्या ताः तादृशीः इमा इष्टय इत्याचक्षते परोक्षवृत्त्या । गतमन्यत् ॥

[3]काभिः पुनरिष्टिभिः तमन्वैच्छन् देवा इत्याह—तस्मा इत्यादि ॥ तस्मै इन्द्राय तमिन्द्रमन्विष्य लब्धुम् । एकादशसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः, "द्विगोर्लुगनपत्ये" इति लुक् । 'इगन्तकाल' इति पूर्वपदप्रकृतिस्वरत्वम् । तत्रापि 'संख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । दीक्ष्यते अनेनेति दीक्षणीयम् । अथ त-

त्यातन्वत । तान्पत्नीसंयाजान्त उपानयन् ॥४०॥ ते तदन्तमेव कृत्वोदद्रवन् । ते प्रायणीयमभि समारोहन् । तदपद्रुत्यातन्वत । ताञ्छंय्वन्त उपानयन् । ते तदन्तमेव कृत्वोदद्रवन् । त आतिथ्यमभि समारोहन् । तदपद्रुत्यातन्वत । तानिडान्त उपानयन् । ते तदन्तमेव कृत्वोदद्रवन् । तस्मा देवा एतदन्ता इष्टयस्संतिष्ठन्ते ॥ ४१ ॥ एवꣳ हि देवा अकुर्वत । इति देवा अकुर्वत । इत्यु वै मनुष्याः

---

देशात् अपद्रुत्य अपेत्य तामिष्टिं अतन्वत अकार्षुः । अथ तान् पत्नीसंयाजान्ते उपानयन् उपसंप्राप्तान् असुरानकुर्वन् । अय गतौ, भौवादिकः, व्यत्ययेन परस्मैपदम् । अथ ते देवाः तदन्तमेव पत्नीसंयाजान्तमेव कृत्वा उदद्रवन् उदतिष्ठन् । अथ ते देवाः प्रायणीयं आदित्यं चरुं अभिसमारोहन् तदुद्दिश्य प्रतिज्ञामारूढवन्तः । तदपद्रुत्येत्यादि । गतम् । प्रथमत ईयते प्राप्यते अनेनेति प्रायणीयः शंय्वन्ते शंयुवाकान्ते ॥

त इत्यादि ॥ अतिथये आतिथ्यं नवकपालम् । वैष्णवं नवकपालम् । तदित्यादि । गतम् । तस्मादित्यादि । एताः दीक्षणीयाप्रायणीयाऽऽतिथ्याः इष्टयः एतदन्ताः पत्नीसंयाजशंयुवाकेडान्ताः सन्तिष्ठन्ते समाप्यन्ते । एवं एतदन्ता हि एता देवता अकुर्वत। तस्मादेतदन्तास्सन्तिष्ठन्त इति । ननु देवानां तथा कुर्वतां मनुष्यै-

कुर्वते । [5]ते देवा ऊंचुः । यद्वा इदमुच्चैर्यज्ञेन चराम। तन्नोऽसुराः पाप्माऽनुविन्दन्ति। उपाꣳशूपसदा च-राम । तथा नोऽसुराः पाप्मा नानुवेष्यन्तीति । त उपाꣳशूपसदमतन्वत । तिस्र एव सामिधेनीरनूच्य ॥ ४२ ॥ स्रुवेणाघारमाघार्य । तिस्रः पराचीराहुतीर् हुत्वा । स्रुवेणोपसदं जुहवाञ्चक्रुः । [6]उग्रं

रस्माभिः कथं कर्तव्यमित्याह—इति देवा इत्यादि । इत्थं देवा अकुर्वत इति एवं प्रतीत्य मनुष्याः तत्कृतमेव कुर्वते। उकारोऽवधारणे। देवैश्च तथा कृतमिति मनुष्यैरपि तथा कर्तव्यमिति॥

[5]ते देवा इत्यादि ॥ यत् इदं उच्चैः यज्ञेन चराम यज्ञेन उपसदाख्येन चराम तत् तेन हेतुना नः अस्मान् पाप्मा पापात्मानः असुरा अनुविन्दन्ति अनुक्रमेण लभेरन् अभिभवेयुः तस्मात् उपांशु चराम इति । गतमन्यम् । अनुवेस्यन्ति अनुलप्स्यन्ते । तिस्र इत्यादि । तिस्रः ऋचः त्रिरनूक्ता अन्वाह “उपसद्याय मीढुषे” इत्याद्याः । स्रुवेणाघारमाघार्य तिस्रः आहुतीः अग्निसोमविष्णुभ्यः पराचीः अनावृत्ताः सकृदतिक्रम्येत्यर्थः। स्रुवेणोपसदं जुहवांचक्रुः ‘या ते अग्नेऽयाशया’* इत्यादिभिः । ‘मीमीभृहुवां श्लुवच्च’ इत्याम्प्रत्ययः ॥

[6]इदानीं मन्त्रैकदेशं व्याख्यातुमुपादत्ते—उग्रं वच इत्यादि ॥ अशनाया बुभुक्षा । ‘अशनायोदन्य’ इति निपात्यते, ‘न छन्दस्यपुत्रस्य’

* सं. १-२-११.

वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः । एतꣳ ह वाव तच्चतुर्धाविहितं पाप्मानं देवा अपजघ्निरे । [7]तथो एवैतद्वेदं विद्यजमानः । तिस्र एव सामिधेनीरनूच्य । स्रुवेणाघारमाघार्य ॥ ४३ ॥ तिस्रः पराचीराहुतीर् हुत्वा । स्रुवेणोपसदं जुहोति । उग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः । एतमेव तच्चतुर्धा-

---

इति दीर्घत्वं निवर्तते । पिपासा उदन्या । एतत् द्वयं उग्रं वचः तच्छ्रवणहेतुत्वात् । एनः पापं वैरहत्यं वीरघ्नः कर्म वैरहत्यम् । ण्यति रूपम् । यद्वा—वीरस्य हननं वीरहत्या । 'हनस्त च' इति क्यप् । वीरहत्यैव वैरहत्यम् उत्सादिर्द्रष्टव्यः । एतदुभयं त्वेषं वचः दीप्तं क्रोधादिना तादृशवाक्यश्रवणजन्यमेतदुभयं एतं इत्थं चतुर्धा विहितं चतुर्धाऽवस्थितं पाप्मानं देवा अपहतवन्तः ॥

[7]तथो इत्यादि ॥ तथा उ तथो इति निपातसमुदाय । तथा एतदित्यर्थे[1] वर्तते । एतत् एतस्मिन्कर्मणि एवं विद् एवं वेदैः कृतमिति विद्वान् । तिस्र एवेत्यादि । गतम् ॥

---

[1] तथा चेत्यर्थे.

विहितं पाप्मानं यजमानोऽपहते । [4]तेऽभिनीयैवा-
हः पशुमाऽऽलभन्त । अह्न एव तद्देवा अर्वर्तिं पा-
प्मानं मृत्युमपजघ्निरे । तेनाभिनीयैव रात्रेः प्राच-
रन् । रात्रिया एव तद्देवा अर्वर्तिं पाप्मानं मृत्यु-
मपजघ्निरे ॥ ४४ ॥ तस्मादभिनीयैवाहः पशुमाल-
भेत । अह्न एव तद्यजमानोऽर्वर्तिं पाप्मानं भ्रातृ-
व्यानपनुदते । तेनाभिनीयैव रात्रेः प्रचरेत् । रात्रि-
या एव तद्यजमानोऽर्वर्तिं पाप्मानं भ्रातृव्यानपनु-
दते । [5]स एष उपवसथीयेऽहन्द्विदेवत्यः पशुराल-
भ्यते । द्वयं वा अस्मिन्लोके यजमानः । अस्थि
च माꣳसं च । अस्थि चैव तेन माꣳसं च यज-

---

[4]तेऽभिनीयैवेत्यादि ॥ ते देवा अहरभिनीयैव गमयित्वैव अप-
राह्ने पशुं अग्नीषोमीयं आलभन्त । तत् तेन प्रयोगेण अवर्तिं
दारिद्र्यं पाप्मानं मृत्युं च देवा अह्नोऽपजघ्निरे तेनेत्यादि
तेन पशुना रात्रेः रात्रेः(त्रौ) अभिनीयेव प्राचरन् रात्रावेव प्र-
चरणं कृतवन्तः । अह्नो रात्रेस्सम्बन्धित्वेन प्राचरन् । गतमन्यत् ।
तस्मादभिनीयैवालभेत् यस्मादभिनीयैव ते अकुर्वन् ॥

[5]स एष इति ॥ उपवसथीये अहन् सौत्यात् पूर्वस्मिन्
दिने । अनुप्रवचनादित्वाच्छः । द्विदेवत्यः अग्नीषोमीयः । द्वयं

मानस्सꣳस्कुरुते । [10]ता वा एताः पञ्च देवताः । अग्नीषोमावग्निर्मित्रावरुणौ ॥ ४५ ॥ पञ्चपञ्ची वै यजमानः । त्वङ्माꣳ सꣳस्नावाऽस्थि मज्जा । एतमेव तत्पंञ्चधा विहितमात्मानं वरुणपाशान्मुञ्चति । भेषजतायै निर्वरुणत्वाय । [11]तꣳ सप्तभिश्छन्दोभिः प्रातरह्वयन् । तस्मात्सप्त चतुरुत्तराणि छन्दाꣳसि

---

वा इत्यादि । अस्थि च मांसं च इत्युभयं यजमानः यजमानशरीरं विद्वान् स्वयं द्विदेवत्येन द्रव्यमुभयं संस्कुरुते साधु प्रशस्तं लभते ॥

[10]ता वा इत्यादि ॥ देवताः त्रयाणां पशूनां सम्बन्धिन्यः । अग्नीषोमौ च अग्निः च मित्रवरुणौ चेति । यजमानश्चायं पञ्चपञ्ची त्वगादिपञ्चकवान् पञ्चभिः पञ्चमानो देहः पञ्चपञ्चः तद्वान् पञ्चपञ्ची । पचि विस्तारे । यद्वा—पञ्चप्रकारैः कोशैः त्वगादिभिः तद्वान् । 'प्रकारे गुणवचनस्य' इति सङ्ख्याया अपि चोदिते द्विर्वचनम् । तदेवाह—पञ्चधा पञ्चप्रकारं विहितं त्वगादिभिः आत्मानं शरीरं वरुणपाशात् वारकेण पापेन यद्बन्धनं ततो मुञ्चति । तच्च भेषजतायै अनिष्टोपशमनाय भवति निर्वरुणत्वाय वरुणपाशमोक्षणाय च भवति ॥

[11]तमित्यादि ॥ तं इन्द्रं सप्तभिः छन्दोभिः प्रातरह्वयन् प्रातरनुवाके आहूतवन्तः । तस्मात् चतुरक्षरोत्तराणि सप्त छ-

प्रातरनुवाकेऽनूच्यन्ते।[12]तमेतयोपसमेत्योपासीदन्। उपास्मै गायता नर इति। तस्मादेतया बहिष्पवमान उपसद्यः ॥ ४६ ॥

ऐच्छन्ननयन्नस्तिष्ठन्तेऽनूच्यानूच्य स्रुवेणाघारमाघार्य रात्रिया एव तद्देवा अर्वर्तिं पाप्मानं मृत्युमपजघ्निरे मित्रावरुणौ नव च ॥ १ ॥

देवा यजमानो देवा देवा यजमानो यजमानोऽलभन्त प्राचरन्लभेत प्रचरेदालभन्तालभेत मृत्युमपजघ्निरे भ्रातृव्यान् ॥

---

न्दांसि गायत्र्यादीनि जगत्यन्तानि सर्वाण्यपि प्रातरनुवाके अनूच्यन्ते ॥

[12]तमेतयेत्यादि ॥ अत एव छन्दोभिरिन्द्रमाहूय उपसमेत्य "उपास्मै गायत" इत्येतया उपासीदन् उपासत। तस्मात् एतया ऋचा बहिष्पवमान उपसद्यः उपसत्तव्यः । सदेः छान्दसः क्यप् ॥

इति प्रथमे नवमोऽनुवाकः ॥

[1]स संमुद्र उत्त॒रतः प्राज्व॑लद्भूम्य॒न्तेन॑। ए॒ष वाव स संमुद्रः। यच्चात्वा॑लः। ए॒ष उ॑वे॒व स भू॒म्य॒न्तः। यद्वे॑द्य॒न्तः। तदे॒तत्त्रि॑श॒लं त्रिपू॒रु॒षम्। त॒स्मा॒त्तं त्रि॑वि॒त॒स्तं खनन्ति। [2]स सुवर्णरज॒ताभ्यां॑ कु॒शीभ्यां॑

[1]स समुद्र इत्यादि॥ समुद्द्रवत्यस्मादिति समुदेत्यस्मादिति वा समुद्रः स्थानविशेषः। यस्मात्प्रजापतिना उपनिहितः इन्द्र आविर्भवति स्म स तादृशः समुद्र उत्तरतः प्राज्वलत् प्रादुरभूत्। इन्द्रस्यादित्यात्मना रूपयिष्यमाणत्वात् तदभिव्यक्तिस्थानस्य समुद्रत्वेन रूपणा। भूम्यन्तेन भूम्याः पार्श्वे। प्रकृत्यादितृतीया। उत्तरस्माद्वेद्यंसादुदक्प्रक्रमे प्राज्वलत् सामर्थ्यात् इन्द्रः प्रादुरभूदिति गम्यते। कः पुनः समुद्र इत्याह—एष वाव स समुद्रो यत् चात्वालाख्यः प्रदेशः, 'योनिर्वै यज्ञस्य चात्वालम्'[1] इति। कस्तर्हि भूम्यन्त इत्याह—एषः उ एष एव वेद्यन्ते भूम्यन्त इत्युच्यते। 'सा वा इयं सर्वैव वेदिः'[2] इति। तन्वादित्वादुवङ्। केचिदाहुः—स इन्द्रः समुद्रे चात्वाले प्राज्वलत् प्रादुरभवदिति। तदेतत्त्रिशलं त्रिशलप्रमाणकम्। शलः शल्यकः शलं वितस्तिप्रमाणं प्रमाणप्रत्ययस्य 'अध्यर्धपूर्वात्' इति लुक्। तदेतात्त्रिशलं त्रिपूरुषत्वेन स्तूयते। त्रयः पुरुषाः प्रमाणमस्येति पूर्ववल्लुक्। तस्मात्तं चात्वालं त्रिवितस्तं खनन्ति त्रिवितस्तिप्रमाणम्। पूर्ववल्लुक्। वितस्तिशब्दपर्यायो वितस्तशब्दः। 'वितस्तिर्द्वादशाङ्गुलः'॥

[2]स इत्यादि॥ स इन्द्रः पूर्वं प्रजापतिना उपनिहितः इदानीं

[1] सं. ६-३-१. [2] सं. ६-२-४.

परिगृहीत आसीत् । तं यदस्या अध्यजनयन् । तस्मादादित्यः ॥४७॥ अथ यथ्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । साऽस्य कौशिकता । तं त्रिवृताऽभि प्रास्तुवत । तं त्रिवृताऽऽददत । तं त्रिवृताऽऽहरन् । यावती त्रिवृतो मात्रा । तं पञ्चदशेनाभि प्रास्तुवत । तं पञ्चदशेनाददत । तं पञ्चदशेनाहरन् । यावती पञ्चदशस्य मात्रा ॥४८॥ तꣳ सप्तदशेनाभि प्रास्तुवत । तꣳ सप्तदशेनाददत । तꣳ सप्तदशेनाहरन् । यावती सप्तदशस्य मात्रा । तस्यं

पातवाले प्रजायमानः सुवर्णरजताभ्यां कुशीभ्यां कोशाभ्यां समुद्गाधिकरणाभ्यां परिगृहीतः कोशद्वयेन प्रच्छाद्य विनिहित आसीत् आविरासीत् । तं तादृशं इन्द्रं अस्याः पृथिव्याः पातालात्मिकाया अधि उपरि अजनयन् इन्द्रमन्विच्छन्तो देवाः । तस्मात् अयं इन्द्रः आदित्यः उच्यते । अदितिः पृथिवी "इयं वा अदितिः"* तस्याः प्रादुर्भूत इत्यादित्यः । अथ यत् सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् साऽस्य कौशिकता । कुश्योर्भवः कौशिकः । अध्यात्मादित्वात् ठञ् ॥

तं त्रिवृतेत्यादि ॥ तं इन्द्रं प्रादुर्भूतं त्रिवृता बहिष्पवमानेन अभिप्रास्तुवत प्रथमतोऽभिष्टुतवन्तो देवाः । अथाभिष्टुत्य त्रिवृतैव आददत गृहीतवन्तः तं तथाऽऽदाय त्रिवृतैवाहरन् उद्धृत-

*आ. १-६-१०.

सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत् । तमेकवि॒ꣳशेनाभि प्रास्तुवत । तमेकवि॒ꣳशेनाददत । तमेकवि॒ꣳशेनाहरन् । यावत्येकवि॒ꣳशस्य मात्रा । 'ते यत्त्रिवृता स्तुवते ॥ ४१ ॥ त्रिवृतैव तद्यजमानमाददते । तं त्रिवृतैव हरन्ति । यावती त्रिवृतो मात्रा । अग्निर्वै त्रिवृत् । यावद्वा अग्नेर्दहतो धूम उदेत्यानु व्येति । तावती त्रिवृतो मात्रा । अग्नेरेवैनं तत् । मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति । अथ यत्पञ्चदशेन स्तुवते । पञ्चदशेनैव तद्यजमानमाददते ॥

वन्तः उदयच्छन्त । कियदुदाहरन्नित्याह—यावती त्रिवृतो मात्रा प्रमाणं तावत् उदाहरन् सा च वक्ष्यते—'यावती त्रिवृतो मात्रा।' इति । एवं पञ्चदशादिषु द्रष्टव्यम् । एतैरुपर्युपरि इन्द्रं उद्धृतवन्तः । तस्य सप्तदशेन ह्रियमाणस्य तेजः तेजिष्ठं हरः दीप्तिः अपतत् । वक्ष्यते चात्र "धानाभिरभिषज्यताम्"[1] इति। पुनरपि तमेकविंशेन अभिप्रास्तुवत इत्यादि । समानम् ॥

'ते यदित्यादि ॥ यत एते उद्गातारः त्रिवृता स्तुवते ततः यजमानं त्रिवृता आददते । इन्द्रमिव देवा यजमानं त्रिवृता उद्धरन्ति च । यावती त्रिवृतो मात्रा तावद्यजमानमुद्धरन्ति । का पुनस्त्रिवृतो मात्रेत्यत आह—अग्निः त्रिवृत् एकस्थानप्रभवत्वात् द्वयोः यावतीः [जनयतः?] प्रजापतेः । तस्य अग्नेर्दहतः दक्षि-

[1] ब्रा. १-५-११.

५० ॥ तं पञ्चदशेनैव हरन्ति । यावती पञ्चदशस्य मात्रा । चन्द्रमा वै पञ्चदशः । एष हि पञ्चदश्यामपक्षीयते । पञ्चदश्यामापूर्यते । चन्द्रमस एवैनं तत् । मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति । ⁶अथ यथ्सप्तदशेन स्तुवते । सप्तदशेनैव तद्यजमानमावहते । तꣳ सप्तदशेनैव हरन्ति ॥ ५१ ॥ यावती सप्तदशस्य मात्रा । प्रजापतिर्वै सप्तदशः । प्रजापतेरेवैनं तत् । मात्राꣳ सायुज्यꣳ सलोकतां

---

णतो धूम उदेत्य उत्सृज्य व्याप्य यावत् अनुव्येति अनुविसर्पति तावती अग्नेः मात्रा सैव त्रिवृतो मात्रा अग्नित्वात्त्रिवृतः । तस्मादग्नेरेव मात्रां गमयन्ति यजमानं त्रिवृता स्तुवन्त उद्गातारः । तथा सायुज्यं समानयोगतां समानलोकतां च अग्नेः गमयन्ति । एवं पञ्चदशादिषु द्रष्टव्यम् । चन्द्रमाः पञ्चदशः स्तोमः पञ्चदशसङ्ख्यान्वयात् द्वयोः । पञ्चदशस्तोत्रीयाभिः पञ्चदशः स्तोमः । चन्द्रमाः पञ्चदश्यां तिथौ अत्यन्तं अपक्षीयते कृष्णे । तत्र पञ्चदश्यां अत्यन्तं च आपूर्यते शुक्ले । तस्मात् चन्द्रमस इमां मात्रां तिथिभेदेन लोकस्थितिहेतुं तत् सायुज्यं सलोकतां च यजमानं गमयन्ति ॥

⁶प्रजापतिर्वा इत्यादि ॥ लोकस्थितिहेतुत्वात् प्रजापतेः । मात्रां लोकस्थितिहेतुतां गमयन्ति यजमानम् ॥

गमयन्ति । [6]अथ यदेकविꣳशेन स्तुवते । एकवि-
ꣳशेनैव तद्यजमानमाददते । तमेकविꣳशेनैव ह-
रन्ति । यावत्येकविꣳशस्य मात्रा । असौ वा आ-
दित्य एकविꣳशः । आदित्यस्यैवैनं तत् ॥ ५२ ॥
मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति । [7]ते कु-
श्यौ । व्यघ्नन् । ते अहोरात्रे अभवताम् । अहरेव
सुवर्णाऽभवत् । रजता रात्रिः । स यदादित्य उदे-
ति । एतामेव तथ्सुवर्णां कुशीमनु समैति । अथ
यदस्तमेति । एतामेव तद्रजतां कुशीमनु संविशति ।

---

[6]योसौ प्रकाशोदकदानादिना लोकं धारयति असावादित्यः एव एकविंशः तद्धारकत्वाल्लोकानाम् । तामिमामादित्यस्य मात्रां यजमानं गमयन्ति ऐश्वर्यमात्रां प्रापयन्ति ॥

[7]ते इत्यादि ॥ अथ यदा एकविंशस्य मात्रां इन्द्रो गमितोऽभूत् तदानीं विश्वमनेन जितमिति मन्यमाना देवाः ते सुवर्णरजते कुश्यौ व्यघ्नन् व्यश्लेषयन्, ते अहोरात्रे अभवताम् । अहः सुवर्णा रजता रात्रिः । अथ एतयोः इन्द्रकुश्यौ सुवर्णां कुशीं आदित्योऽनुसमेति यदा उदेति अयमस्योदयः । यदा रजतकुश्यनुप्रवेशस्स्यात् तदा अस्तमयः । एवं इन्द्रस्याहोरात्रव्याप्तं विश्वविजयित्वमुक्तम् ॥

[8]प्रह्लादो ह वै कायाधवः। विरोचनꣳ स्वं पुत्रमुदास्यत्। स प्रदरोऽभवत्। तस्मात्प्रदरादुदकं नाचामेत् ॥ ५३ ॥

आदित्यः पञ्चदशस्य मात्रा स्तुवते पञ्चदशेनैव तद्यजमानमाददते सप्तदशेनैव हरन्त्यादित्यस्यैवैनं तद्विꣳशति चत्वारि च ॥ १० ॥

[1]ये वै चत्वारस्स्तोमाः। कृतं तत्। अथ ये पञ्च। कलिस्सः। तस्माच्चतुष्टोमः। तच्चतुष्टोमस्य चतु-

---

[8]अथ प्रह्लादेनापनीतस्य विरोचनस्य को वृत्तान्त इत्याह—प्रह्लाद इत्यादि ॥ पुत्रं उदास्यत् उदक्षिपत् गूढनिहितं पुत्रं तत उद्धृतवान्। विश्वं इदं इन्द्रेण जितमिति सः उद्यतप्रदेशः प्रदरो भूविवरः अभवत्। तस्मात्प्रदरादुदकं नाचामेत् असुरच्छिद्रनिर्गतत्वात्। दॄ विदारणे, 'ऋदोरप्' थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

इति पञ्चमे दशमोऽनुवाकः.

———o———

[1]ये वै चत्वारस्स्तोमा इति ॥ ये त्रिवृदादयः चत्वार एव स्तोमाः स्युः तत् कृतं पुष्कलं पृथुलधर्मकेण कृतेन तुल्यम्। अथ ये पञ्च स्युः त्रिवृदादयः कलिः सः क्षीणधर्मकेण कलिना तुल्यं तत्। प्रकृताभा[वभा]वात् यदेवं सम्भवति तदानीमेवं क्रियते। तस्माच्चतुष्टोम एव कर्तव्यः। इदमेव ज्योतिष्टोमस्य चतुष्टोमत्वम् ॥

ष्टोमत्वम् । [2]तदाहुः । कतमानि तानि ज्योतीꣳषि । य एतस्य स्तोमा इति । त्रिवृत्पञ्चदशस्सप्तदश एकविꣳशः ॥ ५४ ॥ एतानि वाव तानि ज्योतीꣳषि । य एतस्य स्तोमाः । [3]सोऽब्रवीत् । सप्तदशेन ह्रियमाणो व्यलेशिषि । भिषज्यत मेति । तमश्विनौ धानाभिरभिषज्यताम् । पूषा करम्भेण । भारती परिवापेण । मित्रावरुणौ पयस्यया । [4]तदाहुः ॥

[2]तदाहुरित्यादि ॥ चत्वारस्स्तोमा इति सामान्योक्त्या विशेषं पृच्छन्ति । य एतस्येति । त्रिवृदादीनां ज्योतिषां प्रसिद्धत्वादेवास्य ज्योतिष्टोमात्मकतासिद्धिरित्याह—वाव तानि ज्योतींषीति ॥ द्योतनहेतुत्वाद्यज्ञस्य एतानि ज्योतींषि एतत्स्तोमत्वात् ज्योतिष्टोमत्वम् ॥

[3]सोऽब्रवीदित्यादि ॥ सः इन्द्रः अब्रवीत् । यदा अहं सप्तदशेन स्तोमेन ह्रियमाणोऽभूवं तदा व्यलेशिषि विश्लिष्टोऽकार्षं तेजसा अल्पोऽभूवम् । यथोक्तं—'तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत्' * इति । लिश अल्पीभावे कर्मणि उत्तमपुरुषैकवचनम् । तस्मात् क्षीणतेजसं मा मां भिषज्यत चिकित्सत इति देवानब्रवीत् । भिषज्यतिः कण्ड्वादिः । अथ धानादिभिरश्विन्यादयोऽभिषज्यन् । तण्डुलप्रभवा लाजा धानाः, दधिसम्मिश्राः सक्तवः करम्भाः, परिवापो लाजाः, पयस्या पयोविकारः ॥

[4]तदाहुरिति ॥ एतानि सवनीयादीनि वस्वादिभ्यो निरुप्यन्ते ।

*ब्रा. १-५-१०.

५५ ॥ यद॒श्विभ्यां॒ धा॒नाः । पू॒ष्णः क॑र॒म्भः । भा-
रत्यै परिवा॒पः । मि॒त्रावरु॑णयोः पय॒स्या॑ऽऽर्थ । क-
स्मादे॒तेषा॑ᳪ ह॒विषा॑मिन्द्र॑मे॒व य॑ज॒न्तीति॑ । ए॒ता
ह्ये॑नं दे॒वता॑ इति॑ ब्रूयात् । ए॒तैर् ह॒विर्भि॑रभिषज्य॒न्न॑-
स्तस्मा॒दिति॑ । ¹तं वस॑वो॒ऽष्टाक॑पालेन प्रातस्सव॒नेऽ-
भिषज्यन् । रु॒द्रा एका॑दशकपाले॒न माध्यं॑न्दिने॒ स-
व॑ने । विश्वे॑ दे॒वा द्वाद॑शकपालेन तृतीयसव॒ने ॥५६॥
स यद॒ष्टाक॑पालान्प्रातस्सव॒ने कु॒र्यात् । एका॑दश
कपाला॒न्माध्यं॑न्दिने॒ सव॑ने । द्वाद॑शकपाला॑ᳪस्तृती-

---

अथेदानीं कस्मात् पुनरिन्द्र एवेज्यत इति पर्यनुयोगं आहुः । तृतीयार्थे षष्ठी । उत्तरं—एता हीति । एता देवता अश्व्यादयः एतैर्हविर्भिः धानादिभिः एनं यस्मात् अभिषज्यन् तस्मादिति ब्रूयात् । "तस्मात्" इत्यस्यानन्तरं "इति ब्रूयात्" इत्येतत् द्रष्टव्यम् । यस्मादेवं तस्मादिति ब्रूयात् उत्तरमित्यर्थः । एक इतिशब्दो भिषज्याया अभित्वे [भिषज्याया अश्व्यादिकृतत्वस्य हेतुत्वे ?] द्वितीयः निर्वापस्य हेतुत्वे । यस्मादेता देवता अभिषज्यन् तस्मादेताभ्यो निरुप्यन्ते, यस्मादेताभ्यो निरुप्यन्ते तस्मादेवमिन्द्रमभिषज्यन्, तस्मादिन्द्र इज्यते इति उभयत्रान्वयः ॥

¹तं वसव इत्यादि ॥ वस्वादय इव यद्यष्टाकपालादीन् प्रातस्सवनादिषु कुर्यात् तत् यज्ञस्य विलोम प्रतिलोम क्रियते

यसवने । विलोमम् तद्यज्ञस्य क्रियेत । एकादशक-
पालानेव प्रातस्सवने कुर्यात् । एकादशकपाला-
न्माध्यन्दिने सवने । एकादशकपाला ँ स्तृतीयस-
वने । यज्ञस्य सलोमत्वाय । [6]तदाहुः । यद्वसूनां
प्रातस्सवनम् । रुद्राणां माध्यन्दिन ँ सवनम् । वि-
श्वेषां देवानां तृतीयसवनम् । अथ कस्मादेतेषा ँ
हविषामिन्द्रमेव यजन्तीति । एता ह्येनं देवता इति
ब्रूयात् । एतैर् हविर्भिरभिषज्य ँ स्तस्मादिति ॥५७॥

एकवि ँ शा आहुस्तृतीयसवने प्रात-
स्सवनं पञ्च च ॥ ११ ॥

[1]तस्यावाचोऽवपादादबिभयुः । तमेतेषु सप्तसु
छन्दस्स्वश्रयन् । यदश्रयन् । तच्छ्रायन्तीयस्य श्रा-

सवनीययागस्यैन्द्रत्वात् । तस्मात् एकादशकपालानेव सर्वेषु कुर्यात् इति ॥

[6]तदाहुरित्यादि ॥ गतम् ॥

इति पञ्चमे एकादशोऽनुवाकः.

---

[1]तस्यावाच इत्यादि ॥ उक्तमेकविंशेनादित्यस्य मात्रामिन्द्रो गत इति । तस्य आदित्यात्मन इन्द्रस्य अवाचोऽवपादात् अधः पतनात् अबिभयुः कदाचिदयमवाक्पतेदिति देवा भीतिं गताः । [2]प-

यन्तीयत्वम् । यदवारयन् । तद्वारवन्तीयस्य वारवन्तीयत्वम् । तस्यावाच एवावपादादबिभयुः । [2]तस्मा एतानि सप्त चतुरुत्तराणि छन्दाᳬस्युपादधुः। तेषामति त्रीण्यरिच्यन्त । न त्रीण्युदभवन् ॥५८॥ स बृहतीमेवास्पृशत् । द्वाभ्यामक्षराभ्याम् । अहोरात्राभ्यामेव । [3]तदाहुः । कतमा सा देवाक्षरा बृ-

---

द्यतेर्घञ्, थाथादिना उत्तरपदान्तोदात्तत्वम् । अथ तमेतेषु गायत्र्यादिषु सप्तसु छन्दस्सु अश्रयन् स्थापितवन्तः सप्तछन्दांस्याश्रयमकुर्वन् साम्नि । तत् तस्मात्तदाधारस्य सामविशेषस्य श्रायन्तीयत्वम् । श्रयत्यनेन छन्दांस्यादित्य इति श्रायन्तीयम् । यत् यस्माच्चावाक्पतनादादित्यं अवारयन् निवारितवन्तो देवाः, तद्वारवन्तीयस्य सामविशेषस्य वारवन्तीयत्वम् ॥

2—3तस्मात् सामद्वारेण गायत्र्यादीनि सप्त चतुरुत्तराणि छन्दांस्युपादधुः समन्तादुत्तम्भनत्वेन स्थापितवन्तः,- चतुर्भिश्च चतुर्भिरुत्तरैः पूर्वस्मात्पूर्वस्मादुत्तराणि उन्नततराणीति । चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरा उष्णिगित्यादि । अथ तेषां छन्दसां मध्ये त्रीणि पङ्क्त्यादीनि छन्दांसि आदित्यं अत्यरिच्यन्त अतिक्रम्य स्थितानि । तेन तमुत्तम्भयितुमयोग्यानि । अथ त्रीणि गायत्र्यादीनि छन्दांसि आदित्यं नोदभवन् न प्राप्नुवन् ऊनप्रमाणत्वादादित्यमप्राप्य स्थितानि तेन तान्यप्युत्तम्भनासमर्थानि । अथ मध्ये स्थितां बृहतीमेव आदित्यः अस्पृशत् अन्यूनानतिरि-

हृती । यस्यां तत्प्रत्यतिष्ठत् । द्वादश पौर्णमास्यः । द्वादशाष्टकाः । द्वादशामावास्याः । एषा वाव सा देवाक्षरा बृहती ॥ ५९ ॥ यस्यां तत्प्रत्यतिष्ठदिति । 'यानि च छन्दाᳫंस्यत्यरिच्यन्त । यानि च नोद-

त्कत्वात् उत्तम्भकत्वेनास्पृशत् । स एवैनमधारयत् इति यावत् । केन प्रकारेण बृहतीमादित्योऽस्पृशदित्याह—द्वाभ्यामक्षराभ्यामित्यादि । द्वाभ्यां अविनाशाभ्यां नित्यप्रवृत्ताभ्यामेव कुचित् बृहती सम्पद्यते । संवत्सरात्मकाहोरात्रसमुदायस्य बृहतीत्वेन रूपणात् तदवयवयोरहोरात्रयोः अक्षरत्वेन रूपणं क्रियते । बृहत्येव इत्थं भूत्वा आदित्यं देवं धारयितुं समर्था तस्मात् स बृहतीमेवास्पृशदिति । अन्यानि छन्दांसि नैवमहोरात्रयां अन्येनैव [रात्राभ्यामनन्येनैव ?] प्रकारेण आदित्यं स्पृशन्ति । तस्मात् तानि न्यूनान्यतिरिक्तानि चेत्युक्तम् । बृहत्यां तु षट्त्रिंशदक्षरसममितषट्त्रिंशदहोरात्रविशेषसमासादितबृहती एव [हतीसमभावक ?] संवत्सरात्मिकां [संवत्सरात्मकस्य ?] देवस्य आदित्यस्य सङ्ख्यातानुरूप्यं वहन्त्यां आदित्यः प्रतितिष्ठति । कतमा सा देवाक्षरा बृहती यस्यामादित्यः प्रतितिष्ठतीति, एवं पृष्टे उत्तरं—द्वादशेत्यादि । देवाः आदित्याः, ते च द्वादश, ते च त्रिरावृत्ताः षट्त्रिंशत् । बृहती च षट्त्रिंशदक्षरा । तिथयोऽप्येता द्वादशद्वादश संवत्सरे संभूय षट्त्रिंशदित्येवं देवनिरूप्याक्षरा बृहती इति उत्तरं ब्रूयात् ॥

'यानि चेत्यादि ॥ अन्यानि यानि छन्दांसि न्यूनातिरिक्तानि निर्वीर्याणि कार्यं कर्तुमसमर्थानि तानि हीनानि वयं स्मः इति अम-

भवन् । तानि निर्वीर्याणि हीनान्यमन्यन्त । साऽ-
ब्रवीद्बृहती । मामेव भूत्वा । मामुप सꣳश्रयतेति ।
[5]चतुर्भिरक्षरैरनुष्टुग्बृहतीं नोदभवत् । चतुर्भिरक्षरैः
पङ्क्तिर्बृहतीमत्यरिच्यत । तस्यामेतानि चत्वार्यक्ष-
राण्यपच्छिद्याऽदधात् ॥ ६० ॥ ते बृहती एव भू-
त्वा । बृहतीमुप समश्रयताम् । [6]अष्टाभिरक्षरैरु-
ष्णिग्बृहतीं नोदभवत् । अष्टाभिरक्षरैस्त्रिष्टुग्बृहती-

न्यन्त उत्तम्भनकार्यात् गलितानि निर्वीर्याण्यभवन् । अथ सा बृहती छन्दांसि अब्रवीत् मामेव भूत्वा मद्रूपमेव प्राप्य । भू प्राप्तौ । मया तुल्याक्षरतां प्राप्य मामुपसंश्रयत मत्समीपे मया तुल्यकार्याणि वर्तध्वं इति । ततः छन्दोभिः ओं तथेत्यनुमते स्वयमेव बृहती तेषामक्षरसाम्यमकरोत् ॥

[5]चतुर्भिरित्यादि ॥ द्वात्रिंशदक्षराऽनुष्टुप् षट्त्रिंशदक्षरा बृहती बृहत्यात्मानं आदित्यं चतुर्भिरक्षरैः नोदभवत् । पङ्क्तिः चतुश्चत्वारिंशदक्षरा चतुर्भिरक्षरैः बृहतीमत्यरिच्यत अथ एतानि पङ्क्त्या अधिकानि चत्वार्यक्षराणि अतोऽपच्छिद्य तस्यां अनुष्टुभि अदधात् । एवं कृते ते द्वे अपि अनुष्टुप्पङ्क्ती बृहती बृहत्यौ बृहतीतुल्याक्षरे एव भूत्वा बृहत्या समेत्य तुल्यकार्ये अभूताम् ॥

[6]अष्टाभिरित्यादि ॥ अष्टाविंशत्यक्षरा उष्णिक् । चतुश्च-

मत्यैरिच्यंत । तस्यामेतान्यष्टावक्षराण्यपच्छिद्यादधात् । ते बृंहती एव भूत्वा । बृहतीमुप समंश्रयताम् । [7]द्वादशभिरक्षरैर्गायत्री बृहतीं नोदंभवत् । द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत । तस्यामेतानि द्वादशाक्षराण्यपच्छिद्यादधात् ॥ ६१ ॥ ते बृंहती एव भूत्वा । बृहतीमुप समंश्रयताम् । [8]सोऽब्रवीत्प्रजापतिः । छन्दांꣳसि रथो मे भवत । युष्माभिरहमेतमध्वानमनु संचराणीति । तस्य गायत्री च जगती च पक्षावंभवताम् । उष्णिक्च त्रि-

त्वारिंदशक्षरा त्रिष्टुप् । तयोः अष्टाक्षरापच्छेदादानाभ्यां बृहतीमकारः कृतः ॥

[7]द्वादशभिरिति ॥ चतुर्विंशत्यक्षरा गायत्री । अष्टाचत्वारिंशदक्षरा जगती, तस्मात् तयोः द्वादशाक्षरापच्छेदादानाभ्यां बृहतीभावमकरोत् । अथ सर्वैश्छन्दोभिः उत्तम्भित आदित्यस्तिष्ठतीति ॥

[8]सोऽब्रवीदित्यादि ॥ आदित्यः प्रजापतिरित्येके । अध्वा लोकरक्षामार्गः । युष्माभिः रथभूतैः अनु क्रमेण सञ्चराणि । 'समस्तृतीया युक्तात्' इति व्यत्ययेन न प्रवर्तते । पक्षौ चक्रे बाह्ये गायत्रीजगत्यौ । अथाभ्यन्तरेण प्रष्टयौ बहिर्युजावश्वौ । उष्णिक्त्रिष्टुभौ । अथ तयोरन्तरा धुर्यौ अन्तर्युजावश्वौ अनुष्टुप्

ष्टुप्च प्रष्टयौ। अनुष्टुप्च पङ्क्तिश्च धुर्यौ। बृहत्येवो-
द्धिरभवत्। स एतं छन्दोरथमास्थाय। एतमध्वा-
नमनु समचरत्। एत॰ ह वै छन्दोरथमास्थाय।
एतमध्वानमनु संचरति। येनैष एतत्संचरति। य
एवं विद्वान्त्सोमेन यजते। य उ चैनमेवं वेद॥६२॥

अभवन्वाव ता देवाक्षरा बृहत्यंदधाद्वादशाक्ष-
राण्यपच्छिद्यावधादास्थाय षट्॥ १२॥

अग्नेः कृत्तिका यत्पुण्यं देवस्य सवितुर्ब्रह्मवादि-
नः कत्यृतमेव देवा वा आयुषः प्राणमिन्द्रो वधी-
चो देवासुरास्स प्रजापतिस्स संमुद्रो ये वै चत्वा-
रस्तस्यावांघो द्वादश॥ १२॥

पङ्क्तिश्च* [बृहती उद्धिः ऊर्ध्वा स्थापनीया उपवेशनफलकरूपा अभ-
वत्। स प्रजापतिस्तादृशं रथमारुह्यानुदिनमेतन्मार्गं संच-
रति। यः पुमान् एवं रथमनुसंदधानः सोमेन यजते यश्च
एनं रथं एवं ध्यायति स एष उभयविधोपि पुरुषः येन अध्व-
ना एषः प्रजापतिः एतत् दृश्यमानं स्थानं संचरति तमेतमेवा-

* अत्र चरमस्य वाक्याष्टकस्य भाष्यं भट्टभास्करीयकोशे क्वचिदपि नो-
पलभ्यते। केषुचित्कोशेषु "पङ्क्तिश्च" इत्येतस्मादनन्तरं अंकेसमेव तत्पत्रं कृत्वा
लेखकेन चि'तमुपलभ्यते। अतोत्र वाक्याष्टकस्य माधवीयं भाष्यं योजितम्॥

अग्नेः कृत्तिका देवगृहा ऋनमेव वैश्वदेवेन ते तदन्तं तं पश्चदशेन ते बृहती एव द्विषंष्टिः ॥६२॥

हरिः ओम् ॥ ¹अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । ये प्रत्यञ्चश्शम्याया अवशीर्यन्ते । त-

घ्यानं छन्दोरथमारूढोऽनुदिनं संचरति । अत्र एवंशब्देन "देवागुराः"* इत्याद्यनुवाकचतुष्टयोक्तस्साङ्गः सोमयागप्रकारः परामृश्यते। अतोऽयं सोमयागस्य प्रयोगविधिर्द्रष्टव्यः] ॥

इति श्रीभट्टभास्करविरचिते पारक्षुद्रभाष्ये प्रथमाष्टकस्य
पञ्चमे प्रपाठके द्वादशोऽनुवाकः.

प्रपाठकश्च समाप्तः.

——x0x——

†अथ राजसूयस्यानुब्राह्मणं एतदादयस्त्रयः प्रपाठकाः । वैश्वदेवं काण्डम् ।

¹अनुमत्या इति ॥ चतुर्दशीमिश्रितायाः पौर्णमास्या अभिमानिदेवताऽनुमतिः । 'अमावास्या सिनीवाली पौर्णमास्यनुमतिः'‡ इति श्रुतेः । सा चानुमतिरत्र देवता पुरोडाशो द्रव्यमित्येतदेकं कर्म । अस्मिन्कर्मणि पुरोडाशार्थं तण्डुलेषु पिष्यमाणेषु पश्चिमायां दिशि दृषदमभ्याघातुमधः स्थापितायाः शम्यायाः प्रत्यञ्चः प्रतीचीनाः

† अत्रानुवाकत्रये भट्टभास्करभाष्यस्य कोशेष्वदर्शनात् सायणीयभाष्यतस्संगृह्य विवरणं योजितम् । *ब्रा १-५-९. ‡सं. ३-४-९.

नैर्ऋतमेकंकपालम् । इयं वा अनुमतिः । इयं निर्ऋतिः । नैर्ऋतेन पूर्वेण प्रचरति । पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते । एककपालो भवति । एकधैव निर्ऋतिं निरवदयते । [3]यदहुत्वा गार्हपत्य ईयुः ॥ १ ॥ रुद्रो भूत्वाऽग्निरनूत्थाय । अध्वर्युं च यजमानं च हन्यात् । [4]वीहि स्वाहाऽऽहुतिं

ये तण्डुलपिष्टलेशा अवशीयन्ते अधः पतन्ति तत् तादृशद्रव्यलेशजनितं एककपालं एककपालपुरोडाशात्मकं द्रव्यं नैर्ऋतं निर्ऋतिदेवताकम् । इयं शालिगोधूमादिसर्वसस्याढ्या भूमिः अनुमतिः । तथाविधसस्यायोग्या इयं भूमिः निर्ऋतिः ॥

[2]पश्चान्निरुप्तस्य नैर्ऋतस्यानुमतादुत्तरकाले न्यायप्राप्तं प्रधानयागप्रचारं बाधितुं पूर्वकालं विधत्ते—नैर्ऋतेनेति ॥ पूर्वां प्राक्तनीं निरवदयते निष्कृष्य नाशयति । लोके रुग्णानां पुरुषाणां अनिष्टं रोगं प्रथमं निवार्य पश्चादिष्टा शरीरपुष्टिः संपाद्यते । तद्वदत्रापि पाप्मानं प्रतिकूलां निर्ऋतिं प्रथमतो भागदानेन निवारयति । एकधैव एकेनैव प्रयत्नेन । कपालबाहुल्ये हि प्रयत्नबाहुल्यमपेक्ष्येतेति ॥

[3]नैर्ऋतयागात्पूर्वं होमविशेषं विधातुमाह—यदिति ॥ रुद्रः क्रूरदेवो भूत्वा 'रुद्रो वै क्रूरः'* इति श्रुतेः ॥

[4]तत्र होमे मन्त्रः—हे गार्हपत्य! स्वाहा तुभ्यं दत्तां आ

*सं. ६-२-७.

जुषाण इत्याह । आहुत्यैवैनꣳ शमयति । नार्तिमार्च्छत्यध्वर्युर्न यजमानः । [5]एकोल्मुकेन यन्ति । तद्धि निर्ऋत्यै भागधेयम् । इमां दिशं यन्ति । एषा वै निर्ऋत्यै दिक् । स्वायामेव दिशि निर्ऋतिं निरवदयते ॥ २ ॥ [6]स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । स्व एवायतने निर्ऋतिं निरवदयते । [7]एष ते निर्ऋते भाग इत्याह । निर्दिशत्येवैनाम् । भूते हविष्मत्यसीत्या-

हुतिं जुषाणः सेवमानः वीहि दक्षिणां दिशं जिगमिषुभिः अस्माभिः विगतो भव माऽस्माननूत्थाय बाधिष्ठाः इति यथामन्त्र आह तथैव एनं अग्निं शमयति अक्रूरं करोति ॥

[5]दक्षिणाग्नेरुल्मुकनयनं विधत्ते—एकेति ॥ उल्मुकेन युक्ता इत्यध्याहारः । इमां दक्षिणपूर्वाम् ॥

[6]नीतस्य उल्मुकस्य स्थापनाय देशविशेषं विधत्ते—स्वकृत इति ॥ इरिणं ऊषरक्षेत्रं तच्च स्वकृतं स्वतस्सिद्धम् । प्रदरः स्वतस्सिद्धं भूच्छिद्रम् ॥

[7]नैर्ऋतहोममन्त्रं व्याचष्टे—एष इति ॥ एनां निर्ऋतिं हविर्भागग्रहणाय प्रत्यक्षमेव निर्दिशति । मन्त्रे भूते इति भूतिहेतुत्वेन देवताया निर्देशात् भूतिं ऐश्वर्यं उपावर्तते प्राप्नोति । इमं यजमानं अंहसो

ह । भूतिमेवोपावर्तते । मुञ्चेमम॰हस इत्याह । अ॰हस एवैनं मुञ्चति । [8]अङ्गुष्ठाभ्यां जुहोति ॥ ३ ॥ अन्तत एव निरृतिं निरवदयते । [9]कृष्णं वासः कृष्णतूषं दक्षिणा । एतद्वै निरृत्यै रूपम् । रूपेणैव निरृतिं निरवदयते । अप्रतीक्षमायन्ति । निरृत्या अन्तर्हित्यै । [10]स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति । आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते । आनुमतेन प्रचरति । इयं वा अनुम-

---

मुञ्चेति मन्त्रेऽभिधानात् एनं यजमानं अंहसः सकाशात् मुञ्चत्येव मोचयत्येव देवता सा ॥

[8]चोदकप्राप्तं जुह्वा होममपवदितुमाह—अङ्गुष्ठाभ्यामिति ॥ अन्तत एव हस्ताग्रेणैव निरृतिं निरवदयते निवारयति ॥

[9]मुख्यब्राह्मणे (सं १–८ प्रपाठके) विहितां दक्षिणां प्रशंसति—कृष्णमिति ॥ कृष्णतूषं कृष्णदशान्तम् । निरृत्यै निरृत्याः राक्षसजातेः पापरूपाया रूपं देहः कृष्णवर्णः । रूपेणैव तदीयरूपात्मनैव दक्षिणाद्रव्येण निरृतिं विनाशयति । अप्रतीक्षं पृष्ठभागदर्शनरहितं आयन्ति प्रत्यागच्छन्ति अन्तर्हित्यै अदर्शनाय ॥

[10]स्वाहेत्यादि ॥ गतम् ॥

तिः ॥ ४ ॥ इयमेवास्मै राज्यमनु मन्यते । [11]धेनुर्दक्षिणा । इमामेव धेनुं कुरुते । [12]आदित्यं चरुं निर्वपति । उभयीष्वेव प्रजास्वभिषिच्यते । दैवीषु च मानुषीषु च । वरो दक्षिणा । वरो हि राज्यꣳ समृद्ध्यै । [13]आग्नावैष्णवमेकादशकपालं निर्वपति । अग्निस्सर्वा देवताः ॥ ५ ॥ विष्णुर्यज्ञः । देवताश्चैव यज्ञं चाव रुन्धे । वामनो वही दक्षिणा । यद्वही । तेनाग्नेयः । यद्वामनः । तेन वैष्णवस्समृद्ध्यै । [14]अग्नीषोमीयमेकादशकपालं निर्व-

[11]धेनुः नवसूतिका । इमामेव अनुमतिरूपां भूमिमेव ॥

[12]आनुमतादन्यान् दिनान्तरेष्वनुष्ठेयान् सप्त मुख्यान् यागान् प्रशंसति—आदित्यमिति ॥ अनुमतिः मानुषभूमिः अदितिः देवभूमिरिति उभयीषु दैवीषु मानुषीषु च प्रजासु अभिषिच्यते । वरः गौः । राज्यं राजगृहार्हम् ॥

[13]अग्निस्सर्वा इति ॥ अन्यत्राप्याम्नातम्—'ते देवा अग्नौ तनूस्संन्यदधत । तस्मादाहुः । अग्निस्सर्वा देवताः' इति[1] । 'यज्ञो वै विष्णुः'[2] इति च । वामनः ह्रस्वाङ्गः । वही भारवाहनदेशवान् बलीवर्दः ॥

[14]अग्नीषोमीयमिति ॥ अग्नीषोमीयस्य वैरिघातित्वं याजमानमन्त्रब्राह्मणयोः वृत्रवधब्राह्मणे च प्रसिद्धम् ॥

[1]ब्रा. १-२-८. [2]सं. १-७-४.

पति । अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति । यदग्नीषोमीयमेकादशकपालं निर्वपति ॥ ६ ॥ वार्त्रघ्नमेव विजित्यै । हिरण्यं दक्षिणा समृद्ध्यै । [15]इन्द्रो वृत्रꣳ हत्वा । देवताभिश्चेन्द्रियेण च व्यार्धयत । स एतमैन्द्राग्नमेकादशकपालमपश्यत् । तन्निरवपत् । तेन वै स देवताश्चेन्द्रियं चावारुन्ध। यदैन्द्राग्नमेकादशकपालं निर्वपति । देवताश्चैव तेनेन्द्रियं च यजमानोऽव रुन्धे । ऋषभो वही दक्षिणा ॥ ७ ॥ यद्वही । तेनाग्नेयः । यदृषभः । तेनैन्द्रस्समृद्ध्यै । [16]आग्नेयमष्टाकपालं निर्वपति । ऐन्द्रं दधि । यदाग्नेयो भवति । अग्निर्वै यज्ञमुखम्। यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते । यदैन्द्रं दधि ॥ ८ ॥ इन्द्रियमेवाव रुन्धे । ऋषभो वही दक्षिणा । यद्वही । तेनाग्नेयः । यदृषभः । तेनैन्द्रस्समृद्ध्यै ।

---

[15]मुख्यब्राह्मणगतेनैन्द्रेण सह विकल्पितमैन्द्राग्नं प्रस्तुत्य विधत्ते—इन्द्र इति ॥ व्यार्ध्यत वियुक्तोऽभूत् । ऋषभः सेक्ता, खेलगतिर्वा ॥

[16]अग्निर्वा इति ॥ अग्निमन्तरेण यज्ञस्याप्रवृत्तेः यज्ञमुखत्वम् । तादृशाभिः प्रथमहविःप्रदानेन यागस्यादावेव समृद्धिं धृतवान्भवति । द्विहाविष्कोऽयं यागः ॥

[17]यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः पराऽभवन् । आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय ॥ ९ ॥ [18]देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् । तावेतमैन्द्राग्नं द्वादशकपालं निरवृणाताम् । यदैन्द्राग्नो भवत्युज्जित्यै । द्वादशकपालो भवति । द्वादश मासास्संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । वैश्वदेवश्चरुर्भवति । वैश्वदेवं वा अन्नम् । अन्नमेवास्मै स्वदयति ॥ १० ॥ प्रथमजो वथ्सो दक्षिणा समृद्ध्यै । [19]सौम्यꣳ श्यामाकं चरुं निर्वपति । सोमो वा अकृष्टपच्यस्य राजा । अकृष्टपच्यमेवास्मै

[17]ऐन्द्राग्नवैश्वदेवसौम्येषु दाक्षिणाद्वयस्य पृथक्छ्रवणेऽपि कर्मैकत्वासिद्ध्यर्थं आग्रयणवतीं सङ्घरूपां विधातुं प्रस्तौति—यावतीरिति ॥ यावतीः यावत्यः प्रजाः अहुतानां ओषधीनां अहुता ओषधीः आश्नन् कर्मणश्शेषत्वविवक्षया षष्ठी । आग्रयणं सङ्घीभावः हुताद्याय हुतानामेव ओषधीनां अदनाय ॥

[18]तादृशसङ्घे ऐन्द्राग्नादीन त्रीन् यागान् जयहेतुत्वादिना प्रशंसति—देवा वा इति ॥ अस्मै इति । 'रुच्यर्थानाम्' इति संप्रदानतया चतुर्थी ॥

[19]सौम्यमिति ॥ प्रतिग्रहमन्त्रे "सोमाय वासः"[1] इति श्रवणात् ॥

[1]आ. ३-१०.

स्वदयति । वासो दक्षिणा । सौम्यꣳ हि देवतया वासस्समृद्ध्यै । [20]सरस्वत्यै चरुं निर्वपति । सरस्वते चरुम् । मिथुनमेवाव रुन्धे । मिथुनौ गावौ दक्षिणा समृद्ध्यै । [21]एति वा एष यज्ञमुखादृद्ध्याः । योऽग्नेर्देवताया एति । [22]अष्टावेतानि हवीꣳषि भवन्ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति ॥ ११ ॥

ईयुर्निरवदयतेऽङ्गुष्ठाभ्यां जुहोत्यनुमतिर्देवता निर्वपति वही दक्षिणा यदैन्द्रं दध्यपराभावाय स्वदयति गावौ दक्षिणा समृद्ध्यै षट् ॥ १ ॥

---

[20]सारस्वतयागं प्रशंसति—सरस्वत्या इति ॥

[21]अत्र द्रव्यदेवतासम्बन्धानामष्टभ्योऽधिकत्वात् यागेष्वप्याधिक्यशङ्कावारणाय अष्टसङ्ख्यां विधातुं प्रस्तौति—एतीति ॥ एति पृथग्भवति अपगच्छति । वक्ष्यमाणप्रकारेणाग्नेः अष्टत्वसङ्ख्यात्मकत्वात् तत्सङ्ख्याया अपगम एव अग्निसकाशादपगमः । योऽग्नेः अष्टत्वात्मकात् अपगच्छति स यज्ञमुखात् यज्ञप्रारम्भात् ऋद्ध्याः यज्ञसमाप्तेश्च अपगच्छति ॥

[22]अष्टेति ॥ गायत्र्या अग्नेश्च मुखजत्वेन सहोत्पन्नत्वलक्षणः सम्बन्धः । तेनैव तेषां हविश्शब्दवाच्यानां कर्मणामष्टत्वेन यज्ञप्रारम्भसमाप्तिभ्यां अग्निदेवतायाश्च नापगच्छति ॥

इति षष्ठे प्रथमः.

[1]वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । तास्सृष्टा न प्राजायन्त । सोऽग्निरकामयत । अहमिमाः प्रजनयेयमिति । स प्रजापतये शुचमदधात् । सोऽशोचत्प्रजामिच्छमानः । तस्माद्यं च प्रजा भुनक्ति यं च न । तावुभौ शोचतः प्रजामिच्छमानौ । [2]तास्वग्निमप्यसृजत् । ता अग्निरध्यैत् ॥ १२ ॥ सोमो रेतोऽदधात् । सविता प्रा-

---

[1]सन्ति राजसूये चातुर्मास्यहवींषि । तत्र वैश्वदेवपर्वहवींषि स्तौति—वैश्वदेवेनेति ॥ वैश्वदेवाख्यं कर्मानुष्ठाय तेनैवाहितः प्रजापतिः प्रजा असृजत। तास्सृष्टाः प्रजा न प्राजायन्त न स्वापत्यानि लेभिरे । सः तासु प्रजासु मध्ये स्थितः अग्निः अहं प्रजाः प्रजनयेयमिति अकामयत । सः एवं कामयमानः अग्निः प्रजापतये शुचं शोकं अदधात् । प्रजापतिसृष्टानां प्रजानामपत्याभावस्य अपत्योत्पादनकामिना वह्निना स्मारितत्वात्प्रजापतौ वह्निश्शोकोत्पादक उच्यते । यस्मात्पुत्रवान् प्रजापतिः पौत्रमिच्छन्नशोचत् यस्मात्पुत्राभावादग्निरशोचत् तस्मात् लोकेऽपि यं पितरं उत्पन्ना प्रजा पुत्ररूपा भुनक्ति पालयति यं च अपत्यरहितं अनुत्पन्ना प्रजा न पालयति तावुभौ पौत्ररूपां पुत्ररूपां च प्रजां इच्छमानौ शोचतः ॥

[2]तासु स्वासु प्रजासु प्रजापतिः प्रजामुत्पादयितुं अग्निं असृजत् अभ्यनुज्ञातवान् । तथा अनुज्ञातस्सः अग्निः प्रजाः अध्यैत् मासवान् मिथुनभावेन सङ्गतवान् । अतः सोम आग्नेयं रेतः तासु प्रजासु

जनयत् । सरस्वती वाचमदधात् । पूषाऽपोषयत् । ते वा एते त्रिस्संवत्सरस्य प्रयुज्यन्ते । ये देवाः पुष्टिपतयः । संवत्सरो वै प्रजापतिः । संवत्सरेणैवास्मै प्रजाः प्राजनयत् । [3]ताः प्रजा जाता मरुतो घ्नन् । अस्मानपि न प्रायुक्षतेति ॥ १३ ॥ स एतं प्रजापतिर्मारुतꣳ सप्तकपालमपश्यत् । तं निरवपत् । ततो वै प्रजाभ्योऽकल्पत । यन्मारु-

गर्भभावेन धारितवान् । ततः सविता प्रसवकाले प्राजनयत् प्रजाः । तेषु अपत्येषु सरस्वती वाचं अदधात् संभाषितुं अभ्यासं कारयामास । ततः सम्भाषमाणान् बालकान् पूषा अपोषयत् अभ्यवर्धयत् । ये देवाः अग्निसोमादयः पुष्टिपतयः अपत्यपोषकाः त एते अग्न्यादयः पूषान्ताः पञ्च देवाः पुष्टिकरत्वेन संवत्सरस्य मध्ये चातुर्मास्येषु त्रिः प्रयुज्यन्ते । वैश्वदेववरुणप्रघाससाकमेधाख्येषु पर्वसु पञ्चानामेतेषां आग्नेयादीनां संचारितत्वात् । सोऽयं प्रयोगत्रयकालः संवत्सर एव प्रजापतिः तत्स्वरूपः । अतः प्रजापतिरूपेण प्रयोगत्रययुक्तेन संवत्सरेणैव अस्मै अनुष्ठात्रे प्रजाः प्राजनयत् ॥

[3]एवं पञ्चयागान्प्रशस्य षष्ठं यागं प्रशंसति—मरुतः ताः जाताः प्रजाः हतवन्तः । केनाभिप्रायेण अस्मानपि एतस्मिन् वैश्वदेवे कर्मणि न प्रायुक्षत न प्रयुक्तवत्यः एताः प्रजा इति । प्रजाभ्योऽकल्पत प्रजारक्षणसमर्थोऽभूत् । यज्ञस्य क्लृप्त्यै संपूर्त्यै । प्रजानां अघाताय अहिंसायै ॥

तो निरुप्यते । यज्ञस्य क्लृप्त्यै । प्रजानामघाताय । [4]सप्तकपालो भवति । सप्तगणा वै मरुतः । गणश एवास्मै विशं कल्पयति । [5]स प्रजापतिरशोचत् ॥ १४ ॥ याः पूर्वाः प्रजा असृक्षि । मरुतस्ता अवधिषुः । कथमपराः सृजेयेति । तस्य शुष्म आण्डं भूतं निरवर्तत । तद्व्युदहरत् । तदपोषयत् । तत्प्राजायत । आण्डस्य वा एतद्रूपम् । यदामिक्षा । यद्व्युद्धरति ॥ १५ ॥ प्रजा एव तद्यजमानः पोषयति । [6]वैश्वदेव्यामिक्षा भवति । वैश्वदेव्यो वै प्र-

[4]तत्र कपालसङ्ख्यां प्रशंसति—सप्तानां समूह एकैको गणः तादृशा गणाः सप्तसङ्ख्याकाः यत्र ते मरुतः । गणश एव सङ्घरूपां विशं प्रजां अस्मै यजमानाय कल्पयति सप्तकपालो मारुतः ॥

[5]सप्तमयागे द्रव्यं प्रशंसति—याः पूर्वाः प्रजा असृक्षि सृष्टाः ताः मरुतः अवधिषुः इति एवं सः प्रजापतिः अशोचत् । तस्य तथा शोचतः प्रजापतेः शुष्मः बलं आण्डं भूतं अण्डवत्पिण्डाकारं निरवर्तत निर्वृत्तम् । तत् तथा निर्वृत्तं व्युदहरत् विभज्योद्धृतवान् । उद्धृत्य च तत् पोषयित्वा प्रजारूपेण उदपादयत् । पिण्डरूपाया आमिक्षाया अण्डरूपत्वात् तद्व्युद्धरणेन प्रजापतिवत् यजमानः प्रजाः पोषयति । अनेन च अर्थवादेन अपूर्वार्थत्वात् व्युद्धरेदिति विधिरुन्नेतव्यः ॥

[6]तत्र देवतां प्रशंसति—वैश्वदेवीति ॥ बहुभिः देवैः अग्न्यादिभिः उक्तप्रकारेणोत्पादितत्वात् प्रजानां वैश्वदेवत्वम् ॥

जाः । प्रजा एवास्मै प्रजनयति । [7]वाजिनमानं-
यति । प्रजास्वेव प्रजातासु रेतो दधाति । [8]द्यावा-
पृथिव्य एककपालो भवति । प्रजा एव प्रजाता
द्यावापृथिवीभ्यामुभयतः परि गृह्णाति । [9]देवासुरा-
स्संयत्ता आसन् । सोऽग्निरब्रवीत् ॥ १६ ॥ मामग्रे यज-
त । मया मुखेनासुराञ्जेष्यथेति । मां द्वितीयमिति
सोमोऽब्रवीत् । मया राज्ञा जेष्यथेति । मां तृतीय-
मिति सविता । मया प्रसूता जेष्यथेति । मां चतु-
र्थीमिति सरस्वती । इन्द्रियं वोऽहं धास्यामीति ।
मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति ॥
१७ ॥ तेऽग्निना मुखेनासुरानजयन् । सोमेन रा-

[7]विभज्योद्धृतयोः आमिक्षाभागयोः वाजिनसेचनं विधत्ते—वाजिनमिति ॥ दध्यानयनेन घनीभूतामिक्षाशब्दवाच्यक्षीरपिण्डस्य प्रजारूपेणाविर्भावः पूर्वार्थवादे निरूपितः । अतः तस्मिन्पिण्डे वाजिनाख्येन क्षीरगतनीरेण सेचने सति प्रजातासु प्रजासु रेतो धारितं भवति ॥

[8]अष्टमयागे देवतां प्रशंसति—द्यावापृथिव्येति ॥

[9]अत्रादावुक्तानां पञ्चानां पाठप्राप्तं क्रमं प्रशंसति—देवासुरा इति॥ लोके युद्धार्थमुद्यतायां सेनायां केचन शूरा भटा मुखतो योद्धुं गच्छन्ति । तेषां युद्धं द्रष्टुं कश्चिद्राजा स्वामित्वेन सन्निधत्ते । केचन

ज्ञाँ । सवि॒त्रा प्रसूताः । सरस्वतीन्द्रि॒यमंदधात् । पूषा प्रति॒ष्ठाऽऽसीत् । तत॒ो वै दे॒वा व्यंजयन्त । यदे॒तानि॑ ह॒वीꣳषि॑ निरु॒प्यन्ते॑ विजि॑त्यै । [10]नोत्त॑रवे॒दिमुप॑ वपति । प॒शवो॒ वा उत्त॑रवे॒दिः । अजा॑ता इव॒ ह्येतर्हि॑ प॒शवः॑ ॥ १८ ॥

ऐ॒दित्यंशोचद्वयुद्धरेत्यब्रवीत्प्रति॒ष्ठया॑ जेष्य॒थेत्ये॒तर्हि॑ प॒शवः॑ ॥ २ ॥

दण्डहस्ताः पृष्ठतः स्थित्वा योद्धृनपरावृत्तये बलात्प्रेरयन्ति । अन्ये केचन दुन्दुभ्यादिजयघोषेण योद्धृणामुत्साहं जनयन्ति । अपरा कियत्यपि सेना पुरोगतायाः सेनायाः पृष्ठतस्सहायत्वेनावतिष्ठते । तानेतान्पञ्चविधव्यापारान् अग्न्यादयः क्रमेण स्वीकृतवन्तः । ततो देवानां जयोऽभूत् । ततोऽत्रापि पञ्चहविषां निर्वापे जयो भवति ॥

[10]शाखान्तरगतेन 'उपवपन्ति' इत्यादिवाक्येन वैश्वदेवादिषु चतुर्षु चातुर्मास्यपर्वसु साधारण्येनोत्तरवेद्युपवापः प्राप्तः । तमुपवापं वैश्वदेवपर्वणि प्रतिषेधति—नोत्तरवेदिमिति ॥ उत्तरवेदिसमीपे तदाभिमुख्येन पशूनां बन्धनादुत्तरवेदेः पशुत्वम् । पूर्वोक्तरीत्या वैश्वदेवस्य प्रजासृष्टिसाधनत्वात् स्रष्टव्यासु प्रजास्वन्तर्भूतानां पशूनां वैश्वदेवादूर्ध्वमुत्पत्तिकालो न त्विदानीम् । अतः पशुरूपा उत्तरवेदिः नात्रोपवपनीया ॥

इति षष्ठे द्वितीयः ॥

[1]त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्बं गर्भो जरायु । तदेव तन्मिथुनम् । [2]त्रेधा बर्हिस्संनद्धं भवति । त्रयं इमे लोकाः । एष्वेव लोकेषु प्रति तिष्ठति । [3]एकधा पुनस्संनद्धं भवति । एक इव ह्ययं लोकः ॥ ११ ॥ अस्मिन्नेव तेन लोके प्रति तिष्ठति । [4]प्रसुवो भवन्ति । प्रथमजामेव पुष्टिमव रुन्धे । प्रथमजो वत्सो दक्षिणा

---

[1]वैश्वदेवपर्वगतान्येव विशेषाङ्गानि विधीयन्ते । तत्र चोदकप्राप्तस्य बर्हिषस्त्रैगुण्यं विधत्ते—त्रिवृदिति ॥ मात्रादित्रयं यदस्ति तदेव पुत्रयुक्तत्वात् तन्मिथुनं सार्थकम् । गर्भस्यान्तर्वेष्टनं उल्बम् । बहिर्वेष्टनं जरायु । गर्भादित्रयं यदस्ति तदेव सारभूतेन गर्भेणोपेतत्वात् तन्मिथुनं सफलम् । उल्बजराय्वोर्द्वित्वसाम्येन मिथुनत्वम् । बर्हिषस्त्रैगुण्ये सति यथोक्तमिथुनद्वयसाम्यं सम्पद्यते ॥

[2]प्रकृतौ दर्भमुष्टीनां पृथग्बन्धनं न विहितम् । इह तु मुष्टित्रयस्य पृथग्बन्धनं विधत्ते—त्रेधेति ॥

[3]पृथग्बद्धानां त्रयाणां मुष्टीनां पुनर्मिळित्वा बन्धनं विधत्ते—एकधेति ॥

[4]चोदकेन सामान्यतः प्राप्तानां दर्भाणां पुष्पितत्वरूपं विशेषं विधत्ते—प्रसुव इति ॥ प्रसूनोपेताः दर्भाः प्रसुवः । प्रथमज इति । स्पष्टम् ॥

समृद्ध्यै । [5]पृषदाज्यं गृह्णाति । पशवो वै पृषदाज्यम् । पशूनेवाव रुन्धे । [6]पञ्चगृहीतं भवति । पाङ्क्ता हि पशवः । [7]बहुरूपं भवति ॥ २० ॥ बहुरूपा हि पशवस्समृद्ध्यै । [8]अग्निं मन्थन्ति । अग्निमुखा वै प्रजापतिः प्रजा असृजत । यदग्निं मन्थन्ति । अग्निमुखा एव तत्प्रजा यजमानस्सृजते । [9]नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवीꣳषि । द्वावाघारौ । द्वावाज्यभागौ ॥ २१ ॥ त्रिꣳशथ्संपद्यन्ते । त्रिꣳशदक्षरा विराट् । अन्नं विराट् । वि-

[5]अनूयाजार्थस्य द्रव्यस्य गुणं विधत्ते—पृषदिति ॥ दधिमिश्रमाज्यं पृषदाज्यम् ॥

[6]ग्रहणे संख्यां विधत्ते—पञ्चेति ॥ सपुच्छपादैः पञ्चभिर्युक्तत्वात् पङ्क्तिच्छन्दसः साध्यत्वाद्वा पशूनां पाङ्क्तत्वम् ॥

[7]मिश्रणं प्रशंसति—बह्विति ॥ दधिबिन्दूनां आज्यबिन्दूनामनेकरूपत्वात् बहुरूपत्वम् । गोमहिषादिरूपेण पशवो बहुरूपाः॥

[8]हविरासादनादूर्ध्वं सामिधेनीभ्यः पुरा मन्थनं विधत्ते—अग्निमिति ॥ अग्नेः प्रथमसृष्टत्वात् प्रजानामग्निमुखत्वम् ॥

[9]शाखान्तराभिहितां प्रयाजानूयाजसङ्ख्यां हृदि निधाय यागं प्रशंसति—नवेति ॥ दशाक्षरपादैस्त्रिभिर्युक्तस्य विराट्छन्दसः त्रिंशदक्षरत्वम् ॥

राजैवान्नाद्यमव रुन्धे। [10]यजमानो वा एकंकपालः। तेज आज्यंम्। यदेकंकपाल आज्यंमानयंति। यजंमानमेव तेजंसा समर्धयति। यजंमानो वा एकंकपालः। पशव आज्यंम् ॥ २२ ॥ यदेकंकपाल आज्यंमानयंति। यजंमानमेव पशुभिस्समंर्धयति। [11]यदल्पमानयेंत्। अल्पा एनं पशवों भुञ्जन्त उपं तिष्ठेरन्। यद्बह्वानयेंत्। बहव एनं पशवोऽभुञ्जन्त उपंतिष्ठेरन्। बह्वानीयाविः पृष्ठं कुर्यात्। बहव एवैनं पशवों भुञ्जन्त उपंतिष्ठन्ते। [12]यजंमानो वा

[10]अलङ्करणकाले आज्येनैककपालमभिपूरयतीत्यापस्तम्बेन यदुक्तं तदिदं द्वेधा प्रशस्य विधत्ते—यजमान इति ॥

[11]विशेषान्तरं विधातुं प्रस्तौति—यदल्पमिति ॥ भुञ्जन्तः पालयन्तः। अभुञ्जन्तः अपालयन्तः। पशूनामल्पत्वमपालयितृत्वं चेति दोषौ। बहुत्वं पालयितृत्वं चेति गुणौ। तत्र गुणसंपादनेन प्रशंसन् विधत्ते—बह्वानीयेति। बहुन्याज्ये पुरोडाशस्य पृष्ठमतिमज्ज्य यथा दृश्यते तथा तावत् बहु आज्यमानयेत्। तथा सति आज्यस्य बहुत्वात् पशूनामल्पत्वदोषो न भविष्यति। पुरोडाशपृष्ठस्याविर्भूतत्वात् अपालयितृत्वमपि न भवति ॥

[12]कृत्स्नस्यापि पुरोडाशस्य होमं विधातुं प्रस्तौति—यजमान इति ॥ इतरपुरोडाशेषु भक्षणाद्यर्थमवशेष्य किञ्चिदेवावद्येत।

एकंकपालः । यदेकंकपालस्यावृद्येत् ॥ २३ ॥ य-
जंमानस्यावंद्येत् । उद्वा माद्येद्यजंमानः । प्र वा
मीयेत । [13]सकृदेव होतव्यंः । सकृदिव हि सुवर्गो
लोकः । [14]हुत्वाऽभि जुंहोति । यजंमानमेव सुवर्गं
लोकं गमयित्वा । तेजंसा समंर्धयति । यजंमानो
वा एकंकपालः । सुवर्गो लोक आंहवनीयंः॥२४॥
यदेकंकपालमाहवनीयें जुहोति । यजंमानमेव
सुवर्गं लोकं गमयति । [15]यद्धस्तेन जुहुयात् । सु-
वर्गाल्लोकाद्यजंमानमवंविध्येत् । स्रुचा जुंहोति ।

---

तद्वदत्राप्यवदानेन यजमानस्यावयवः छिद्येत । अथ वा उन्मत्तो भवेत् । यद्वा प्रमीयेत ॥

[13]कृत्स्नहोमं विधत्ते—सकृदेवेति ॥ सकृदेव कृत्स्न एव । स्वर्गलोकस्य सकृत्त्वमखण्डितत्वम् ॥

[14]एककपाले पूर्वमानीतस्य बह्वाज्यस्य होमं विधत्ते—हुत्वेति ॥ आदौ पुरोडाशं हुत्वा तस्य उपर्याज्यं जुहुयात् ॥

[15]कयाचिदुपपत्त्या पुरोडाशस्य चोदकप्राप्तं स्रुचा होममपोद्य हस्तेन होमः प्रसक्तः । तद्वारणाय स्रुचा होमस्य प्रतिप्रसवं विधत्ते—यदिति ॥ अवविध्येत् प्रच्यावयेत् । पुरोडाशो येन सन्निवेशेन पात्रेऽवस्थितः तेनैव सन्निवेशेनाग्नौ तस्य स्थितिः

सुवर्गस्य लोकस्य समष्ट्यै । [16]यत्प्राङ्पद्येत । देवलोकमभि जयेत् । यद्दक्षिणा पितृलोकम् । यत्प्रत्यक् ॥ २५ ॥ रक्षाꣳसि यज्ञꣳ हन्युः । यदुदङ् । मनुष्यलोकमभिजयेत् । [17]प्रतिष्ठितो होतव्यः । एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनु प्रतितिष्ठतः । द्यावापृथिवी ऋतवः । ऋतून् यज्ञः । यज्ञं यजमानः । यजमानं प्रजाः । तस्मात्प्रतिष्ठितो होतव्यः ॥ २६ ॥ [18]वाजिनो यजति । अग्निर्वायुस्सूर्यः । ते वै वाजिनः । तानेव तद्यजति । अथो

---

शाखान्तरे विहिता । स्रुचा हूयमानस्त्ववाङ्मुखो वह्नौ पतेत् । अतः तद्विरोधं परिहर्तुं हस्तेन होतव्यं इत्येषा मन्दानामुपपत्तिः ॥

[16]हुतस्य पुरोडाशस्य नैश्चल्यं विधातुं प्रस्तौति—यत्प्राङिति ॥ यद्यपि लोकादिजयो न स्वरूपेण जयः । तथाऽप्यभिकफलभावनायां सत्यां तावन्मात्रत्वं दोष एव ॥

[17]विधत्ते—प्रतिष्ठित इति ॥ प्रागादिदिक्षु पतनपरिहारेण होमस्थान एव प्रतिष्ठितः निश्चलो यथा भवति तथा होतव्यः । ऋतव इत्यादिषु अनुप्रतितिष्ठन्तीत्यादिकं द्रष्टव्यम् । तस्मादिति । पूर्वस्य विधेरुपसंहारः ॥

[18]वैश्वदेव्यामिक्षया निस्सृतं वाजिनशब्दाभिधेयं यन्नीरं तस्य वाजिसंज्ञकान् देवानुद्दिश्य यागं विधत्ते—वाजिन इति ॥

खल्वाहुः । छन्दाꣳसि वै वाजिन इति । तान्येव तद्यजति । [19]ऋक्सामे वा इन्द्रस्य हरी सोमपानौ। तयोः परिधय आधानम् । वाजिनं भागधेयम् ॥ २७ ॥ यदप्रहृत्य परिधीञ्जुहुयात् । अन्तराधानाभ्यां घासं प्रयच्छेत् । [20]प्रहृत्य परिधीञ्जुहोति । निराधानाभ्यामेव घासं प्रयच्छति । [21]बर्हिषि विषिञ्चन्वाजिनमानयति । प्रजा वै बर्हिः । रेतो वाजिनम् । प्रजास्वेव रेतो दधाति । [22]समुपहूय भ-

[19]तस्य यागस्य कालं वि[illegible]तुं प्रस्तौति—ऋगिति ॥ हरी अश्वौ । तयोः वशीकरणाय मुखे प्रक्षिप्तो लोहविशेष आधानम् । अन्तः मुखमध्येऽवस्थितमाधानं ययोस्तावन्तराधानौ । हस्तेन मुखे प्रक्षिप्यमाणः साज्यशर्करमुद्गादिपिण्डो ग्रासः । तृणविशेषो वा । न ह्याधानेऽन्तरवस्थिते सति ग्रासो भक्षयितुं शक्यः ॥

[20]विधत्ते—प्रहृत्येति ॥ परिधीनामग्नौ प्रहारेण आधानस्य अपनीतत्वात् घासः भक्षयितुं शक्यते ॥

[21]तत्र पात्रे ग्रहणकाले पात्रस्याभिरक्षणेन अधोऽवस्थितस्य बर्हिषः विशेषेण सेचनं विधत्ते—बर्हिषीति ॥

[22]सोमवत् परस्परोपहवपूर्वकं भक्षणमप्राप्तत्वादिह विधत्ते—समुपहूयेति ॥ वाजिनयागस्य सान्नाय्यविकृतित्वेऽपि सान्नाय्यवदिडाभक्षणं

क्षयन्ति । एतथ्सोमपीथा ह्येते । अथो आत्मन्नेव रेतो दधते । [23]यजमान उत्तमो भक्षयति । पशवो वै वाजिनम् । यजमान एव पशून्प्रतिष्ठापयन्ति ॥

लोको बहुरूपं भवत्याज्यभागौ पशव आज्यमवद्येदाहवनीयः प्रत्यक्तस्मात्प्रतिष्ठितो होतव्यो भागधेयमेते चत्वारि च ॥ ३ ॥

[1]प्रजापतिस्सविता भूत्वा प्रजा असृजत । ता एनमत्यमन्यन्त । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत् । ताः प्रजा व-

---

न कर्तव्यम् । किन्तु सोमवद्भक्षयेत् । एतदेव वाजिनभक्षणं सोमपीथः सोमपानं येषां ऋत्विजां ते एतत्सोमपीथाः ॥

[23]वाजिनभक्षणे यजमानस्य चरमभक्षणं विधत्ते—यजमान इति ॥ स्पष्टम् ॥

इति षष्ठे तृतीयोऽनुवाकः.



[1]प्रजापतिस्सवितेत्यादि ॥ सविता सर्वस्य अनुज्ञाता आदित्य एव भूत्वा प्रजा असृजत प्रजापतिः । ताः सर्वा अनुजायमानाः एनं प्रजापतिं अत्यमन्यन्त तदभिप्रायमतिक्रम्य कर्तव्यान्यमन्यन्त ।

रुणगृहीताः । प्रजापतिं पुनरुपाधावन्नाथमिच्छमानाः । स एतान्प्रजापतिर्वरुणप्रघासानपश्यत् । तान्निरवपत् । तैर्वै स प्रजा वरुणपाशादमुञ्चत् । यद्वरुणप्रघासा निरुप्यन्ते ॥ २१ ॥ प्रजानामवरुणग्राहाय । [2]तासां दक्षिणो बाहुर्न्यङ्क आसीत् । सव्यः प्रसृतः । स एतां द्वितीयां दक्षिणतो वेदिमुदहन् । ततो वै स प्रजानां दक्षिणं बाहुं प्रासारयत् । यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति । प्रजानामेव तद्यजमानो दक्षिणं बाहुं प्रसारयति । तस्माच्चातुर्मास्ययाज्यमुष्मिन्लोक उभयाबाहुः । यज्ञाभिजितꣳ ह्यस्य । [3]पृथमात्राद्वेदी असंभिन्ने भ-

ताः प्रजा अस्मात् प्रजापतेस्सकाशात् अपाक्रामन् अपक्रान्ताश्च ततः प्रजापतेः। अथ प्रजापतिः वरुणो भूत्वा वरुणेन वारकेण वरुणपाशेन अग्राहयत् ॥

[2]तासामित्यादि ॥ न्यङ्कः अन्तर्निमग्नः । अञ्चतेर्निष्ठानत्वं छान्दसं, तस्यासिद्धत्वात्कुत्वम् । प्रसृतः प्रततः प्रसारितः । स एतामित्यादि । उदहन् उद्धन्ति स्म घातवानित्यर्थः । ततो वा इत्यादि । वेदिद्वयप्रसारणं बाहुद्वयप्रसारणहेतुरासीत् । उभयाबाहुरिति । उभयबाहुकार्यकुशलः अमुष्मिन् लोके स्थाने आगमिष्यति जने । छान्दसं पूर्वपदस्य दीर्घत्वम् । यज्ञेनाभिजितं अस्यैतत् सामर्थ्यम् ॥

वतः ॥ ३० ॥ तस्मात्पृथमात्रं व्यꣳसौ । [4]उत्तर-
स्यां वेद्यामुत्तरवेदिमुप वपति । पशवो वा उत्तर-
वेदिः । पशूनेवाव रुन्धे । अथो यज्ञपरुषोऽनन्तरि-
त्यै । [5]एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । अथैष ऐं-
न्द्राग्नो भवति । प्राणापानौ वा एतौ देवानाम् ।
यदिन्द्राग्नी । यदैन्द्राग्नो भवति ॥ ३१ ॥ प्राणापा-
नावेवाव रुन्धे । ओजो बलं वा एतौ देवानाम् ।
यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ओजो बलमेवाव
रुन्धे । [6]मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी

---

[3]पृथमात्रादिति ॥ पृथः त्रयोदशाङ्गुलः । पचाद्यच्, संप्रसारणम् । तावताऽन्तराळेन वेदी असंभिन्ने असंसृष्टे भवतः । तस्मादिति । पृथमात्रं विश्लिष्य अंसौ वर्तेते । ससाधनां क्रियां उपसर्ग आचष्टे ॥

[4]उत्तरस्यामित्यादि ॥ गतम् । सामर्थ्यात् दक्षिणं बहिरुत्तरवेदिरिति गम्यते । अथो इति । यज्ञावयवस्य अनन्तरित्यै अबहिष्कारार्थं उभयोः बहिष्करणे अन्तरितैव वेदिस्स्यात ॥

[5]एतद्ब्राह्मणान्येवेत्यादि ॥ एतदिति अनन्तरोदितं वैश्वदेवब्राह्मणं निर्दिशति । एतत् ब्राह्मणं येषां तान्येव पञ्च हवींषि अष्टानामाद्यानि अत्रापि द्वितीये पर्वणि भवन्ति । अथ हविरन्तरब्राह्मणम्—ऐन्द्राग्न इत्यादि । गतम् ॥

च मेषश्च भवतः । मिथुना एव प्रजा वरुणपाशान्मुञ्चति । लोमशौ भवतो मेध्यत्वाय ॥ ३२ ॥ शमीपर्णान्युप वपति । घासमेवाभ्यामपि यच्छति। प्रजापतिमन्नाद्यं नोपानमत् । स एतेन शतेध्मेन हविषाऽन्नाद्यमवारुन्ध । यत्परश्शतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै । [7]सौम्यानि वै करीराणि । सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति । यत्करीराणि भवन्ति । सौम्ययैवाहुत्या दिवो वृष्टिमव रुन्धे । [8]काय एककपालो भवति । प्रजानां कत्वाय । [9]प्रतिपूरुषं करम्भपात्राणि भवन्ति । जाता एव प्रजा वरुणपाशान्मुञ्चति।

---

[6]मिथुना इति ॥ मेषमेष्योर्मिथुनत्वात् मिथुनाः स्त्रीपुंसात्मिकाः प्रजा मुञ्चति । लोमशौ ऊर्णाभिश्छन्नौ । लोमादिलक्षणश्शः । मेध्यत्वाय ॥

[7]करीराणि खर्जूराणि खर्जूरफलानि ॥ गतमन्यत् ॥

[8]कायः प्राजापत्यः । 'कस्येत्' इतीत्वम् । कत्वं सुखवत्त्वम् । कमिति मकारान्तं सुखनाम । मत्वर्थीयो लुप्यते ॥

एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुण-
पाशान्मुञ्चति ॥ ३३ ॥

निरुप्यन्ते भवतो भवति मेध्यत्वाय
रुन्धे षट् ॥ ४ ॥

[1]उत्तरस्यां वेद्यामन्यानि हवींषि सादयति ।
दक्षिणायां मारुतीम् । अपधुरमेवैनां युनक्ति । अ
थो ओज एवासामव हरति । तस्माद्ब्राह्मणश्च क्ष-
त्त्रश्च विशोऽन्यतोपक्रमिणीः । [2]मारुत्या पूर्वया प्र

---

[9]करम्भपात्राणीति ॥ दधिसम्मिश्रास्सक्तवः करम्भाः तन्मयानि
पात्राणि ॥ स्पष्टमन्यत् ॥

इति षष्ठे चतुर्थोऽनुवाकः.

---

उत्तरस्यामित्यादि ॥ अन्यानि मारुत्या आमिक्षायाः । तां
दक्षिणायां सादयति । अपधुरमिति । धुरो यद्वामस्थानं अपधुरं
तत् बहिष्ठमिति यावत् । तत्र एना विशः अपक्रमणशीलाः पृथक्-
स्वभावाः मारुत्याः पृथक्सादितत्वात् । यद्वा—अन्यतोपाक्रमणं सत्य-
मुक्त्वा अन्यत्रासत्ये अपसर्पणम् ॥

[2]मारुत्या पूर्वया प्रथमया प्रचरितव्यम् । तेन अनृतं विशस्स्व-
भावं अन्यतोऽपक्रमणशीलत्वं अवयजते नाशयति । वारुण्योत्तरया

चरति। अनृतमेवाव यजते। वारुण्योत्तरया। अन्तत एव वरुणमव यजते। [3]यदेवाध्वर्युः करोति॥ ३४॥ तत्प्रतिप्रस्थाता करोति। तस्माद्यच्छ्रेयान्करोति। तत्पापीयान्करोति। पत्नीं वाचयति। मेध्यामेवैनां करोति। अथो तप एवैनामुप नयति। [4]यज्जारꣳ सन्तं न प्रब्रूयात्। प्रियं ज्ञातिꣳ रुन्ध्यात्। असौ मे जार इति निर्दिशेत्। निर्दिश्यैवैनं वरुणपाशेन

प्रचरितव्यम्। अन्ततो वरुणं वारकं वरुणपाशं वा अवयजते अनृतावयजनादनन्तरम्। यद्वा—अन्ततः यावदन्तं कृत्स्नं वरुणमित्यर्थः॥

[3]यदेवेत्यादि॥ यत् यज्जातीयं प्रतिप्रस्थाता करोति। श्रेयान् प्रशस्यतरः। पापीयान् अल्पतरः। पत्नीं वाचयति "प्रघास्यान्"[1] इति। मेधार्हां एनां वाचनेन करोति अथो अपि च अनेन वाचनेन एनां तप एवोपनयति॥

[4]यज्जारमित्यादि॥ अत्र प्रतिप्रस्थाता पृच्छति पत्नीं काति ते जारा इति तत्र यदि जारं विद्यमानं न प्रब्रूयात् प्रियं ज्ञातिं भर्तारं पुत्रं वा रुन्ध्यात् वरुणपाशेन ग्राहयेत्। तस्मात् असौ मे जार इति नाम्ना जारं निर्दिशेत्। एनं निर्दिश्य निर्देशं जारस्य कुर्वती एनं जारं एव वरुणपाशेन ग्राहयति न तु प्रियं ज्ञातिम्॥

[1] सं. १-८-३.

ग्राहयति ॥ ३५ ॥ [5]प्रघास्यान् हवामह इति पत्नी-
मुदानयति । अह्वतैवैनाम् । [6]यत्पत्नीं पुरोनुवाक्या-
मनु ब्रूयात् । निर्वीर्यो यजमानस्स्यात् । यजमा-
नोऽन्वाह । आत्मन्नेव वीर्यं धत्ते । उभौ याज्याꣳ
सवीर्यत्वाय । यद्ग्रामे यदरण्य इत्याह । यथोदित-
मेव वरुणमव यजते । [7]यजमानदेवत्यो वा आह-
वनीयः ॥ ३६ ॥ भ्रातृव्यदेवत्यो दक्षिणः । यदा-
हवनीये जुहुयात् । यजमानं वरुणपाशेन ग्राहयेत् ।
दक्षिणेऽग्नौ जुहोति । भ्रातृव्यमेव वरुणपाशेन ग्रा-

---

[5]प्रघास्यान् हवामह इति ॥ प्रति प्रस्थाता पत्नीमुदानयति । एनामह्वत आह्वयति । 'लिपिसिचि ह्वश्च' इत्यङ् छान्दसो लुङ् ॥

[6]यत्पत्नीति ॥ "मोषूण इन्द्र"* इत्येताम् । निर्वीर्य इति । आशासनीयेन यजमानस्यासम्बन्धात् । तस्मात् । यजमान एव अन्वाह पुरोनुवाक्याम् । तथा कुर्वन्नात्मनि वीर्यं स्थापयति उभौ पत्नीयजमानौ याज्यां ब्रूतः "यद्ग्रामे यदरण्ये"[1] इत्येताम् । यद्ग्राम इत्यादिना ग्रामादिविषयस्यैनसः कीर्तनेन यथोदितं यथोक्तं ग्रामादिविषये समस्तं वरुणं वारकं पापं अवयजते नाशयत्येव ॥

[7]यजमानदेवत्यो वा इत्यादि ॥ गतम् । देवतान्तात्तादर्थ्ये यत् । जुहुयादिति । करम्भपात्राणि ॥

---

[1]सं. १-८-३.

हयति । [8]शूर्पेण जुहोति । अन्न्यमेव वरुणमवयजते । शीर्षन्नधि निधाय जुहोति । शीर्षत एव वरुणमवयजते । प्रत्यङ्तिष्ठञ्जुहोति ॥ ३७ ॥ प्रत्यङ्ङेव वरुणपाशान्निर्मुच्यते । [9]अक्रन्कर्म कर्मकृत इत्याह । देवानृणं निरवदाय । अनृणा गृहानुपप्रेतेति वावैतदाह । [10]वरुणगृहीतं वा एतद्यज्ञस्य । यद्यजुषा गृहीतस्यातिरिच्यते । तुषाश्च निष्कासश्च । तुषैश्च

[8]अन्न्यमिति ॥ शूर्पस्य अन्नसाधनत्वात् तेन होमं कुर्वन् अन्नयं अन्ने भवं वरुणमवयजते । शीर्षत इति । शिर आरभ्य स्थितं वरुणमवयजते । प्रत्यङ् प्रत्यङ्मुखः । प्रत्यङ् प्रतीपगमन एव वरुणपाशान्निर्मुच्यते । यत्र गृहीत्वैव नयति वरुणपाशं अन्ततो निष्कृष्य प्रतिकूलमुक्त्वा आनीयते ॥

[9]अक्रन् कर्म कर्मकृत इति ॥ विपरायन्तौ जपतः । तत्र मन्त्रस्याभिप्रायमाह—देवानित्यादि । देवसंबन्धि ऋणं देवानित्युच्यते[1] । एवमनेन यागेन वरुणं निरवदाय 'यज्ञेन देवेभ्यः'[2] इत्युक्तं ऋणं देवानामपाकृत्य अनृणाः सन्तः इदानीं गृहानुपप्रेत उपसंप्राप्नुतेत्येतदर्थरूपमेव आह अयं मन्त्रः । ऋणं निरवदायेत्यनेन 'देवेभ्यः कर्म कृत्वा'[3] इत्यस्यार्थो विवृतः । गृहानुपप्रेतेत्यस्यार्थो व्याख्यातः ॥

[10]वरुणगृहीतं वा इत्यादि ॥ एतत् वरुणेन गृहीतं भवति यज्ञस्य यन्मन्त्रेण गृहीतं अतिरिच्यते पूर्ववदवशिष्टं गृहीतस्यादिस्थान-

[1] ...ऋणं देवर्णमित्युच्यते. [2]सं. ६-३-१०. [3]सं. १-८-३.

निष्कासेन चावभृथमवैति । वरुणगृहीतेनैव वरुण-
मवयजते । [1]अपोऽवभृथमवैति ॥ ३८ ॥ अप्सु
वै वरुणः । साक्षादेव वरुणमव यजते । प्रतियुतो
वरुणस्य पाश इत्याह । वरुणपाशादेव निर्मुच्यते।
अप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । एधोऽ-
स्येधिषीमहीत्याह । समिधैवाग्निं नमस्यन्त उपा-
यन्ति । तेजोऽसि तेजो मयि धेहीत्याह । तेज ए-
वात्मन्धत्ते ॥ ३९ ॥

करोति ग्राहयत्याहवनीयस्तिष्ठञ्जुहोत्यपोऽ-
वभृथमवैति धत्ते ॥ ५ ॥

मतिरेकः । कः पुनरत्रातिरिच्यत इत्याह—तुषाश्च निष्कासश्च तण्डुलावरणानि स्थालीलेपश्च । तस्मात् तुषैः निष्कासेन चावभृथमवैति इति सगुणस्यावभृथस्य विधिः । एवं कुर्वन् तेनैव वरुणगृहीतेन तुषादिना तमेव ग्रहीतारं वरुणमवयजते अवमोचयति ॥

[1]अपोऽवभृथमवैतीत्यादि ॥ गतम् । 'प्रतियुतो वरुणस्य पाशः' इत्युदकान्तं प्रत्यस्यति। 'एधोस्येधिषीमाहि' इति समिदाधानम्। नमस्यन्तः पूजयन्तः । 'नमोवरिवाश्चित्रङः क्यच्' । गतमन्यत् ॥

इति षष्ठे पञ्चमोऽनुवाकः.

[1] सं. १-४-४५.

[1]देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । ममेयमनीकवती तनूः । तां प्रीणीत । अथासुरानभि भविष्यथेति । ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन् । सोऽग्निरनीकवान्थ्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकान्यजनयत । ततो देवा अभवन् । पराऽसुराः ॥ ४० ॥ यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति । अग्निमेवानीकवन्तꣳ स्वेन भागधेयेन प्रीणाति । सोऽग्निरनीकवान्थ्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकानि जनयते । असौ वा आदित्योऽग्निरनीकवान् । तस्य रश्मयोऽनीकानि । साकꣳ सूर्येणोद्यता निर्वपति । साक्षादेवास्मा अनीकानि जनयति । [2]तेऽसुराः पराजिता यन्तः । द्यावापृथिवी उपाश्रयन् ॥ ४१ ॥

---

[1]देवासुरा इत्यादि ॥ संयत्ताः संघातस्थाः । अग्निरनीकवान् देवान् अब्रवीत् । गतमन्यत् । चतुर्धेति । सान्तपनादिभेदेन चतुर्धा सेना उत्पादितवान् । सर्वतोसुराणामपनोदनाय तैरनीकैः तद्वानग्निरनीकवान् ॥

[2]द्यावापृथिवी इति ॥ द्यावापृथिव्यौ दुर्गत्वेन गूढं प्रविष्टाः । उभयत इति । उपर्यधश्च संतपनात् सान्तपनाः । तेक्ष्णिष्ठामिति ।

ते देवा मरुद्भ्यस्सान्तपनेभ्यश्चरुं निरवपन् । तां द्यावापृथिवीभ्यामेवोभयतस्समतपन् । यन्मरुद्भ्यस्सान्तपनेभ्यश्चरुं निर्वपति । द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यान्थ्सं तपति । मध्यन्दिने निर्वपति । तर्हि हि तेक्ष्णिष्ठं तपति । चरुर्भवति । सर्वत एवैनान्थ्सं तपति । [3]ते देवाश्श्वो विजयिनस्सन्तः । सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन् ॥ ४२ ॥ आशिता एवाद्योपवसाम । कस्य वाऽहेदम् । कस्य वा श्वो भवितेति । स शुतोऽभवत् । तस्याहुतस्य नाश्नन् । न हि देवा अ-

तदानीं तीक्ष्णतरं तपतीति । छान्दसमेत्वम् । सर्वत इति । चरोः सर्वतः तप्तवान् ॥

[3]गृहमेधीयमिति ॥ गृहमेधः पाकयज्ञः । इध्माहरणाद्यभावेन तुल्यश्चरुः । तद्वन्तो गृहमेधिनः । तद्देवत्यं गृहमेधीयम् । "द्यावापृथिवी" इत्यादिना छः । आशिता एवेति । अशनेन तृप्ता एव अस्मिन् उपवसाम अग्निसमीपे वर्तेमहि । किं कारणमिति चेत्—उच्यते—कस्य वा इति । इदं वर्तमानं अस्मिन्नेवाहिं कस्य भविष्यति कस्य वा श्वो भवितेति न ज्ञायते । तस्मादाशिता एवोपवसा-

हुतस्याश्नन्ति । तेऽब्रुवन् । कस्मा इमꣳ होष्याम इ-
ति । मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन् । तं मरुद्भ्यो गृ-
हमेधिभ्योऽजुहवुः ॥ ४३ ॥ ततो देवा अभवन् ।
पराऽसुराः । यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो
गृहे जुह्वति । भवत्यात्मना । पराऽस्य भ्रातृव्यो
भवति । यद्वै यज्ञस्य पाकत्रा क्रियते । पशव्यं
तत् । पाकत्रा वा एतत्क्रियते । यन्नेध्माबर्हिर्भव-
ति । न सामिधेनीरन्वाह ॥ ४४ ॥ न प्रयाजा इ-
ज्यन्ते । नानूयाजाः । य एवं वेद । पशुमान्भव-
ति । 'आज्यभागौ यजति । यज्ञस्यैव चक्षुषी ना-
न्तरेति । मरुतो गृहमेधिनो यजति । भागधेयेनै-

मेति । अहेति निपातः प्रसिद्धौ, विषादे वा । अथ चरुं श्रपयित्वा अहुतस्यानशनात् गृहमेधिभ्योऽजुहवुः । पाकत्रेति । संक्षिप्तमित्यर्थः । छान्दसस्त्राप्रत्ययः । यत् खलु यज्ञस्य पाकमल्पं क्रियते तत् पशुभ्यो हितं भवति । पाकयज्ञविषयेत्यन्ये । किं पुनः पाकत्राकरणमित्याह—यदित्यादि । गतम् ॥

'आज्यभागौः यज्ञस्य चक्षुष्ट्वात् कर्तव्याविति । नान्तरेति न तिरोदधाति ॥

वैनान्थ्समर्धयति । [5]अग्निꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै । इडान्तो भवति । पशवो वा इडा । पशुष्वेवोपरिष्टात्प्रति तिष्ठति ॥ ४५ ॥

असुरा अश्रयन्गृहमेधीयं चरुं निरवपन्नजुहवुरन्वाहेडान्तो भवति द्वे च ॥ ६ ॥

[1]यत्पत्नी गृहमेधीयस्याश्नीयात् । गृहमेध्येव स्यात् । वि त्वस्य यज्ञ ऋध्येत । यन्नाश्नीयात् । अगृहमेधी स्यात् । नास्य यज्ञो व्यृध्येत । प्रतिवेशं पचेयुः । तस्याश्नीयात् । गृहमेध्येव भवति । ना-

[5]स्विष्टकृदिडयोरनूद्य स्तुतिः फलविशेषप्रदर्शनार्था ॥

इति षष्ठे षष्ठोऽनुवाकः.

—※※०※※—

[1]यत्पत्नीत्यादि ॥ गृहमेधीयस्य पत्न्या अशने यजमानो गृहमेधी भवत्येव किंतु अस्य यज्ञो व्यृध्येत ऋद्धिहीनस्स्यात् । अथ यदि पत्नी नाश्नीयात् अगृहमेधी स्यात् गृहमेधी यजमानो न स्यात् । नित्ययोगे मतुप्, ततो नञ्समासः । यज्ञव्यृद्धिस्तु न भवत्येव । तस्माद्दोषद्वयनिवृत्तये प्रातिवेशं पचेयुः तत्संयुक्तं पाकान्तरं सर्वार्थं कुर्युः । गतमन्यत् ॥

स्यं यज्ञो व्यृद्ध्यते ॥ ४६ ॥ [2]ते देवा गृहमेधीयेने-ष्ट्वा । आशिता अभवन् । आञ्जताभ्यञ्जत । अनु व-त्सानवासयन् । तेभ्योऽसुराः क्षुधं प्राहिण्वन् । सा देवेषु लोकमवित्वा । असुरान्पुनरगच्छत् । गृहमे-धीयेनेष्ट्वा । आशिता भवन्ति । आञ्जतेऽभ्यञ्जते ॥ ४७ ॥ अनु वत्सान् वासयन्ति । भ्रातृव्यायैव तद्य-जमानः क्षुधं प्रहिणोति । [3]ते देवा गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं न्यदधुः । अस्मानेव श्व इन्द्रो निहितभाग उपावर्तितेति । तानिन्द्रो निहितभाग उपावर्तत । गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं नि-

[2]ते देवा इत्यादि ॥ गृहमेधीयेनेष्ट्वा अञ्जनाभ्यञ्जने कृत्वा अनन्तरं तत्र वत्सानन्ववासयन्नित्येके । मातृभिस्सह वत्सान्वासयन्तीत्यन्ये। 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् । तेभ्य इत्यादि । अत्रान्तरे असुरा देवेभ्यः क्षुधं प्राहिण्वन् प्रेषितवन्तः । सा क्षुत् देवेषु लोकं अवकाशं अवित्वा अलब्ध्वा पुनरपि असुरानेव अगच्छत् गृहमेधीयानुभावेन । तस्माद्गृहमेधीयेनेत्यादिविधिः । एवमनेन कर्मणा भ्रातृव्यायैव यजमानेन क्षुत् प्रहिता भवति ॥

[3]ते देवा इत्यादि ॥ निष्कासं पचनस्थालीलग्नं क्षामकार्षं तमुद्धृत्य इन्द्राय न्यदधुः । केनाभिप्रायेणेत्याह—निहितभागत्वात् अस्मानेव श्व इन्द्र उपावर्तिता अवश्यमेव श्व आगन्ता इति । अनेनाभिप्रायेण

दध्यात् । इन्द्र एवैनं निहितभाग उपावर्तते । [4]गार्-
हपत्ये जुहोति ॥ ४८ ॥ भगधेयेनेवैन समर्धयति।
ऋषभमाह्वयति । वषट्कार एवास्य सः । अथो इ-
न्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते । [5]इ-
न्द्रो वृत्रꣳ हत्वा । परां परावतमगच्छत् । अपारा-
धमिति मन्यमानः । सोऽब्रवीत् । क इदं वेदिष्य-
तीति । तेऽब्रुवन्मरुतो वरं वृणामहै ॥ ४९ ॥ अथ
वयं वेदाम । अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता

निस्कासं इन्द्रार्थं न्यदधुः । इन्द्रोपि निहितभागत्वादेव उत्तरेद्युः उपावर्तत । तस्मात्—गृहमेधीयेनेत्यादिविधिः ॥

[4]गार्हपत्ये जुहोति निष्कासम् । ऋषभमित्यादि ॥ "ऋषभ एहि" इति । अथ आहूतस्य अस्य स एवास्य होमस्य वषट्कारः । तस्मात् तस्मिन्नुदिते जुहोतीति गम्यते । अथो अपिच भ्रातृव्यस्य इन्द्रियं वीर्यं च यजमानो वृङ्क्ते वर्जयति । इन्द्रवीर्यवृषभ-रवाश्रयात्[1] ॥

[5]इन्द्रो वृत्रमित्यादि ॥ परां परावतं परागतं दूरतरं देशं अगच्छत् अपाराधमहं वाया[2] इति अपाराधमिति मन्यमानः पुनरपि वृत्रभयात् दूरतरं गत इति । अथेन्द्रो मरुतां सन्निधौ अब्रवीत् बिभीमो वयं अथ इदानीं वृत्रो जीवति उत मृत इति

[1] इन्द्रियवीर्यवृषभरवणाश्रयात्. [2] वायो.

इति । त एनमध्यक्रीडन् । तत्क्रीडिनां क्रीडित्वम् । यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हविर्निरुप्यते विजित्यै । [6]साकꣳ सूर्येणोद्यता निर्वपति । एतस्मिन्वै लोक इन्द्रो वृत्रमहन्थ्समृद्ध्यै । [7]एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । एतद्ब्राह्मण ऐन्द्राग्नः । अथैष ऐन्द्र-

---

इदमित्थं को वेदिष्यति ज्ञास्यति वेदितुं समर्थः क इति । अथ मरुतोऽब्रुवन् वयं वरं कंचित् वृणामहै तं यदि लभेमहि अथ वयमेव इदं वेदाम ज्ञातुं समर्था इति । लोटि 'आडुत्तमस्य' इत्याडागमः । कः पुनः स इति चेत् अस्मभ्यमेव प्रथमं प्रधानहविर्भ्यः प्रागेव अस्मदीयं हविर्निरुप्यातै निरुप्येत इति अयमस्माकं वर इति । 'उपसंवादाशङ्कयोश्च' इति लेटि 'वैतोऽन्यत्र' इत्यैकारः । अथेन्द्रेण तथाऽभ्यनुज्ञाते मरुत एनमध्यक्रीडन् एनमधिष्ठाय क्रीडितवन्तः । ततो मृत इत्यजानन्निति । तस्मात् क्रीडिभ्यो मरुद्भ्यः प्रथमं हविर्निर्वापो विजयाय भवति ॥

[6]साकमित्यादि ॥ गतम् ॥ लोके अवकाशे यदुदयकाले इन्द्रो वृत्रं हतवान् । तस्मात्तत्र निर्वापोऽस्य समृद्ध्यै भवति ॥

[7]एतत् ब्राह्मणान्येवेत्यादि ॥ अनन्तरोदितवैश्वदेवादिब्राह्मणोत्पन्नान्येव पञ्च हवींषि आग्नेयादीनि पौष्णान्तानि अत्रापि कर्तव्यानि । अथ तदनन्तरवरुणप्रघासब्राह्मणविहितो य ऐन्द्राग्नः स एवात्रापि षष्ठं हविः । अथ सप्तमादि विधीयते ऐन्द्रश्चरुः सप्तमः ॥

श्चरुर्भवति ॥५०॥ [8]उद्धारं वा एतमिन्द्र उदहरत। वृत्रꣳ हत्वा । अन्यासु देवतास्वधि । यदेष ऐन्द्रश्चरुर्भवति । उद्धारमेव तं यजमान उद्धरते । अन्यासु प्रजास्वधि। वैश्वकर्मण एककपालो भवति। विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे ॥५१॥

ऋद्ध्यतेऽभ्यञ्जते जुहोति वृणामहै भवत्यष्टौ च ॥ ७ ॥

[1]वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ता वरुणप्रघासैर्वरुणपाशादमुञ्चत् । साकमेधैः प्रत्यस्थापयत् । त्र्यम्बकै रुद्रं निरवादयत । पितृयज्ञेन

[8]उद्धारं वा इत्यादि ॥ इन्द्रो वृत्रं हत्वा अन्यासु देवतास्वधि । उपरि ऐश्वर्ये वा अधिशब्दः । यथा—अधिपञ्चालेषु ब्रह्मदत्त इति । तद्विषयैश्वर्यनिमित्तो य उद्धारः आत्मन उच्छ्रायः तं एतं अनेन चरुणा उदहरत । यदेष इत्यादि । गतम् । वैश्वकर्मण एककपालोऽष्टमः ॥

इति षष्ठे सप्तमः ॥

[1]वैश्वदेवेनेत्यादि ॥

सुवर्गं लोकमगमयत् । यद्वैश्वदेवेन यजते । प्रजा एव तद्यजमानस्सृजते । ता वरुणप्रघासैर्वरुणपाशान्मुञ्चति । साकमेधैः प्रतिष्ठापयति । ऽत्र्यम्बकै रुद्रं निरवदयते ॥ ५२ ॥ पितृयज्ञेन सुवर्गं लोकं गमयति । [2]दक्षिणतः प्राचीनावीती निर्वपति । दक्षिणावृद्धि पितृणाम् । अनादृत्य तत् । उत्तरत एकोपवीय निर्वपेत् । उभये हि देवाश्च पितरश्चेज्यन्ते । अथो यदेव दक्षिणार्धेऽधि श्रयति । तेन दक्षिणावृत् । [3]सोमाय पितृमते पुरोडाशꣳ षट्कपा-

---

[2]दक्षिणत इति ॥ वेद्या दक्षिणतः प्राचीनावीतिना निर्वापः कार्यः । हेतुं च तत्राह—हि यस्मात् पितृणां कर्तव्यं दक्षिणावृत् क्रियारम्भः दक्षिणा आवृत् यस्य तादृग्भवति । दूषयति—अनादृत्येत्यादि । गार्हपत्यस्य उत्तरतः उपवीतं कृत्वा निर्वपेत् । हेतुं चाह—उभये हीत्यादि । न केवलं पितर एवात्रेज्यन्ते अपि तु उभयेऽपि देवाश्च पितरश्च । तत्र पित्रर्थं दक्षिणावृत्त्वमादरणीयमेवेति मन्यमानस्तदपि अस्त्येवेति दर्शयति—अथो यदेवेत्यादि । गार्हपत्यस्य दक्षिणार्धे हविरधिश्रयणाद्दक्षिणावृत्त्वमप्यनुगृहीतमिति । 'उदात्तादनुदात्तस्य स्वरितः' इत्येकारः स्वर्यते ॥

[3]सोमाय पितृमत इत्यादि ॥ गतम् । धानास्तण्डुलप्रभवा लाजाः । यस्मिन्वा इत्यादि । यस्मिन्नृतौ चातुर्मास्ययाजी

लं निर्वपति । संवथ्सरो वै सोमः पितृमान् ॥५३॥
संवथ्सरमेव प्रीणाति । पितृभ्यो बर्हिषद्भ्यो धा-
नाः । मासा वै पितरो बर्हिषदः । मासानेव प्री-
णाति । यस्मिन्वा ऋतौ पुरुषः प्रमीयते । सोऽ-
स्यामुष्मिन्लोके भवति । बहुरूपा धाना भवन्ति ।
अहोरात्राणामभिजित्यै । [4]पितृभ्योऽग्निष्वात्तेभ्यो
मन्थम् । अर्धमासा वै पितरोऽग्निष्वात्ताः ॥५४॥
अर्धमासानेव प्रीणाति । अभिवान्यायै दुग्धे भव-
ति । सा हि पितृदेवत्यं दुहे । [5]यत्पूर्णम् । तन्मनु-
ष्याणाम् । उपर्यर्धो देवानाम् । अर्धः पितृणाम् ।

पुरुषः प्रमीयते' म्रियते स एव अस्य अनेनाविभक्तः अमुष्मिन् जन्मान्तरे भवति संवत्सरस्य मासानां च प्रीणनात् । उक्तं च— "यदि वसन्ता प्रमीयते"[1] इत्यादि । बहुरूपत्वं शुक्लकृष्णमिश्रत्वम् । बहुरूपाणामहोरात्राणां अभिजयाय भवति ॥

[4]मन्थस्सक्तवो द्रवद्रव्यावलोडिताः इह तु अभिवान्याया मृतवत्साया दुग्धे भवति । सा खलु पितृदेवत्यं क्षीरं दुहे दुग्धे । 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥

[5]यदित्यादि ॥ पूर्णं मनुष्याणां संबन्धि, तेषां पूर्णत्वार्थित्वान्न्यूनत्वं न सहते । अर्धादुपरि उपर्यर्धः । उपरितनो वा

[1]ब्रा. १-४-१०.

अर्ध उपमन्थति। अर्धो हि पितृणाम्। एकयोपमन्थति ॥ ५५ ॥ एका हि पितृणाम् । दक्षिणोपमन्थति । दक्षिणावृद्धि पितृणाम् । अनारभ्योपमन्थति । तद्धि पितॄन्गच्छति । [6]इमां दिशं वेदिमुद्धन्ति । उभये हि देवाश्च पितरश्चेज्यन्ते । चतुस्स्रक्तिर्भवति । सर्वा ह्यनु दिशः पितरः । अखाता भवति ॥ ५६ ॥ खाता हि देवानाम् । [7]मध्य-

अर्धे उपर्यर्धः । तत् देवानां संबन्धि, उपरितनलोकवर्तित्वाद्देवानाम् । पितृणां संबन्धी अर्धः, अपुष्कलत्वेनामङ्गल्यत्वात् । ते हि छिन्नादिकामाः स्थायन्ते । अर्ध उपमन्थतीति अर्धे दुग्धं अर्धे सक्तव इत्येवार्धद्वयमवस्थाप्य उपमन्थति । दाक्षिणा दक्षिणामुखो वा । दक्षिणावृत्त्वं व्याख्यातम् । अनारभ्येति । अनारभ्य स्थूणादिष्वनाबद्ध्य हस्ताभ्यामेव उपमन्थति । पितृणां हृदयंगमम् ॥

[6]इमामिति ॥ दक्षिणपूर्वां दिशं दक्षिणपूर्वदिगनुसारेण वेदिमुद्धन्ति उत्पादयन्ति । देवानां पितृणां च संबन्धित्वाद्दिग्द्वयस्य चतुस्स्रक्तिः चतुरश्राः प्रतिदिशं स्रक्तयः । सर्वाः खलु दिशोऽनुव्याप्य पितरो वर्तन्ते । तस्मात्सर्वप्रीणनी भवति । अखातेति चतुरङ्गुलादिनिवृत्तिः । समीकरणं तु भवत्येव । देवानां हि खाता प्रिया न पितृणां अहिंसारुचित्वात् ॥

[7]मध्यत इति ॥ वेदेर्मध्ये अग्निराधीयते । देवानां खलु

तोंऽग्निराधीयते । अन्ततो हि देवानामाधीयते । वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै । परि श्रयति । अन्तर्हितो हि पितृलोको मनुष्यलोकात् । [8]यत्परुषि दिनम् । तद्देवानाम् । यदन्तरा । तन्मनुष्याणाम् ॥ ५७ ॥ यत्समूलम् । तत्पितृणाम् । समूलं बर्हिर्भवति व्यावृत्त्यै । दक्षिणा स्तृणाति । दक्षिणावृद्धि पितृणाम् । त्रिः पर्येति । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । त्रिः पुनः पर्येति । षट्थ्सं पद्यन्ते ॥ ५८ ॥ षड्वा ऋतवः । ऋ-

अन्ततः पर्यन्तेषु आधीयते । वर्षीयानिति । इध्मात् प्रकृतात् द्विप्रादेशाच्च वर्षीयान् वृद्धतर इध्मो भवति व्यावृत्त्यर्थं दैव्यात् । परिंश्रयनीति । परितो वेदिं छादयति । मनुष्यलोकात् अन्तर्हितो पितृलोकः तद्धि सदृशत्वात् तत्रत्यानामनुपलम्भाद्वा ॥

[8]यदित्यादि ॥ परुषि पर्वणि यद्दिनं भिन्नं तद्देवानां प्रियम् । द्यतेर्निष्ठानत्वं छान्दसम् । यदन्तरा पर्वणोर्मध्ये दिनं तन्मनुष्याणां प्रियम् । तस्मात् यत्समूलं तत्पितृणां प्रियम् । तस्मात् समूलं बर्हिर्भवति इतरव्यावृत्तये । दक्षिणेति । दक्षिणत आरभ्य दक्षिणाप्राप्त्वा स्तृणाति । त्रिः पर्येतीत्यादि । गतम् । बर्हिषा वेदिं स्तृणन् पर्येति । देवलोकस्यैव एकदेशः पितृलोकः । तस्मात् इतो मनुष्यलोकात् तृतीये लोके पितरो वर्तन्ते । त्रिः पुनः पर्येति आस्तृणन्[1] ॥

[1] प्रतिपर्येति अस्तृणन् .

तूनेव प्रीणाति । [9]यत्प्रस्तरं यजुषा गृह्णीयात् । प्रमायुको यजमानस्स्यात् । यन्न गृह्णीयात् । अनायतनस्स्यात् । तूष्णीमेव न्यस्येत् । न प्रमायुको भवति । नानायतनः । [10]यत्त्रीन्परिधीन्परिदध्यात् ॥ ५१ ॥ मृत्युना यजमानं परि गृह्णीयात् । यन्न परि दध्यात् । रक्षांसि यज्ञं हन्युः । द्वौ परिधी

[9]यदित्यादि ॥ इन्द्रस्य यजमानस्य पितृषु कीर्तनात् यजमानात्मत्वाच्च प्रस्तरस्य यजुषा ग्रहणे यजमानः प्रमायुकः मरणशीलः स्यात् । तूष्णीं ग्रहणे तु नायं दोषः, अन्धृतप्रायत्वात्तस्य । तर्ह्यग्रहणमेवास्त्विति चेत्—अग्रहणे अनायतनो यजमानः स्यात् । हविषामायतनस्य अगृहीतत्वात् । तस्मात् ग्रहीतव्य एव । तूष्णीं ग्रहणस्याग्रहणतुल्यत्वात् अनायतनत्वदोषस्तदवस्थ एवेति यजुषैव गृहीत्वा तूष्णीमेव न्यस्येत् सादयेत् । एवं ग्रहणात्तूष्णीमुपचाराच्च दोषद्वयाभावः । यद्वा—अग्रहणस्य यजुषा ग्रहणस्य च तुल्यत्वात्तूष्णीमेव गृह्णीयादिति स्थिते सादनवत् तूष्णीमेव कुर्यात् । " अदित्यास्त्वा "[1] इति यजुषा सादने ग्रहणोक्तदोषप्रसङ्गात् ॥

[10]यत्त्रीनिति ॥ मृत्युना यजमानं परिग्राहयेत् । परिधिरिति त्रिषु तत्कीर्तनात् । अग्रहणे रक्षांसि अप्रतिबन्धेन यज्ञमनुप्रविश्य हन्युः । तस्मात् द्वौ पाश्चात्योत्तरौ परिदधाति । एवं हि कृतं चाकृतं च परिधानमिति दोषद्वयाप्रसङ्गः ॥

[1] सं. १-१-४.

परिदधाति । रक्षसामपहत्यै । अथो मृत्योरेव यजमानमुथ्सृजति । [11]यत्त्रीणित्रीणि हवीꣳष्युदाहरेयुः । त्रयस्त्रय एषाꣳ साकं प्रमीयेरन् । एकैकमनूचीनान्युदाहरन्ति । एकैक एवैषामन्वञ्चः प्रमीयते । [12]कशिपु कशिपव्याय । उपबर्हणमुपबर्ह-

[11]यत्त्रीणीत्यादि ॥ यदि त्रीणि हवींषि 'सोमाय पितृमते'[1] इत्यादिविहितानि सह वेद्यां उदाहरेयुः सादयेयुः अध्वर्य्वादयः तदा एषां यजमानानामध्वर्यूणां वा संबन्धिनः पुरुषाः त्रयस्त्रयः साकं सह प्रमीयेरन् म्रियेरन् । ननु त्रीण्येव हवींषि सोमबर्हिषदग्निष्वात्तेभ्यो विहितानि तत्कथं वीप्सा, उच्यते—अध्वर्युसमुदायविषयमिदम् । तत एवोदाहरेयुरिति बहुवचनम् । प्रत्यध्वर्यु त्रीणि भवन्तीति वीप्सोपपत्तिः । एकैकमिति । अनूचीनानि अनुक्रमेण स्थितानि एकैकं सादयन्त्वध्वर्यवः । द्विर्वचनेन बहुत्वस्य गतत्वात् एकवचनम् । 'एकं बहुव्रीहिवत्' इति विभक्तिलोपः । अन्वक्छब्दात् 'विभाषाञ्चेरदिक् स्त्रियाम्' इति खः । एषां संबन्धी पुरुष एकैक एव प्रमीयते म्रियते । पूर्ववदेकवचनम् । अन्वञ्चः अनुक्रमेण स्थिताःअनुक्रमेण स्वकाले म्रियन्ते सर्वे पुरुषा इत्यर्थः ॥

[12]काशिपु आस्तरणादि । उपबर्हणमुपधानादि । आञ्जनाभ्यञ्जने गते । एतान्यपि एकैकमुदाहरन्तीत्येव । यत तदर्ह इत्यर्थः । कशिप्वादिभ्यः[2] । यथाभागमिति । यो यस्य भागः इष्टः तेन

[1] सं. १-८-५. [2] ततदर्ह इत्यर्थः । कशिपव्यादिभ्यः.

पर्यांय। आञ्जनमाञ्जन्यांय। अभ्यञ्जनमभ्यञ्जन्याय। यथाभागमेवैनांन्प्रीणाति ॥ ६० ॥

निरवंदयते पितृमानंग्निष्वात्ता एकयोप म-
न्थत्यरवात्ता भवति मनुष्याणां पद्य-
न्ते परिवृध्यान्मीयते पशुं च ॥ ८ ॥

[1]अग्नये देवेभ्यः पितृभ्यस्समिध्यमानायानुब्रूहीत्याह। उभये हि देवाश्च पितरश्चेज्यन्ते। [2]एका-

तेन एनान् कशिपव्यादीन् प्रीणाति तर्पयति । 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति तृतीयायाः अम्भावः ॥

इति षष्ठे अष्टमोऽनुवाकः

——<0>——

[1]अग्नये देवेभ्य इत्यादि ॥ सामिधेनीसंप्रैषोऽयम् । देवार्थं पित्रर्थं च अग्नये समिध्यमानायानुब्रूहि सामिधेनीरनुब्रूहीति । अत्र यत् देवेभ्यः पितृभ्यः इति उभयमुच्यते तत्राभिप्रायमाह—उभये हीति। "अग्नये समिध्यमानायानुब्रूहि"[1] इति प्राकृतः। वैकृतः—"देवेभ्यः पितृभ्यः" इति प्रक्षिप्यते, उभयोरत्रेज्यमानत्वात् । उपलक्षणं चेदं अन्यत्रापि सहकीर्तनं "देवबर्हिश्शतवल्शम्"[2] इत्यादि ॥

[2]एकामिति ॥ 'उशन्तस्त्वा'[3] इति एकामेव ऋचं अन्वाह।

[1]सं. ६-३-७. [2]ब्रा. १-१-२. [3]सं. २-६-१२.

मन्वाह । एका हि पितृणाम् । त्रिरन्वाह । त्रिर् हि देवानाम् । [3]आघारावाघारयति । यज्ञपरुषोर-नन्तरित्यै । [4]नार्षेयं वृणीते । न होतारम् ॥ ६ १ ॥ यदार्षेयं वृणीत । यद्धोतारम् । प्रमायुको यजमानस्स्यात् । प्रमायुको होता । तस्मान्न वृणीते । यजमानस्य होतुर्गोपीथाय । [5]अप बर्हिषः प्रयाजान् यजति । प्रजा वै बर्हिः । प्रजा एव मृत्यो-रुथ्सृजति । आज्यभागौ यजति ॥ ६ २ ॥ यज्ञ-

एकत्वसंख्या हि पितृणां प्रिया 'सकृदिव हि पितरः'[1] इति । तामेकामृचं त्रिरन्वाह । त्रिर्हि देवानां संबन्धि क्रियते "त्रिषत्या हि देवाः"[2] इति ॥

[3]आघारावाघारयतीति । प्राप्तस्यैव वचनं फलविशेषवत्तया अवश्यकर्तव्यत्वख्यापनार्थम् । तदाह—यज्ञपरुषोः यज्ञस्य पर्वणोरन्तरितिर्विलोपो मा भूदिति तयोस्सर्वाहुतिव्यवस्थानात् ॥

[4]नार्षेयमित्यादिभिः प्राप्तस्य प्रतिषेधः—नार्षेयं वृणीते होता 'अग्ने महां असि'[3] इत्यादि । न च होतारमध्वर्युः वृणीते "अग्निर्देवो होता"[4] इत्यादि । पूर्ववद्धोतृयजमानयोः[5] त्रिषु कीर्तनात् ॥

[5]अपबर्हिष इत्यादि ॥ गतम् । चतुर्थवर्जितं इत्यर्थः । आ-

[1] ब्रा. १-३-१०. [2] ब्रा. ३-१२-६ [3] सं. २-५-९. [4] सं, २-६-११. [5]होतृयजमानोपि (मानेऽपि).

स्यैव चक्षुषी नान्तरैति । प्राचीनावीती सोमं यजति । पितृदेवत्या हि । एषाऽऽहुतिः । [6]पञ्चकृत्वोऽवं द्यति । पञ्च ह्येता देवताः । द्वे पुरोऽनुवाक्ये । याज्या देवता वषट्कारः । ता एव प्रीणाति । सन्ततमवं द्यति ॥ ६ ३ ॥ ऋतूनाꣳ संतत्यै । [7]प्रैवैभ्यः पूर्वया पुरोऽनुवाक्ययाऽऽह । प्रणयति द्वितीयया । गमयति याज्यया । तृतीये वा इतो लोके पितरः।

ज्यभागयोः प्राग्वत् फलविशेषवत्तया आवश्यकत्वख्यापनाय पुनर्विधानम् । प्राचीनावीतीत्यादि । गतम् ॥

[6]पञ्चकृत्व इति ॥ आदावुपस्तरणं, हविषां पुरोडाशधानामन्थानां सकृत् सकृत् अवदानं तूष्णीं भवति । अभिघारणं पञ्चममिति । एतैः पञ्चभिः पञ्च देवताः प्रीणयति । ताश्च दर्शयति—पञ्च ह्येता इति ॥ द्वे पुरोऽनुवाक्ये प्रत्येकं हविषां द्वे द्वे पुरोऽनुवाक्ये "त्वं सोम प्रचिकितः"[1] इत्यादिके । याज्येति । "अग्निष्वात्ताः पितरः"[1] इत्यादिका एका । संततमिति । एकैका देवता त्रिष्वपि हविष्षु यथा अविच्छिन्ना भवति तथा सन्ततमवद्यति । ऋतूनां अविच्छेदाय तद्भवति ॥

[7]प्रैवैभ्य इत्यादि ॥ किञ्चेत्याह—इत इति । इतो मनुष्यलोकात् तृतीये लोके पितरः । तत्र स्थितान् एनान् पितॄन् पूर्वया पुरोऽनुवाक्यया अह्नः प्रकाशमानाद् द्युलोकात् अत्यान-

[1] ब्रा. २-६-१२.

अह्न एवैनान्पूर्वया पुरोऽनुवाक्ययाऽत्यानयति । रात्रियै द्वितीयया । एवैनान् याज्यया गमयति । [8]दक्षिणतोऽवदाय । उदङ्ङति क्रामति व्यावृत्त्यै ॥ ६ ४ ॥ [9]आ स्वधेत्याश्रावयति । अस्तु स्वधेति प्रत्याश्रावयति । स्वधा नम इति वषट्करोति । स्व-

---

यति । ततो द्वितीयया रात्रियै । पञ्चम्यर्थे चतुर्थी । रात्रिया रात्रितुल्यात् अन्तरिक्षात् अत्यानयति । तत एनान् भूलोकमाप्तान् याज्यया हविः आगमयति प्रापयति ॥

[8]दक्षिणत इत्यादि ॥ वेदेः दक्षिणतो हवींषि अवदाय उदङ् अतिक्रामति वेदिं व्यावृत्त्यै व्यावृत्त्यर्थं देवयज्ञात् । प्रदर्शनार्थमिदम् । परिक्रामन्ति ऋत्विजो विपरिहरन्ति स्रुचो हवींषि परिश्रयणानीति ॥

[9]आस्वधेति ॥ 'आश्रावय'[1] पदमपोह्य आस्वधेति अध्वर्युः आश्रावयति । आश्रावय स्वधां पितृभ्य इत्यर्थः । अथाग्नीध्रोपि "अस्तु श्रौषट्"[1] इत्यत्र श्रौषट्पदमपोह्य अस्तु स्वधेति प्रत्याश्रावयति । पितॄणां स्वधासिद्धये आश्रावणमस्त्विति । उपलक्षणत्वात् स्वधेति याज्यां संप्रेष्यति । अथ 'ये यजामहे'[1] इत्यतो ये यजामह इति पदमपास्य ये स्वधामह इति याज्यां ब्रूयात् । अथ स्वधा नम इति वषट्करोति । स्वधाकारः पितॄणां प्रिय इति उक्तसमर्थनार्थो हेतुः ॥

---

[1] तै. सं. १-६-११.

धाक्षरो हि पितृणाम् । [10]सोममग्रे यजति । सोमप्रयाजा हि पितरः । सोमं पितृमन्तं यजति । संवथ्सरो वै सोमः पितृमान् । संवथ्सरमेव तद्यजति। पितॄन्बर्हिषदो यजति ॥ ६५ ॥ ये वै यज्वानः । ते पितरो बर्हिषदः। तानेव तद्यजति । पितॄनग्निष्वात्तान् यजति। ये वा अयज्वानो गृहमेधिनः। ते पितरोऽग्निष्वात्ताः । तानेव तद्यजति । अग्निं कव्यवाहनं यजति । य एव पितृणामग्निः । तमेव तद्यजति ॥ ६६ ॥ अथो यथाऽग्निꣳ स्विष्टकृतं यजति । तादृगेव तत् । [11]एतत्ते तत ये च त्वाम-

---

[10]सोमप्रयाजा इति ॥ सोमः प्रयष्टव्यो येषां तादृशाः । पितृमन्तं पितृगणसहितम् । संवत्सरः पितृमान् सोमः 'मासा वै पितरो बर्हिषदः । अर्धमासा वै पितरोऽग्निष्वात्ताः'[1] इति । यज्वानः श्रौताग्न्यनुप्रविष्टा बर्हिषदो नाम । अयज्वानो गृहमेधिनः गृहस्थाः लौकिकाग्न्यधीनाः ते अग्निष्वात्ता नाम पितरः । कव्यवाहनो नाम पितृणामग्निः । अपि च अयं स्विष्टकृत्स्थानीयो वेदितव्यः यथा देवानां स्विष्टकृन्नाम एवमयं पितृणामिति ॥

[11]एतत्ते ततेत्यादि ॥ तिसृषु स्रक्तीषु दक्षिणायां श्रोण्यां दक्षिणोत्तरयोरंसयोरिति पिण्डान् निदधाति । तस्मादिति । मन्त्रेषु

---

[1] ब्रा. १-३-१०.

न्निविर्ति तिसृषु स्रक्तीषु निर्दधाति । तस्मादा तृतीयात्पुरुषान्नाम न गृह्णन्ति । एतावन्तो हीज्यन्ते । अत्र पितरो यथाभागं मन्दध्वमित्याह । ह्रीका हि पितरः । उदञ्चो निष्क्रामन्ति । एषा वै मनुष्याणां दिक् । स्वामेव तद्दिशमनु निष्क्रामन्ति ॥ ६७ ॥

[12]आहवनीयमुपतिष्ठन्ते । न्येवास्मै तद्भुवते । यत्सत्याहवनीये । अथान्यत्र चरन्ति । आतमितोरुपतिष्ठन्ते । अग्निमेवोपद्रष्टारं कृत्वा । पितॄन्निरव-

नामग्रहणात् । एतावन्त इति । त्रय एव यष्टव्याः पिता पितामहः प्रपितामह इति । आतृतीयादिति चाभिव्याप्तावाकारः । चतुर्थः संप्रदातैषामिति । तस्मात्त्रयः पिण्डा दीयन्ते इति । "अत्र पितरः"[1] इत्युक्त्वा निष्क्रामन्ति । हेतुमाह—ह्रीकाः लज्जाशीलाः पितरः । कर्तरि क्विबन्तात् संज्ञायां कन् । कपिलकादित्वाल्लत्वविकल्पः । उदञ्च इत्यादि । गतम् ॥

[12]आहवनीयमिति ॥ तेनोपस्थानात् अस्मा आहवनीयाय निह्नुवते व्यलीकं कुर्वन्ति छादयन्ति । केचिदाहुः—नमस्यन्ति प्रसादनार्थमिति । किं पुनस्तद्व्यलीकमित्याह—यदिति ॥ यस्मादिमे सत्येव आहवनीये अन्यत्र दक्षिणाग्नौ चरन्ति एतं ह्नुवते तस्मादेवमर्थमेव । आतमितोः आ उच्छ्वासात् उपतिष्ठन्ते । 'भावलक्षणे' इति तोसुन् । आहवनीयमेव अग्निमुपद्रष्टारं साक्षिण-

[1] सं. १-८-५.

दयन्ते । अन्तं वा एते प्राणानां गच्छन्ति । य आतमितोरुपतिष्ठन्ते । [13]सुसंदृशं त्वा वयमित्याह॥ ६८ ॥ प्राणो वै सुसंदृक् । प्राणमेवात्मन्दधते । योजा न्विन्द्र ते हरी इत्याह । प्राणमेव पुनरयुक्त। [14]अक्षन्नमीमदन्त हीति गार्हपत्यमुप तिष्ठन्ते । अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वावैतदाह। अमीमदन्त पितरस्सोम्या इत्यभि प्रपद्यन्ते । अ-

मनुज्ञातारं कृत्वा पितॄन् निरवदयन्ते बहिर्निष्क्रम्य दक्षिणाग्नौ चरणेन तर्पयन्ति । अन्तं वा इत्यादि । गतम् ॥

[13]'सुसंदृशं त्वा'[1] इत्याहवनयोपस्थानमन्त्रः ॥ अयुक्त अयुज्यत इन्द्र ते हरी योजा योजय इति येषां प्राणानामन्तं गतं पुनर्योजयति वचनव्यत्ययो वा । पुनः प्राणमयुजन्त इति ॥

[14]अक्षन्नित्यादि ॥ गार्हपत्योपस्थानमन्त्रः । ननु पितॄणां साहित्यमनेन प्रीतिकरं क्रियते तत्किमुपस्थानमनेन गार्हपत्यस्येति चोद्यावसरे मन्त्राभिप्रायमाह—एते पितरो अक्षन् भुक्तवन्तः अमीमदन्त अमोदन्त । वयं तदर्थं त्वां हित्वा अन्यत्र चराम । अथ इदानीं त्वा त्वामेव उपतिष्ठामह इति एतदर्थरूपं खल्वयं मन्त्र आह न तु पितृसाहित्यमात्रमित्यर्थः । अमीमदन्त अमोदन्त पितरः सोम्यास्सोमार्हा इति अन्वाहार्यपचनं

[1] सं, १-८-५.

मींमदन्त पितरोऽथं त्वाऽभि प्रपंद्यामह इति वावै-
तदाह । [15]अपः परिषिञ्चति । मार्जयत्येवैनान् ॥
६९ ॥ अथो तर्पयत्येव । तृप्यंति प्रजया पशुभिः।
य एवं वेद । अप बर्हिषावनूयाजौ यंजति। प्रजा
वै बर्हिः। प्रजा एव मृत्योरुथ्सृजति । चतुरः प्रया-
जान् यंजति। द्वावनूयाजौ । षट्थ्संपद्यन्ते । षड्वा
ऋतवः ॥ ७० ॥ ऋतूनेव प्रीणाति । [16]न पत्न्यन्वास्ते।
न संयाजयन्ति । यत्पत्न्यन्वासीत । यथ्संयाज-
येयुः। प्रमायुका स्यात्। तस्मान्नान्वास्ते । न संया-
जयन्ति । पत्नियै गोपीथाय ॥ ७१ ॥

होतारमाज्यभागौ यजति संततमव द्यति व्या-
वृत्त्यै बर्हिषदो यजति तमेव तद्यजत्यनु निष्क्रा-
मन्त्याहैनानृतवो नव च ॥ १ ॥

---

अभिप्रपद्यन्ते । अस्यापि मन्त्रस्याभिप्रपत्तौ तात्पर्यमिति व्याचष्टे अमीमदन्तेति ॥

[15]अपः परिषिञ्चतीत्यादि ॥ गतम् । वेदिं परितः सिञ्चति ॥

[16]न पत्नीत्यादि ॥ संपत्नीयहोमः पत्नीसंयाजाश्च न कर्तव्याः । पत्नियै पत्न्याः पत्न्या एव रक्षणार्थम् ॥

इति षष्ठे नवमोऽनुवाकः.



[1]प्रतिपूरुषमेककपालान्निर्वपति । जाता एव प्रजा रुद्रान्निरवदयते । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते । एककपाला भवन्ति । एकधेव रुद्रं निरवदयते । [2]नाभिघारयति । यदभिघारयेत् । अन्तरवचारिणꣳ रुद्रं कुर्यात् । [3]एकोल्मुकेन यन्ति ॥ ७२ ॥ तद्धि रुद्रस्य भागधेयम् । इमां दिशं यन्ति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते । [4]रुद्रो वा अप-

[1]प्रतिपूरुषमित्यादि ॥ यावन्तो यजमानस्य गृह्या जनास्तावत एककपालान्निर्वपति । 'यथार्थे यदव्ययम्'[1] इति वीप्सायामव्ययीभावः । निरवदयते रुद्रसकाशान्निष्कृष्यावस्थाप्य रक्षति । एकमतिरिक्तमिति । निर्वपतीत्येव । एकधेवेति । एकेनैव प्रकारेण न पुनरावृत्त्या रुद्रं देवतान्तरसकाशान्निष्कृष्य अवस्थाप्य तर्पयति ॥

[2]अन्तरवचारिणमिति ॥ आभ्यन्तरमनुप्रविश्यानिष्टाचरणशीलं कुर्यात् । स्निग्धत्वादेनं न मुञ्चेत् ततश्च प्रजा नश्येयुः ॥

[3]एकोल्मुकेनेति ॥ दक्षिणाग्नेराशाय । तद्धि रुद्रस्य भागधेयं भजनीयं एकत्वसामान्यात् । इमामिति । उत्तरपूर्वाम् ॥

[4]रुद्रो वा इत्यादि ॥ तादृशाहुत्यर्थं आत्मानं न प्रकाशयति । 'प्र-

[1]पाणिनि (२-१-६) सूत्रे काशिकावाक्यमिदम्.

शुक्रायाा आहुत्यै नातिष्ठत । असौ ते पशुरिति नि-र्दिशेद्यं द्विष्यात् । यमेव द्वेष्टि । तमस्मै पशुं नि-र्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् ॥ ७३ ॥ न ग्राम्यान्पशून् हिनस्ति । ना-रण्यान् । [5]चतुष्पथे जुहोति । एष वा अग्नीनां प-ड्वीशो नाम । अग्निवत्येव जुहोति । मध्यमेन पर्णेन जुहोति । स्रुग्घ्येषा । अथो खलु । अन्तमेनैव होतव्यम् । अन्तत एव रुद्रं निरवदयते ॥ ७४ ॥ [6]एष ते रुद्र भागस्सह स्वस्राऽम्बिकयेत्याह । शरद्वा

---

काशनस्थेयाख्ययोश्च ' इत्यात्मनेपदम् । तस्य नाम देवदत्तादिकं द्वि-षन्तं असौ तव पशुरिति नाम्ना निर्दिशेत् । स द्वेष्योऽस्मै पशुत्वेन निर्दिष्टो भवति । अथ यदि कश्चित् न द्विष्यात् आखुस्ते पशुरिति ब्रूयात् । ततस्तावता तृप्तः किञ्चिदपि पशुं न हिनस्ति ॥

[5]चतुष्पथ इति ॥ चतुष्पथे उल्मुकं निधायेत्येके । विकल्प इत्यन्ये । पड्वीश इति । अग्नीनां पत्सु हि प्रदेयः यत्र पुनःपुनरश्चा-वन्ति । पत्सु प्रविष्टः पड्वीश इति पृषोदरादिः । अश्वानां संदानस्थानं पड्वीश[1] इत्येके । तस्मात् अग्निवति अग्नियुक्ते हुतं भवति । मध्य-मेनेत्यादि । गतम् ॥

[6]शरद्वा इत्यादि ॥ अत्र प्रधानहोममन्त्रे—सह स्वस्राऽम्बिकया

---

[1] संदानस्थाः पड्वीशाः.

अस्याम्बिका स्वसा । तया वा एष हिनस्ति । यꣳ हिनस्ति । तयैवैनꣳ सह शमयति । [7]भेषजं गव इत्याह । यावन्त एव ग्राम्याः पशवः । तेभ्यो भेषजं करोति । [8]अवाम्ब रुद्रमदिमहीत्याह । आशिषमेवैतामा शास्ते ॥ ७५ ॥ [9]त्र्यम्बकं यजामहे

भागं जुषस्वेत्युच्यते । शरत् हिंसा । शॄ हिंसायां, 'शॄदृभसोऽदिः' इत्यदिप्रत्ययः । ऋतुविशेषः शरत् । सा खलु रोगबहुलत्वात् सर्वप्रजा हिनस्ति । तस्मादस्य देवस्य हिंसितुः सहचारिणी । शरद्रूपिकया वा तया सहचारिण्या हिनस्ति प्रजाः । यदाह—"तया वा एष हिनस्ति" इयं दुर्वृत्तादिकं हिनस्ति । तस्मात् "सहस्वस्रा" इति वचनात् तया सह एनं देवं शमयति । प्रदर्शनार्थं चेदं शरल्लक्षणसहचारिणीनां शक्तीनाम् । तत्र त्र्यम्बकानां शरत्प्रीत्या तामेव प्रदर्शयति ॥

[7]भेषजं गव इति ॥ चतुष्पथ्यमग्निं परिषिञ्चति । यावन्त इति । 'गवेऽश्वाय' [1]इत्यादि यथा मन्त्र आह तथा सर्वेभ्यः पशुभ्यो भेषजं करोति यथा शरन्न हिनस्ति ॥

[8]अवाम्ब रुद्रमिति यजमानो जपति ॥ आशिषमिति । 'यथा नः श्रेयसस्करत्'[1] इत्यादिकामाशिषमनेन आशास्ते लभते च तथा ताम् ॥

[9]त्र्यम्बकमिति अग्निं परियन्ति ॥ अस्य मन्त्रस्य तात्पर्यमाह—

[1]सं. १-८-६.

इत्याह । मृत्योर्मुक्षीय माऽमृतादित्ति वावैतदाह ।
[10]उत्किरन्ति । भगस्य लीप्सन्ते । [11]मूते कृत्वाऽऽ-
सजन्ति । यथाजनं यतेऽवसं करोति । तादृगेव
तत् । [12]एष ते रुद्र भाग इत्याह निरवत्यै । अग्नं-

मृत्योरिति । मृत्योर्मुक्षीय मुक्तो भूयासं, अमृतात् मा मुक्षीयेत्येतदयं मन्त्रः प्राधान्येन एतदाह इत्यर्थः ॥

[10]उत्किरन्तीति ॥ ऊर्ध्वान् पुरोडाशानुदस्यन्ति । भगस्येति चतुर्थ्यर्थे षष्ठी । भगाय ऐश्वर्याय तान् पततो लीप्सन्ते लब्धुमिच्छन्ति गृह्णन्ति । छान्दसं दीर्घत्वम् । तस्मात् भगस्य भगाय वा लिप्सति अपादत्ते । केचिदाहुः—उत्किरन्तीत्यस्येयं फलस्तुतिरिति । य उत्किरन्ति तत् भगस्य लीप्सन्ते ऐश्वर्यमेव तल्लब्धुमिच्छन्तीति । ऐश्वर्यस्थानीयान् तान् ग्रहीतुमुत्किरन्तीति । तस्माद्भगस्य यो लिप्सेत तान्पततो गृह्णातीति शेषः ॥

[11]मूते कृत्वेति ॥ मूते कृत्वा मूतस्थान् कत्वा रुद्रार्थं शुष्कस्थाण्वादौ आसजन्ति आबध्नन्ति । यथाजनं जनपदाद्दिकं यते गन्तुं प्रवृत्ताय अवसं पाथेयान्नं करोति, तादृक्तत् इति जानीयात् । यातेः शतरि 'शतुरनुमः' इति चतुर्थ्यां उदात्तत्वम् । 'स्वरितो वाऽनुदात्ते पदादौ' इति तस्य संहितायां स्वरितत्वम् ॥

[12]एष ते रुद्र भाग इत्यासञ्जनमन्त्रः ॥ निरवत्यै इति । निष्क्रय्य

तीक्ष्णमा यन्ति । अपः परिषिञ्चति । रुद्रस्यान्तर्‌हित्यै । [13]प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति । आदित्यं चरुं पुनरेत्य निर्वपति । इयं वा अदितिः । अस्यामेव प्रति तिष्ठन्ति ॥७६॥

यन्ति ब्रूयान्निरवदयते शास्ते
सिञ्चति षट्‌ ॥ १० ॥

अनुमत्यै वैश्वदेवेन तास्सृष्टास्त्रिवृत्प्रजापतिस्सवितोत्तरस्यां देवासुरास्सोऽग्निर्यत्पत्नी वैश्वदेवेन ता वरुणप्रघासैरग्नये देवेभ्यः प्रतिपूरुषं दश ॥ १० ॥

---

पृथक्त्वेन भागप्रदानार्थम् । निरवपूर्वाद्ददातेः क्तिनि 'अच उपसर्गात्तः' इति तादेशः । 'तादौ च' इत्यनन्तरस्य गतेः प्रकृतिस्वरत्वम् । अप्रतीक्षं अपुनर्निरीक्षणं आयन्ति आगच्छन्ति चतुष्पथात् । अपः परिषिञ्चति रुद्रस्यान्तर्हित्यै अन्तर्धानं रुद्रः कुर्यादिति ॥

[13]प्र वा इत्यादि ॥ अस्मात् मनुष्यलोकात् एते प्रच्यवन्ते प्रतिष्ठन्ते ये त्र्यम्बकैश्चरन्ति । तस्मात् आदित्यं अदितिदेवत्यं चरुं

अनुमत्यै प्रथमजो वृत्सो बहुरूपा हि पशवु-स्तस्मात्पृथमात्रं यदुग्नयेऽनीकवत उद्धारं वा अ-ग्नये देवेभ्य ऋतूनेव षट्थ्संप्तति: ॥ ७६ ॥

## हरिः ओम्. तथ्सत्.

## षष्ठप्रपाठकस्समाप्तः.

---

स्वगृहमागत्य निर्वपति । अस्यां पृथिव्यामदितिनाम्न्यां पुन-रागत्य प्रतिष्ठिता भवन्ति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये पारक्षुद्रे
प्रथमेऽष्टके षष्ठप्रपाठके दशमोऽनुवाकः

षष्ठप्रपाठकस्समाप्तः.



हरिः ओम्.

सप्तमप्रपाठकप्रारम्भः.

[1]एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । अथेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति । संवथ्सरो वा इन्द्राशुनासीरः । संवथ्सरेणैवास्मा अन्नमव रुन्धे । वायव्यं पयो भवति । वायुर्वै वृष्ट्यै प्रदापयिता । स एवास्मै वृष्टिं प्रदापयति । सौर्य एककपालो भवति । सूर्येण वा अमुष्मिन्लोके वृष्टिर्धृता । स एवास्मै वृष्टिं नि यच्छति ॥ १ ॥ द्वादशगवꣳ सीरं दक्षिणा समृद्ध्यै । [2]देवासुरास्संयत्ता आसन् । ते देवा अग्निमब्रुवन् ।

---

[1]अथ शुनासीरीयमधिकृत्योच्यते—एतद्ब्राह्मणान्येवेत्यादि ॥ वैश्वदेवब्राह्मणविहितान्येव पञ्च हवींषि प्रथमं भवन्ति । षष्ठादि विदधाति—अथेन्द्रायेत्यादि । शुनो वायुः सीर आदित्यः ताभ्यां सहित इन्द्रशब्देनोच्यते । संवत्सरो वा इति । इन्द्रश्च शुनश्च सीरश्चेत्येते संवत्सरस्य प्रवर्तकत्वात् संवत्सरः 'सुपां सुलुक्' इति इन्द्रशब्दात् सोराकारः । 'देवताद्वन्द्वे च' इति शुनासीरशब्दं आद्युदात्तः । नियच्छति न्यक्पातयति । द्वादशगवमिति । द्वादशाभिर्गोभिर्युक्तं लाङ्गलं 'गोरतद्धितलुकि' इत्यच् समासान्तः ॥

[2]देवासुरा इत्यादिरिन्द्रतुरीयस्य विधिः । प्रेवेति । अग्नि-

त्वया वीरेणासुरानभिभवामेति । सोऽब्रवीत् । त्रेधाऽहमात्मानं विकरिष्य इति । स त्रेधाऽऽत्मानं व्यकुरुत । अग्निं तृतीयम् । रुद्रं तृतीयम् । वरुणं तृतीयम् ॥ २ ॥ सोऽब्रवीत् । क इदं तुरीयमिति । अहमितीन्द्रोऽब्रवीत् । सं तु सृजावहा इति । तौ समसृजेताम् । स इन्द्रस्तुरीयमभवत् । यदिन्द्रस्तुरीयमभवत् । तदिन्द्रतुरीयस्यैन्द्रतुरीयत्वम् । ततो वै देवा व्यजयन्त । यदिन्द्रतुरीयं निरुप्यते विजित्यै ॥ ३ ॥ वहिनी धेनुर्दक्षिणा । यद्वहिनी । तेना-

कारमात्मानं त्रिकरिष्ये विभक्ष्ये इति । अग्न्यादींस्त्रीन् स्वात्मनो विभागान् पृथक् स्थापितवान् । 'पूरणाद्भागे तीयादन्' इति तृतीयशब्दो अन्प्रत्ययान्त आद्युदात्तः । एवमात्मानं त्रेधा विकृत्य अग्निरब्रवीत्—एवमग्न्यादयस्त्रीणि रूपाणि ममाभवन् । अथ को मे चतुर्थं रूपं स्यात् । 'चतुरश्छयतौ' इति छः । अथ इन्द्रोऽब्रवीत् अहं चतुर्थं रूपं तव स्यामिति । अथाग्निरब्रवीत् तथा क्रियतामिति । किं तु आवां संसृजावहै एकीभवाव, यथा मम त्वं वयस्यः । अथ तौ तथैव कर्तव्यमिति समसृजेताम्। ततस्स इन्द्रस्तुरीयं रूपमग्नेरभवत् । तस्माच्चतुर्थी देवता इन्द्रोऽभूदिति इन्द्रतुरीयत्वम् । बहुव्रीहौ छान्दसमन्तोदात्तत्वम् । वहिनी धारयितृत्वसामान्यात् प्रीणयितृत्वाच्च । यस्मादियं स्त्री सती दान्ता विधेया दाम्ना बद्धा भवति । तस्मात् वा-

ग्नेयी । यद्द्यौः । तेन॑ रौद्री । यद्धेनुः । तेनै॒न्द्री । य॒त्स्त्री सती दा॒न्ता । तेन॑ वारु॒णी सम॑र्द्ध्यै । [3]प्र॒जाप॑तिर्य॒ज्ञम॑सृजत ॥ ४ ॥ तꣳ सृ॒ष्टꣳ रक्षा॒ꣳस्यजि॒घाꣳसन् । स ए॒ताः प्र॒जाप॑तिरा॒त्मनो॑ दे॒वता॒ निर॑मिमीत । ताभि॒र्वै स दि॒ग्भ्यो रक्षा॑ꣳसि॒ प्राणु॑दत । यत्प॑ञ्चाव॒त्तीयं॑ जु॒होति॑ । दि॒ग्भ्य ए॒व तद्यज॑मा॒नो रक्षा॑ꣳसि॒ प्रणु॑दते । सम॑ूढ॒ꣳ रक्ष॒स्संद॑ग्ध॒ꣳ रक्ष॒ इ॒त्या॑ह । रक्षा॑ꣳस्ये॒व संद॑हति । अ॒ग्नये॑ रक्षो॒घ्ने स्वा-

रुणी पाशेन बद्धत्वात्तस्याः । केचिदाहुः—स्त्री इव सती च साध्वी च दान्ता च दाम्ना बद्धा च यस्मात्तस्मात् वारुणी वरुणानुग्राह्या, विपरीता तु वरुणगृहीता नश्यतीति ॥

[3]प्रजापतिर्यज्ञमित्यादि ॥ पञ्चावत्तीयविधिः । अजिघांसन् हन्तुमैच्छन् । स एता इति । 'अग्नये रक्षोघ्ने स्वाहा, यमाय, सवित्रे, वरुणाय, बृहस्पतये दुवस्वते रक्षोघ्ने'[1] इत्येता एकनेत्रकाश्च प्रागादिदिक्स्थिता उत्पादितवान् । यत्पञ्चावत्तीयमिति । दिक्षु मध्ये आहवनीयं व्युद्धृत्य पञ्चगृहीतं गृहीत्वा पञ्चाहुतीर्जुहोति—'ये देवाः पुरस्सदः'[1] इत्याद्यैः । समूढमिति । मध्ये तेषामुपसमूहं संदहति समूहं कृत्वा दहति 'अग्नये रक्षोघ्ने'[1] इत्युत्तराः पञ्चाहुतीर्जुहोति । विजिग्यानाभ्यः रक्षांसि

[1] सं. १-८-७.

हेत्याह । देवताभ्य एव विजिग्यानाभ्यो भागधेयं करोति । प्रष्टिवाही रथो दक्षिणा समृद्ध्यै ॥ ५ ॥

[1]इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । नमुचिमासुरं नालभत । तꣳ शच्याऽगृह्णात् । तौ समलभेताम् । सोऽस्मादभिशुनतरोऽभवत् । सोऽब्रवीत् । संधाꣳ संदधावहै । अथ त्वाऽवं स्रक्ष्यामि । न मा शुष्केण नार्द्रेण हनः ॥६॥ न दिवा न न-

विजितवतीभ्यः । 'सन्लिटोर्जेः' इति कुत्वत् । प्रष्टिवाही । व्याख्यातः[1] । त्रिभिर्युक्तः वीर्यातिशयात् समृद्धिः । केचित्तु— प्रष्टिवाही विकल्प्यते । यस्मिन्नह्नि इन्द्रतुरीयं कर्म क्रियते तस्यां रात्र्यामिदं पशुधर्मीयं कर्म ॥

[1]इन्द्रो वृत्रं हत्वेत्यादि ॥ अन्यानसुरान् जित्वा नमुचिनामानमसुरपुत्रं नालभत हन्तुं नाशक्नोत् । असुरस्यापत्यं आसुरः, शिवादिर्द्रष्टव्यः । ननु असुरस्य पुत्रोप्यसुर एव तत्र नार्थस्तद्धितवृत्त्या—उच्यते—वर्णविकारेण । तं शच्या शक्तिविशेषेण मल्लवदगृह्णात् । अथ तौ समलभेतां अन्योन्यं संरब्धावभवताम् । कपिलकादित्वाल्लत्वविकल्पः । अथ नमुचिः अस्मात् इन्द्रात् अभिशुनतरः बलेन अभिवृद्धतरोऽभवत् । श्वयतेः 'ओदितश्च' इति निष्ठानत्वम् । संप्रसारणं, दीर्घाभावः छान्दसः ।

[1] सं. १-८ ७.

क्रुमिति । स एतमुपां फेनमसिञ्चत् । न वा एष शुष्को नार्द्रो व्युष्टाऽऽसीत् । अनुदितस्सूर्यः । न वा एतद्दिवा न नक्तम् । तस्यैतस्मिन्लोके । अपां फेनेन शिर उदवर्तयत् । तदेनमन्ववर्तत । मित्रद्रुगिति ॥ ७ ॥ स एतानपामार्गानजनयत् । तानजुहोत् । तैर्वै स रक्षाꣳस्यपाहत । यदपामार्ग-

---

अथ स प्रवृद्धबलो नमुचिरिन्द्रमब्रवीत्—सन्धां सन्धि समयं संदधवहै करिष्यावः । गोपोषं पुष्णातीतिवत् सामान्यवचनो द्वितीयो द्रष्टव्यः । 'आतश्चोपसर्गे' इत्यङ् । यदीत्थं करिष्यते अथ त्वाऽवस्रक्ष्यामि विमोक्ष्यामि । कथमिति चेत्—अतः प्रभृति मां न शुष्केण नार्द्रेण हनः हन्याः । तथा न दिवा न च नक्तं मां हन्याः तव विमोचनस्यायं पण इति । अथ तथेत्यभ्युपगते इन्द्रं मुमोच । अथेन्द्रस्तमभिसन्धित्सुः अपां फेनमसिञ्चत् आयुधत्वेनोत्पादितवान् न ह्येष शुष्को न चार्द्रः। अथ यदा रात्रिः व्युष्टाऽऽसीत् सूर्यश्चानुदितः न ह्ययं कालो दिवा अनुदितत्वाच्च सूर्यस्य । न च नक्तं विभातत्वाद्रजन्याः। अथ एतस्मिन्लोके अनहोरात्रात्मके अवकाशे अपां फेनेनाशुष्कार्द्रस्वरूपेण तस्य नमुचेश्शिर उदवर्तयत् ऊर्ध्वमवर्तयत् । अच्छिनदिति यावत् । अथ तत् उद्वर्तितं शिरः एनमिन्द्रमन्ववर्तत अन्वधावत् । किंकिं ब्रुवन्—मित्रद्रुगिति ।

होमो भवति । रक्षसामपहत्यै । [5]एकोल्मुकेन यन्ति । तद्धि रक्षसां भागधेयम् । इमां दिशं यन्ति। एषा वै रक्षसां दिक् । स्वायामेव दिशि रक्षाꣳसि हन्ति ॥ ८ ॥ [6]स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै रक्षसामायतनम् । स्व एवायतने रक्षाꣳसि हन्ति । पर्णमयेन स्रुवेण जुहोति । ब्रह्म वै पर्णः। ब्रह्मणैव रक्षाꣳसि हन्ति । देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत एव रक्षाꣳसि हन्ति । हतꣳ रक्षोऽवधिष्म रक्ष इत्याह । रक्षसाꣳ स्तृत्यै ।

मित्राय द्रुह्यतीति मित्रध्रुक् । 'सत्सूद्विष' इति क्विप्, भषभावः छान्दसः, 'वा द्रुहमुह' इति घत्वम् । आमन्त्रिताद्युदात्तत्वम् । हे मित्रद्रोहिन्! हनिष्यसीति[1] वदन्नन्ववर्तत । अथेन्द्रः अपामार्गान् जनयित्वा हुत्वा रक्षांसि हतवान् तेन शिरसा सह सर्वाणि रक्षांसि नाशितवान् । यदित्यादि । गतम् ॥

[5]एकेन उल्मुकेन दक्षिणाग्नेराहृतेन ॥ इमामिति । उत्तरापराम् ॥

[6]स्वकृत इरिण इत्यादि ॥ व्याख्यातम्[2] ॥ पर्णमयेन पलाशेन । द्व्यचश्छन्दसि' इति मयट् । 'देवस्य त्वा'[3] इत्यनुद्रुत्य

[1] ख. न भविष्यसीति.

[2] सं. ३-४-८, ६-२-४. [3] सं. १-८-७.

यद्धस्ते तद्दक्षिणा निरवत्त्यै । अप्रतीक्षमा यन्ति । रक्षसामन्तर्हित्यै ॥ ९ ॥

यच्छति वरुणं तृतीयं विजित्या असृजत समृद्ध्यै हनो मित्रद्रुगिति हन्ति स्तृत्यै त्रीणि च ॥ १ ॥

[1]धात्रे पुरोडाशं द्वादशकपालं निर्वपति । संवथ्सरो वै धाता । संवथ्सरेणैवास्मै प्रजाः प्रजनयति । अन्वेवास्मा अनुमतिर्मन्यते । राते राका ।

'रक्षसो वधं जुहोमि'[1] इत्यपामार्गसक्तून् । अथ 'हतं रक्षः'[1] इति स्रुव मनुप्रहृत्य 'अवधिष्म रक्षः'[1] इत्युत्तिष्ठति । रक्षसां हिंसाया एव भवति । तदानीं यद्धस्ते वासस्तद्दक्षिणां ददाति निरवत्त्यै निष्कृष्य रक्षांसि प्रस्थापयितुम् । किन्न् पूर्वोक्तदिशा । अप्रतीक्षमित्यादि । गतम् ॥

इति सप्तमे प्रथमोऽनुवाकः.



[1]धात्रे पुरोडाशमित्यादि ॥ दैविकाहविषाम् । अनुमतिः प्रजा अनुमन्यते राका राते ददाति । सिनीवाली प्रजनयति ।

[1]सं. १-८-७.

प्र सिञ्चिवाली जनयति । प्रजास्वेव प्रजातासु कुहां वाचं दधाति । मिथुनौ गावौ दक्षिणा समृद्ध्यै । [2]आग्नावैष्णवमेकादशकपालं निर्वपति । ऐन्द्रावैष्णवमेकादशकपालम् ॥ १० ॥ वैष्णवं त्रिकपालम् । वीर्यं वा अग्निः । वीर्यमिन्द्रः । वीर्यं विष्णुः । प्रजा एव प्रजाता वीर्ये प्रतिष्ठापयति । तस्मात्प्रजा वीर्यावतीः । वामन ऋषभो वही दक्षिणा । यद्वही । तेनाग्नेयः । यदृषभः ॥ ११ ॥ तेनैन्द्रः । यद्वामनः । तेन वैष्णवस्समृद्ध्यै । [3]अग्नीषोमीयमेकादशकपालं निर्वपति । इन्द्रासोमीयमेकादशकपालम् । सौम्यं चरुम् । सोमो वै रेतोधाः । अग्निः प्रजानां प्रजनयिता । वृद्धानामि-

कुहा प्रजासु वाचं दधाति । मिथुनौ स्त्रीपुंसौ गावौ । मिथुनत्वात् सृष्टिसमृद्धिर्भवति ॥

[2]वीर्यं वा इत्यादि ॥ तदेतुत्वात्ताच्छब्द्यम् । वीर्यावतीरिति । 'अन्येषामपि' इति दीर्घः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । वामन इत्यादि । गतम् ॥

[3]अग्नीषोमीयमिति ॥ द्यावापृथिव्यादिना छः । इन्द्रासोमीयम् । छान्दसश्छः । बभ्रुः ईषत्पिङ्गलः ॥

न्द्रः प्रदापयिता । सोम एवास्मै रेतो दधाति॥ १२
अग्निः प्रजां प्रजनयति । वृद्धामिन्द्रः प्रयच्छति ।
बभ्रुर्दक्षिणा समृद्ध्यै । [4]सोमापौष्णं चरुं निर्वपति।
ऐन्द्रापौष्णं चरुम् । सोमो वै रेतोधाः । पूषा प-
शूनां प्रजनयिता । वृद्धानामिन्द्रः प्रदापयिता ।
सोम एवास्मै रेतो दधाति। पूषा पशून्प्रजनयति॥
१३॥ वृद्धानिन्द्रः प्रयच्छति । पौष्णश्चरुर्भवति ।
इयं वै पूषा । अस्यामेव प्रति तिष्ठति । श्यामो
दक्षिणा समृद्ध्यै । [5]बहु वै पुरुषोऽमेध्यमुपगच्छ
ति । वैश्वानरं द्वादशकपालं निर्वपति । संवथ्सरो
वा अग्निर्वैश्वानरः । संवथ्सरेणैवैनꣳ स्वदयति ।
हिरण्यं दक्षिणा ॥ १४ ॥ पवित्रं वै हिरण्यम् ।
पुनात्येवैनम् । [6]बहु वै राजन्योऽनृतं करोति । उप

[4]इयं वा इति ॥ पुष्टिहेतुत्वात् पूषा पृथिवी ॥

[5]बहु वा इत्यादि ॥ अमेध्यं अयज्ञार्हं बहूपगच्छति पु
रुषो येन स्वयमभोज्यान्नः स्यात् । 'ययतोश्चातदर्थे' इत्युत्तर-
पदान्तोदात्तत्वम् । स्वदयतीति । एनं यजमानं भोज्यान्नं क-
रोति । गतमन्यत् ॥

[6]बहु वा इत्यादि ॥ राजन्यः क्षत्रियो बह्वनृतं वाचं

जाम्यै हरते । जिनाति ब्राह्मणम् । वदत्यनृतम् । अनृते खलु वै क्रियमाणे वरुणो गृह्णाति । वारुणं यवमयं चरुं निर्वपति । वरुणपाशादेवैनं मुञ्चति । अश्वो दक्षिणा । वारुणो हि देवतयाऽश्वस्समृद्ध्यै ॥

ऐन्द्रावैष्णवमेकादशकपालं यदृषभो द-
धाति पूषा पशून्प्र जनयति हिरण्यं
दक्षिणा दक्षिणैकं च ॥ २ ॥

---

करोति । 'राजश्वशुराद्यत्' 'राज्ञोऽपत्ये जातिग्रहणम्' किंकिमित्याह—जाम्यै अहिते उपहरते प्रणयं प्रयच्छति । जामिः भगिनीत्येके । कश्चिदाह—जामिर्जाड्यमालस्यं मरणं कंचिन्मारयितुं कस्मैचिदभिसंधित्सया धनमुपहरति । यद्वा—इदानीमुदासितव्यमिति धनं प्रेषयति । अपर आह—जामिर्जाया । कर्माणि चतुर्थी । भार्यामपि कस्मैचिदुपहरते । यद्वा—परस्य भार्यामुपेत्य अपहरति, किञ्च क्षिपति । जिनाति ब्राह्मणं करातिप्रसङ्गान्निर्धनीकरोति । अनृतमसत्यं च परातिसंधित्सया वदाति सर्वं चेदमनृतं पापम् । अनृते च क्रियमाणे वरुणो गृह्णाति । वारुणेन वरुणपाशान्मुक्तो भवति ॥

इति सप्तमे द्वितीयोऽनुवाकः.

[1]रत्निनामेतानि हवीꣳषि भवन्ति । एते वै राष्ट्रस्य प्रदातारः । एतेऽपादातारः । य एव राष्ट्रस्य प्रदातारः । येऽपादातारः । त एवास्मै राष्ट्रं प्रयच्छन्ति । राष्ट्रमेव भवति । [2]यथ्समाहृत्य निर्वपेत् । अरत्निनस्स्युः । यथायथं निर्वपति रत्नित्वाय ॥ १६
[3]यथ्सद्यो निर्वपेत् । यावतीमेकेन हविषाऽऽशिषमवरुन्धे । तावतीमव रुन्धीत । अन्वहं निर्वपति । भूयसीमेवाशिषमव रुन्धे । भूयसो यज्ञक्रतूनुपैति ।

---

[1]रत्निनामेतानीत्यादि ॥ रत्नवन्तो रत्निनः प्रकृष्टैश्वर्याः प्रकृतिविशेषाः तेषां गृहेषु एतानि वक्ष्यमाणानि हवींषि भवन्ति। एते वै राष्ट्रस्य राज्यस्य प्रदातारः एत एव अपादातारः अपहर्तारः । तस्मात्तेषां निर्वापात् त एवास्मै राष्ट्रं प्रयच्छन्ति । ततः स्वाधीनसर्वराष्ट्रो भवति ॥

[2]अथ यदि सर्वान्रत्निनः समाहृत्य सर्वानेकत्र कृत्वा हवींषि निर्वपेत् । अरत्निनस्ते स्युः रत्निनो न स्युः । न हि प्रकृष्टैश्वर्याणामिदमुचितम् । तस्मात् यथायथं स्वेस्वे गृहे निर्वपति, रत्नित्वस्थापनार्थम् ॥

[3]अथ यदि सद्यः समानेऽह्नि एकस्मिन् दिवसे सर्वाणि निर्वपेत् एकेन हविषा यावद्यज्ञफलं प्राप्नोति तावदेव सर्वैरपि अवरुन्धीत एकस्मिन् काले कृतस्यैकत्वात्, तस्मादन्वहमनुक्रमेण

ˋबार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । मुखत एवास्मै ब्रह्म सꣳश्यति । अथो ब्रह्मन्नेव क्षत्त्रमन्वारम्भयति । शितिपृष्ठो दक्षिणा समृद्ध्यै ॥ १७
ऐन्द्रमेकादशकपालꣳ राजन्यस्य गृहे । इन्द्रियमेवावरुन्धे । ऋषभो दक्षिणा समृद्ध्यै । आदित्यं चरुं महिष्यै गृहे । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । धेनुर्दक्षिणा समृद्ध्यै । भगाय चरुं वावातायै गृहे । भगमेवास्मिन्दधाति । विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै ॥१८॥ नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम् ।

---

दिनेदिने निर्वपति, भूयसीमाशिषं फलमवरुन्धे । बहुतराश्च यज्ञक्रतव आवृत्ता भवन्ति ॥

ˋबार्हस्पत्यमित्यादि ॥ मुखत इति । यज्ञोपक्रम एव ब्रह्म ब्रह्मवर्चसं ब्राह्मणजातिं वा तीक्ष्णीकरोति अस्मै यजमानार्थमेव । वावाता महिष्या अन्या आगन्तुर्वैश्या राज्ञो वल्लभा । भगं सौभाग्यमैश्वर्यं वाऽस्मिन् स्थापयति । विचित्तगर्भा प्रज्ञातगर्भा । 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः । पष्ठौही चतुर्वर्षा युग्यपार्श्ववहनशक्ता । पष्ठं वहतीति 'वहश्च' इति क्विपि, 'वाह ऊठ्' 'एत्येधत्यूठ्सु' इति वृद्धिः । परिवृक्तिः राज्ञा भोगात् बहिष्कृता दुर्भ-

पाप्मानमेव निरृर्तिं निरवदयते कृष्णा कूटा द-
क्षिणा समृद्ध्यै । आग्नेयमष्टाकपालꣳ सेनान्यो गृहे।
सेनामेवास्य सꣳश्यति । हिरण्यं दक्षिणा समृ-
द्ध्यै । वारुणं दशकपालꣳ सूतस्य गृहे । वरुणस-
वमेवावरुन्धे । महानिरष्टो दक्षिणा समृद्ध्यै । मा-
रुतꣳ सप्तकपालं ग्रामण्यो गृहे ॥ १९ ॥ अन्नं वै
मरुतः । अन्नमेवावरुन्धे । पृश्निर्दक्षिणा समृद्ध्यै ।
सावित्रं द्वादशकपालं क्षत्तुर्गृहे प्रसूत्यै । उपध्वस्तो
दक्षिणा समृद्ध्यै । आश्विनं द्विकपालꣳ संग्रहीतु-
र्गृहे । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवा-
स्मै भेषजं करोति । सवात्यौ दक्षिणा समृद्ध्यै ।
पौष्णं चरुं भागदुघस्य गृहे ॥२०॥ अन्नं वै पूषा ।
अन्नमेवाव रुन्धे । श्यामो दक्षिणा समृद्ध्यै । रौद्रं

---

गा । कूटा भग्नैकशृङ्गी कुटिलशृङ्गीत्येके । सेनान्यः सेनापतेः । 'उदात्तयणः' इति विभक्त्युदात्तस्य 'नञ् धात्वोः' इति प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः' इति षष्ठी स्वर्यते । सेनां संश्यति निशितीक-रोति । सूतः सारथिः । वरुणसवो वरुणानुज्ञा । महानिरष्टः महाकायो निष्कासितवृषणः । ग्रामणीः ग्रामस्याधिपतिः । पूर्ववत् स्वरितत्वम् । पृश्निः शुक्ला, ह्रस्वेत्येके । क्षत्ता वैश्येन शूद्रायां जातः ।

गा॒वी॒धु॒कं च॒रुम॑क्षावा॒पस्य॑ गृ॒हे । अ॒न्त॒त ए॒व रु॒द्रं निर॑वदयते । श॒बल॒ उद्वा॑रो॒ दक्षि॑णा॒ समृ॑द्ध्यै । द्वाद॑शै॒तानि॑ ह॒वी॑ᳲषि भवन्ति । द्वाद॑श॒ मासा॑स्संव॒थ्स॒रः । सं॒व॒थ्स॒रेणै॒वास्मै॑ रा॒ष्ट्रमव॑रुन्धे । रा॒ष्ट्रमे॒व भ॑वति ॥ २१ ॥ [1]यन्न प्रति॒ निर्व॑पे॒त् । र॒त्निन॑ आ॒शिषो॑ऽवरुन्धीरन्न् । प्रति॒ निर्व॑पति । इन्द्रा॑य सु॒त्रा॒म्णे पु॒रो॒डा॒शमेका॑दशकपालम् । इन्द्रा॑याᳲहो॒मुचे॑ । आ॒शिष॑ ए॒वाव॑रुन्धे । अ॒यं नो॒ राजा॑ वृ॒त्र॒हा राजा॑ भू॒त्वा वृ॒त्रं व॑ध्या॒दित्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते ।

---

सर्वकारी राज्ञः प्रतिहार इत्येके । उपध्वस्तः विहतशरीरः । संग्रहीता भाण्डागारिकः । सवात्यौ वत्सान्तरेण दोह्या मृतवत्सा अन्यदीयं वत्सं समानं वात इति सवात्यौ । वातेश्शतरि 'उगितश्च' इति ङीप् । भागदुघः माहानसिकः गोपालाध्यक्ष इत्येके । 'दुहः कब्घश्च' इति घः । अक्षावापः सभाध्यक्षः । शबलो नानावर्णः । उद्वारः ऊर्ध्ववालः । द्वादशेत्यादि । गतम् ॥

[1]यन्न प्रति निर्वपेदिति ॥ यदि प्रत्यागत्य गृहे न निर्वपेत् रत्निन एवाशिषः फलानि अवरुन्धीरन् तस्मात्प्रत्यागत्य यजमानस्य गृहे इन्द्राय सुत्राम्णे इन्द्रायांहोमुचे निर्वपेत् । स्वयमेवाशिषोऽवरुन्धे । 'अयं नो राजा' इति पुरस्तात् स्विष्टकृतोऽभ्यर्थुर्वपति । वृत्रं वध्यादिति आशिषमनेनाशास्ते ॥

---

[1]सं. १-८-१०.

[6]मैत्राबार्हस्पत्यं भवति । श्वेतायै श्वेतवत्सायै दुग्धे ॥ २२ ॥ बार्हस्पत्ये मैत्रमपि दधाति । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति । बार्हस्पत्येन पूर्वेण प्रचरति । मुखत एवास्मै ब्रह्म सञ्छ्यति । अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति । [7]स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयंकृत इध्मः । अनभिजितस्याभिजित्यै । तस्माद्राज्ञामरण्यमभिजितम् ।

[6]मैत्राबार्हस्पत्यमिति ॥ अभिषेचनीये उक्थ्ये दीक्षणीया द्विह विष्केयमिष्टिः । मैत्रश्च बार्हस्पत्यश्च । श्वेतायाः श्वेतवत्सायाः दुग्धे बार्हस्पत्यः । तत्प्रभवे आज्ये मैत्रः, 'येऽकर्णास्स आज्ये मैत्रः'[1] इति दर्शनात् । बार्हस्पत्ये मैत्रमपिदधाति मैत्राबार्हस्पत्यमपिदधाति । एवं ब्रह्मक्षत्रे समीची सङ्गते स्थापयति । अपि च बार्हस्पत्ये मैत्रस्य स्थापनात् ब्रह्मणि क्षत्रं प्रतिष्ठापितं भवति । बार्हस्पत्येनेत्यादि । गतम् ॥

[7]स्वयंकृतेति ॥ 'देवस्य त्वा'[2] इति स्फ्यादानादिकं 'धा असि'[3] इत्यन्तं न क्रियते । तथा स्वयमेव लूनं बर्हिर्भवति । असिदादिना न छिनत्ति । स्वयं भग्नान्याहरति । दाप् लवने, इत्वनत्वे छान्दसे । तथा स्वयंकृत इध्मः न व्रश्चनीयः । उभयत्र सन्नहनादिकं तु क्रियत एव । अनभिजितस्याप्यभिजयाय

[1] सं. १-८-९. [2] सं. १-१-९, २-६-४. [3] सं. १-१-९, २-६-४.

सैव श्वेता श्वेतवंथ्सा दक्षिणा समृंद्ध्यै ॥ २३ ॥

रक्षित्वाय समृंद्ध्यै पष्ठौही दक्षिणा समृं
द्ध्यै ग्रामण्यों गृहे भागदुघस्यं गृहे
भवति दुग्धेऽभिजित्यै द्वे च ॥३॥

[1]देवसुवामेतानि हवींषि भवन्ति । एतावन्तो
वै देवानांꣳ सवाः । त एवास्मैं सवान्प्रयंच्छन्ति ।

भवति । यदन्यैरभिजेतुमशक्यं तदप्यभिजितं भवति तस्माद्ग्रामा-
मरण्यमप्यभिजितं भवति । सैवेति । यस्या दुग्धे आज्ये
च चरुक्लृप्ति सैव श्वेता श्वेतवत्सा दक्षिणा ॥

इति सप्तमे तृतीयोऽनुवाकः.

[1]देवसुवामित्यादि ॥ एतान्यभिषेचनीयेऽग्नीषोमीयस्य पशुपुरो-
डाशस्यानुनिर्वाप्याणि अष्टौ हवींषि । देवासुवां 'अग्नये गृहपतये'[1]
इत्याम्नातानाम् । एतावन्तो हि देवानां मध्ये सवा ऐश्वर्य-
स्यानुज्ञातारः । सौतेः पचाद्यच् । यद्वा—सववन्तः, मत्वर्थीयो
लुप्यते । तद्धेतुत्वात्ताच्छब्द्यम् । त एवास्मै सवान् ऐश्वर्या-
णि प्रयच्छन्ति । ते एवैनं सुवन्ते । 'वा छन्दसि' इ-
त्यन्तोदात्तत्वम् । सुवन्ते ईश्वरमनुजानन्ति ॥

[1]सं. १-८-१०.

त एनꣳ सुवन्ते । [2]अ॒ग्निरे॒वैनं॑ गृ॒हप॑तीनाꣳ सुवते । सोमो॒ वन॒स्पती॑नाम् । रु॒द्रः प॑शू॒नाम् । बृ॒ह॒स्पति॒र्वा॒चाम् । इन्द्रो॑ ज्ये॒ष्ठाना॑म् । मि॒त्रस्स॒त्याना॑म् ॥ २४ वरु॑णो॒ धर्म॑पतीनाम् । ए॒तदे॒व सर्वं॑ भवति । स॒वि॒ता त्वा॑ प्रस॒वानाꣳ सुव॒तामिति॒ हस्तं॑ गृह्णाति॒ प्रसू॑त्यै । ये दे॑वा देव॒सुव॒स्स्थेत्या॑ह । य॒था॒य॒जु॒रे॒वैतत् । म॒ह॒ते क्ष॒त्राय॑ मह॒त आधि॑पत्याय म॒ह॒ते जान॑राज्या॒येत्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । ए॒ष वो॑ भरता॒ राजा॒ सोमो॒ऽस्माकं॑ ब्राह्म॒णा॒नाꣳ राजेत्या॑ह । तस्मा॒त्सोम॑राजानो ब्राह्म॒णाः । प्रति॒त्यन्नाम॑ रा॒ज्यम॑धा॒यीत्या॑ह ॥ २५ ॥ रा॒ज्यमे॒वास्मि॒न्प्रति॑ दधाति । स्वां त॒नुवं॒ वरु॑णो अशिश्रे॒दित्या॑ह । व॒रु॒ण॒स॒वमे॒वाव॑रुन्धे । शुचे॒र्मि॒त्रस्य॒ व्रत्या॑ अभू॒मेत्या॑ह । शुचि॑मे॒वैनं॑ व्र॒त्यं॑ करोति । अम॑न्महि मह॒त ऋ॒तस्य॒ नामेत्या॑ह । म॒नु॒त ए॒वैन॑म् । सर्वे॒ व्राता॒ वरु॑णस्याभू॒व-

[2]कः कस्येत्याह—अग्निरेवेत्यादि ॥ गृहपतीनामीश्वरमेनमनुजानात्यग्निः । सोमो वनस्पतीनामिति । एतदेवेति । एतत्सर्वमवितथं भवत्येव । तत्सर्वमैश्वर्यं यजमानः प्राप्नोत्येव । देवत्वमैश्वर्यविशेषं यजमानस्यानुजानन्तीति देवसुवोऽग्न्यादयः ॥

न्नित्याह । सर्वव्रातमेवैनं करोति । वि मित्र एवैरराति-
मतारीदित्याह ॥ २६ ॥ अरातिमेवैनं तारयति ।
असूषुदन्त यज्ञियां ऋतेनेत्याह । स्वदयत्येवैनम् ।
व्यु त्रितो जरिमाणं न आनडित्याह । आयुरेवा
स्मिन्दधाति । द्वाभ्यां विमृष्टे । द्विपाद्यजमानः प्र-
तिष्ठित्यै । [3]अग्नीषोमीयस्य चैकादशकपालस्य देव-
सुवां च हविषामग्नये स्विष्टकृते समवद्यति । देव-
ताभिरेवैनमुभयतः परिगृह्णाति । [4]विष्णुक्रमान्क्र-
मते । विष्णुरेव भूत्वेमाल्लोकानभिजयति ॥२७॥

सत्यानामधायीत्याहातारीदित्याह
[1]क्रमत एकं च ॥ ४ ॥

[3]पशुपुरोडाशस्विष्टकृतः अग्नीषोमीयस्य चेत्यादि समव-
द्यति अग्नीषोमीयतंत्रत्वमेतेन देवसुवां दर्शयति ॥

[4]विष्णुक्रमानिति ॥ 'विष्णोः क्रमोसि विष्णोः क्रान्तमसि'' इत्यादिना ॥

इति सप्तमे चतुर्थोऽनुवाकः.

---o---

[1]सं. १-८-१०.

[1]अर्थेतस्स्थेति जुहोति । आहुत्यैवैना निष्क्रीय गृह्णाति । अथो हविष्कृतानामेवाभिघृतानां गृह्णाति । वहन्तीनां गृह्णाति । एता वा अपाꣳराष्ट्रम् । राष्ट्रमेवास्मै गृह्णाति । अथो श्रियमेवैनमभि वहन्ति । [2]अपां पतिरसीत्याह । मिथुनमेवाकः । वृषाऽस्यूर्मि-

[1]अर्थेतस्स्थेत्यादि ॥ अभिषेकार्थमपां ग्रहान्वाग्रव्यैः गृह्णाति षोडश सप्तदश वा 'अर्थेतस्स्थ'[1] इत्यादिमन्त्रैः । एनास्वप्सु प्रथमं जुहोति आहुत्या मूल्यस्थानीयया एना आपो निष्क्रीय स्वीकृत्य गृह्णाति । अथो अपि च हविष्कृतानां हविष्ट्वं प्राप्तानां अप एव अभिघृतानां अभिघारितानां अपां गृह्णाति प्रथमाहुतिप्रक्षेपेण हविष्कृत्य अभिघार्य च आपो गृहीता भवन्ति। 'अर्थेतः स्थ'[1] इति वहन्तीनां गृह्णाति । एताः प्रवहन्त्यः आपः अपां राष्ट्रं सारभूतोंशः, राजमानो वा अंशः । तस्मादेतासां ग्रहणेन यजमानाय राष्ट्रं गृह्णाति । अपि च एनं यजमानं अभि अस्योपरि श्रियं वहन्ति । 'अभिरभागे' इति लक्षणे अभेः कर्मप्रवचनीयत्वम् । राष्ट्रभूतानामुपरि हुत्वा ग्रहणात् राष्ट्रश्रीरेनमभिलक्ष्य तिष्ठतीति ॥

[2]अपां पतिरसीति ॥ समुद्रात्पुनदाद्वा शोणादेर्गृह्णाति । मिथुनमेवाकः करोति, पुंस्त्वादेषां स्त्रीत्वाच्चेतरासाम् । 'मन्त्रे घस' इति च्लेर्लुक् । वृषाऽसीति प्रतिस्रोतममूर्मिं गृह्णाति । ऊर्मिमन्तं गवादिसंज्ञानवन्तं यजमानं करोति । वृषसेनोसि इत्यनु-

[1]सं. १-८-११.

रित्याह ॥ २८ ॥ ऊर्मिमन्तमेवैनं करोति । वृषसे-
नोऽसीत्याह । सेनामेवास्य सꣳश्यति । व्रजक्षित-
स्स्थेत्याह । एता वा अपां विशः । विशमेवास्मै प-
र्यूहति । मरुतामोजस्स्थेत्याह । अन्नं वै मरुतः ।
अन्नमेवावरुन्धे । सूर्यवर्चसस्स्थेत्याह ॥ २९ ॥ रा-
ष्ट्रमेव वर्चस्व्यकः । सूर्यत्वचसस्स्थेत्याह । सत्यं
वा एतत् । यद्वर्षति । अनृतं यदातपति वर्षति ।
सत्यानृते एवावरुन्धे । नैनꣳ सत्यानृते उदिते हिꣳ-
स्तः । य एवं वेद । मान्दास्स्थेत्याह । राष्ट्रमेव

स्रोतसं गृह्णाति । संश्यतीति । संशितत्वं सेनाया वर्षितृत्वात् । व्रजक्षितः इति कूप्या गृह्णाति । एता अपां मध्ये विशो ध्रुवाः व्रजे निवसन्तीति । तस्माद्विशं पर्यूहति परित आनयति यजमानाय । मरुतामित्यादि आवर्तजलं गृह्णाति । अन्न हेतवो मरुतः । सूर्यवर्चस इत्यातपति वर्ष्या गृह्णाति । सत्यं खल्वेतत् अमोघफलं भवति प्रभूतत्वात् । यदातपति दुर्दिनाय-माने यत् वर्षति तदनृतं अल्पत्वेनासाधकत्वात् । तस्मात् सत्यानृते अवरुन्धे विधेयीकर्तुं शक्नोत्येवंवेदितारम् । सत्यानृते उदिते उज्ज्वले नियन्तुमशक्ये भूत्वा न हिंस्तः एवंवेदितारमपि न हिंस्तः किं पुनरातपति वर्ष्या गृह्णत इति । मान्दाः इति स्थावरा ह्रादिनीर्वा गृह्णाति । स्थावराणां तटाकादिजलानां

ब्रह्मवर्चस्यंकः ॥ ३० ॥ वाशास्स्थेत्याह । राष्ट्रमेव वश्यंकः । शक्वरीस्स्थेत्याह । पशवो वै शक्वरीः । पशूनेवावरुन्धे । विश्वभृतस्स्थेत्याह । राष्ट्रमेव पयस्व्यंकः । जनभृतस्स्थेत्याह । राष्ट्रमेवेन्द्रियाव्यंकः । अग्नेस्तेजस्यास्स्थेत्याह ॥ ३१ ॥ राष्ट्रमेव तेजस्व्यंकः । अपामोषधीनाꣳरसस्स्थेत्याह । राष्ट्रमेव मधव्यमकः । सारस्वतं ग्रहं गृह्णाति । एषा वा अपां पृष्ठम् । यथ्सरस्वती । पृष्ठमेवैनꣳ समानानां

ब्रह्मवर्चसवृद्धिहेतुत्वात् । वाशा इत्यवश्यायोदकं गृह्णाति । राष्ट्रमेव वशीकरोति । स्वाधीनत्वे वचनात् । शक्वरीरिति गोरुल्व्या गृह्णाति । पशव इति । उल्व्यानां पशुरक्षणहेतुत्वात् ताच्छब्द्यम् । विश्वभृत इति पयो गृह्णाति । राष्ट्रं पयस्वि करोति । जनभृत इति दधि गृह्णाति । राष्ट्रमिन्द्रियावि इन्द्रियवत् करोति । दध्न इन्द्रियहेतुत्वात् । अग्नेस्तेजस्या इति घृतं गृह्णाति । राष्ट्रं तेजस्वि करोति, 'तेजो घृतम्'[1] इति । अपामिति मधु गृह्णाति । राष्ट्रं मधव्यं करोति मधुने हितं मध्विव सर्वस्य प्रियं भवति । 'उगवादिभ्यो यत्' । सारस्वतमित्यादि । स्व उदके । अपां पृष्ठं प्रधानभूता सरस्वती नदी समानानां पृष्ठमुच्छ्रितं तादृशं यजमानं करोति ॥

[1] ब्रा. ३-१२-५.

करोति। [3]षोडशभिर्गृह्णाति। षोडशकलो वै पुरुषः। यावानेव पुरुषः। तस्मिन्वीर्यं दधाति। षोडशभिर्जुहोति षोडशभिर्गृह्णाति। द्वात्रिꣳशथ्संपद्यन्ते। द्वात्रिꣳशदक्षराऽनुष्टुक्। वागनुष्टुफ्सर्वाणि छन्दाꣳसि। वाचैवैनꣳ सर्वेभिश्छन्दोभिरभिषिञ्चति ॥३२

ऊर्मिरित्याह सूर्यवर्चसस्स्थेत्याह ब्रह्मवर्चस्यंकस्तेजस्यास्स्थेत्याहैव पुरुषष्टु॥५॥

[3]षोडशभिरिति ॥ 'अर्थेतः' इत्यादिभिः। षोडशकलः षोडशावयवः पञ्चभिः भूतैः पञ्चभिः ज्ञानेन्द्रियैः पञ्चभिः कर्मेन्द्रियैः मनसा च। यद्वा—चन्द्रः षोडशकलः तदात्मा जीव इति। यावानित्यादि। गतम्। षोडशभिरिति। एतैरेव जुहोति। एतैरेव गृह्णाति चेति द्वात्रिंशत् भवन्ति। अनुष्टुप्च द्वात्रिंशदक्षरा। सा चानुष्टुप् सर्ववाङ्मयहेतुत्वात् स्वयं वागेव सा च वाक् सर्वाणि छन्दांसि तत्परिणामत्वात् सर्वच्छन्दसाम्। तस्माद्वाचा छन्दोभिश्च यजमानमभिषिञ्चति। द्वात्रिंशत्संख्यान्वयात् वाचो वीर्येण सर्वच्छन्दोवीर्येण चेत्यर्थः ॥

इति सप्तमे पञ्चमोऽनुवाकः.



[1]सं. १-८-११.

[1]देवीरापस्सं मधुमतीर्मधुमतीभिस्सृज्यध्वमि-त्याह । ब्रह्मणैवैनास्सꣳसृजति । अनाधृष्टास्सीदतेत्याह । ब्रह्मणैवैनास्सादयति । अन्तरा होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयन्ति । आग्नेयो वै होता । ऐन्द्रो ब्राह्मणाच्छꣳसी । तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं परिगृह्णाति । [2]हिरण्येनोत्पुनाति । आहुत्यै हि पवित्राभ्यामुत्पुनन्ति व्यावृत्त्यै ॥ ३३ ॥ शतमानं भवति । शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । [3]अनिभृष्टमसी-

[1]देवीराप इत्यादि ॥ एवं गृहीतानपांग्रहान्मैत्रावरुणे द्रोणकलशे अनेन ममवनयति । ब्रह्मणा परिवृढेन परेण एना अपस्संसृजति मधुमत्त्वलिङ्गात् । अनाधृष्टाः इति होतृब्राह्मणाच्छंसिनोः धिष्ण्यावन्तरेण सादयति । ब्रह्मणैव साक्षादेनाः सादयति. अनाधृष्टत्वलिङ्गात् । सादयतीत्युक्तं, क्वेत्याह—अन्तरेति । गतम् ॥

[2]हिरण्येनेति ॥ ननु पवित्राभ्यां सर्वत्रोत्पवनं क्रियते, तत्राह—आहुत्यर्थं यत्तदेव पवित्राभ्यामुत्पुनन्ति, तस्मादनाहुत्यर्थत्वादिदं हिरण्येनोत्पूयते व्यावृत्त्यै विभागाख्यापनाय । शतमानमित्यादि[1] । गतम् ॥

[3]अनिभृष्टमसीति ॥ शतमानं हिरण्यं प्रगृह्णाति । अनिभृष्टं

[1] सं. १-२-६.

त्याह । अनिभृष्टꣳ ह्येतत् । वाचो बन्धुरित्याह । वाचो ह्येष बन्धुः । तपोजा इत्याह । तपोजा ह्येतत् । सोमस्य दात्रमसीत्याह ॥ ३४ ॥ सोमस्य ह्येतद्दात्रम् । [4]शुक्रा वश्शुक्रेणोत्पुनामीत्याह । शुक्रा ह्यापः । शुक्रꣳ हिरण्यम् । चन्द्राश्चन्द्रेणेत्याह । चन्द्रा ह्यापः । चन्द्रꣳ हिरण्यम् । अमृता अमृतेनेत्याह । अमृता ह्यापः । अमृतꣳ हिरण्यम् ॥ ३५ ॥ स्वाहा राजसूयायेत्याह । राजसूयाय ह्येना उत्पुनाति । [5]सधमादो द्युम्निनीरूर्ज एता इति वारुण्यर्चा गृह्णाति । वरुणस-

खल्वेतद्धिरण्यं दाहयन्ति चैतन्न नश्यति तादृशं हिरण्यं, वाचो बन्धनं हिरण्यं, हिरण्यवतो हि वाक् श्रोत्रेषु बद्ध्यते, अन्येषां तु न श्रूयते । यद्वा—हिरण्यवतां वाक्प्रतितिष्ठति । तपसोऽग्नेर्जातं हिरण्यम् । सोमस्येति तद्धेतसेऽवदधाति । सोमस्य खल्वेतद्धिरण्यं दात्रं मूल्यत्वेन देयं ‘ हिरण्येन क्रीणाति ’[1] इति ॥

[4]शुक्रा व इत्यादिभिरुत्पुनाति, शुक्राः निर्मला चन्द्राः आह्लादिन्यः अमृता अमृतत्वहेतवः राजसूयाय राज्ञे ऐश्वर्याभिषेकाय तस्माद्राजसूयायेत्युच्यते । राजा सूयते अभिषेकेण ईश्वरोऽनुज्ञायते अस्मिन्निति राजसूयः । ‘राजसूयसूर्य’ इति निपात्यते ॥

[1]सं. ६-१-१०.

त्रमेवावरुन्धे । एकया गृह्णाति । एकधैव यजमाने वीर्यं दधाति । [6]क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति तार्प्यं चोष्णीषं च प्रयच्छति सयोनित्वाय । [7]एकशतेन दर्भपुञ्जीलैः पवयति । शतायुर्वै पुरुषश्शतवीर्यः । आत्मैकशतः ॥ ३६ ॥ यावानेव पुरुषः । तस्मिन्वीर्यं दधाति । [8]दध्याशयति । इन्द्रियमेवावरुन्धे । उदुम्बरमाशयति । अन्नाद्यस्यावरुद्ध्यै । शष्पाण्याशयति । सुराबलिमेवैनं करोति ।

---

[5]सधमाद इति त्रिष्टुभा पालाशादिषु पात्रेषु गृह्णाति । वरुणसवः वरुणैश्वर्यम् । एकयेत्यादि । गतम् ॥

[6]क्षत्रस्येति ॥ तार्प्यमुष्णीषं च यजमानं परिधापयति । सयोनित्वाय क्षत्रस्य योनिमत्त्वं कारणवत्त्वं यथा स्यादिति । घृताक्तं वासः तार्प्यं, त्रपनाम्नो वृक्षस्य विकारस्त्वगित्येके । उष्णीषः पाण्डुरं वासः ॥

[7]एकशतेनेत्यादि ॥ एकं च शतं च एकशतम् । 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । गतमन्यत् । एकशत इति । एकस्य शतस्य पूरण इति डट्, 'षष्ठ्यादेः' इति पर्युदासात् मडभावः ॥

[8]दधीत्यादि ॥ उदुम्बरफलमूलमुदुम्बरम् । शष्पाणि यवाङ्कुरान् खादयति । सुराबलिमिति । सुरा बलिरुपहारोऽस्येति । यद्वा—सुरया कृतं बलमस्येति तादृशमेनं यजमानं करोति । व-

आविदं एता भवन्ति । आविदमेवैनं गमयन्ति ॥
३७ ॥ अग्निरेवैनं गार्हपत्येनावति । इन्द्र इन्द्रियेण । पूषा पशुभिः । मित्रावरुणौ प्राणापानाभ्याम् । [२]इन्द्रो वृत्राय वज्रमुदयच्छत् । स दिवमलिखत् । सोऽर्यम्णः पन्था अभवत् । स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथिवी उपाधावत् । स आभ्यामेव प्रसूत इन्द्रो वृत्राय वज्रं प्राहरत् । आविन्ने द्यावापृथिवी धृतव्रते इति य-

णेविकारश्छान्दसः । 'आविन्नो अग्निः'[1] इत्याद्या आविदो यजमानं वाचयन् बर्हिरुदानयति गृहपतित्वादिलाभहेतवोऽग्न्यादयो देवता आभवन्ति । एते वा मन्त्राः । ता एता एनं यजमानं आविदं आभिमुख्येन वेदितव्यं लब्धव्यं गृहपतित्वादिकं गमयन्ति । एकैकशेनाप्याह—अग्निरेवेत्यादि । गतम् ॥

[२]इन्द्रो वृत्रायेत्यादि ॥ उद्धृतस्स वज्रो दिवमलिखत् अपाटयत् योऽर्यकाय अवकाशं न विदध्रे दैत्यः । सा द्यौरन्तरिक्षं अर्यम्णः पन्था अभवत् अथेन्द्रो वज्रेणैव द्यावापृथिव्यादिषु जागर्ते,[२] एवं यजमानोपि अनेन मन्त्रेण वैरिणे वज्रं प्रहराति ॥

[1] सं १-८-१२

[२] अत्र—'आभ्यामेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्रहरति' इति वाक्यमारभ्य सप्तमानुवाके 'भूत नामेवर्ष्टि जुहोति' इति वाक्यपर्यन्तस्य भागस्य भट्टभास्करीयं भाष्यं स्वादर्शपुस्तकेषु नोपलभ्यमिति तस्य भागस्य सायणीयमेव भाष्यं संहिताप्रथमकाण्डेऽष्टमप्रश्ने द्वादशत्रयोदशानुवाकगतं प्रकाश्यते ॥

दाह ॥ ३८ ॥ आभ्यामेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्रहरति । [10]आविन्ना देव्यदितिर्विश्वरूपीत्याह । इयं वै देव्यदितिर्विश्वरूपी । अस्यामेव प्रति तिष्ठति । आविन्नोऽयमसावामुष्यायणोऽस्यां विक्ष्वस्मिन्राष्ट्र इत्याह। विशैवैनꣳ राष्ट्रेण समर्धयति । [11]महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह । आशिषमेवैतामा शास्ते । एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह । तस्मात्सोमराजानो ब्राह्मणाः ॥ ३९ ॥ [12]इन्द्रस्य वज्रोसि वार्त्रघ्न इति धनुः प्रयच्छति वि-

---

[10]षष्ठमन्त्रं प्रशंसति—आविन्नेति ॥ भूमिरेव कांचिन्मूर्तिं धृत्वा देवमाता अदितिरित्युच्यते । सप्तममन्त्रस्य पूर्वभागं प्रशंसति—आविन्नोऽयमिति । विशा करप्रदायिन्या प्रजया राष्ट्रेण सर्वसस्ययुक्तेन भूमिविशेषेण च यजमानं समर्धयत्येव ॥

[11]तस्य मन्त्रस्योत्तरभागमुत्तरौ च मन्त्रौ पूर्ववद्व्याचष्टे—महते क्षत्रायेति ॥

[12]कल्पः—इन्द्रस्य वज्रोसि वार्त्रघ्न इति धनुर्यजमानाय प्रयच्छतीति । पाठस्तु—'इन्द्रस्य वज्रोसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात्'[1]

---

[1] सं. १-८-१२.

जित्यै। शत्रुबाधनास्स्थेतीषून्। शत्रूनेवास्यं बाधन्ते।
[13]पात मा प्रत्यञ्चं पात मां तिर्यञ्चमन्वञ्चं मा पातेत्याह। तिस्रो वै शरव्याः। प्रतीची तिरश्च्यनूची। ताभ्यं एवैनं पान्ति। दिग्भ्यो मां पातेत्याह। दि-

इति। हे धनुः! त्वमिन्द्रस्य वज्रवत् प्रहारसाधनमसि, अतस्त्वयाऽयं यजमानो वैरिणं वध्यात्। विधत्ते—इन्द्रस्य वज्रोसीति। कल्पः—शत्रुबाधनास्स्थेति त्रीन् बाणावत इति। बाणा शल्यं तद्युक्ताग्रानि यर्थः। त्रीनिषून्प्रयच्छतीति शेषः। हे इषवः! यूयं शत्रूणां बाधका भवथ। विधत्ते—शत्रुबाधना इति। प्रयच्छतीत्यनुवर्तते॥

[13]कल्पः—पात मा प्रत्यञ्चमिति प्रदीयमानाननुमन्त्रयत इति। पाठस्तु—'पात, मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात'[1] इति। यदा वैरी पुरतः स्थित्वा बाणं मुञ्चति तदानीमयं विध्यमानो बाणस्य प्रत्यङ्मुखो भवति। पार्श्वयोस्स्थित्वा बाणमोक्षणेऽयं तिर्यग्भवति। पृष्ठतः स्थित्वा बाणमोक्षणे पलायमानोऽयमन्वग्भवति। हे मदीया बाणाः प्रत्यगादिरूपं मां पात परकीयेभ्यो यथोक्तप्रकारेण मां प्रत्यागच्छद्भ्यो बाणेभ्यो रक्षत। युद्धकुशला हि स्वकीयैर्बाणैः परकीयानपसारयन्ति खण्डयन्ति वा अतो मद्धस्तेऽवस्थिता हे बाणाः! सर्वाभ्यो दिग्भ्यो मां पात न केवलं परकीयबाणेभ्य एव रक्षणं, किन्तु विश्वाभ्यस्सर्वाभ्यो नाष्ट्राभ्यो

[1]सं. १-८ १२.

ग्भ्य एवैनं पान्ति । विश्वाभ्यो मा नाष्ट्राभ्यः परि-
तेत्याह । अपरिमितादेवैनं पान्ति । [4]हिरण्यवर्णा-
वुषसां विरोक इति त्रिष्टुभा बाहू उद्गृह्णाति । इ-

नाशहेतुभ्यः शत्रुकृतपीडाभ्यो मां पात । मन्त्रस्य पूर्वभागं व्याचष्टे—पात मा प्रत्यञ्चमिति ॥ शरव्याः हिंसिकाः परकीयहेतयः, ताश्च पूर्वोक्तरीत्या प्रत्यगादिरूपाः । मध्यमभागं व्याचष्टे—दिग्भ्य इति । दूरदेशवर्तिनीषु दिक्षु स्थित्वा सन्धिविग्रहकारिमनुष्यमुखेन वैरिणो भीषयन्ति ताभ्यो दूरदेशवर्तिनीभ्यो दिग्भ्य एनं यजमानं हस्तस्था बाणाः पान्त्येव । तृतीयभागं व्याचष्टे—विश्वाभ्यो मा नाष्ट्राभ्य इति । अपरिमिताद्बहुविधात् ग्रामापहारादिरूपाद्बाधात् ॥

[4]कल्पः—हिरण्यवर्णावित्युद्यतावभिमन्त्रयत इति । वेङ्कुमुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ । पाठस्तु— हिरण्यवर्णावुषसां विरोकेऽयस्स्थूणावुदितौ सूर्यस्यारोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च[1] इति । हे वरुण ! शत्रुनिवारक ! वामहस्त ! हे मित्र ! शत्रुमारक ! दक्षिणहस्त ! युवां गर्तमारोहतं वेङ्कुमुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ रथस्योपरिभागं गर्तसदृशमारोहतं परकीयबाणेभ्यो रक्षतं, परितश्चर्मफलकादिभिराच्छादिते सति रथस्योपरिभागो गर्तसदृशो भवति । आरोहणं कदा कर्तव्यमित्युच्यते—उषसां विरोके सूर्यस्योदितौ प्रतिदिनं यान्युषांसि सूर्योदयात्पूर्वभावीनि तेषां

[1]सं. १-८-१२.

न्द्रियं वै वीर्यं त्रिष्टुक्। इन्द्रियमेव वीर्यमुपरिष्टा-
दात्मन्धत्ते ॥ ४० ॥

व्यावृत्त्यै दात्रमसीत्याहामृतꣳ हिरण्यमेक-
शतो गमयन्त्याह ब्राह्मणा नाष्ट्राभ्यः
पातेत्याह चत्वारि च ॥ ६ ॥

[1]दिशो व्यास्थापयति । दिशामभिजित्यै । यदे-

सम्बन्धिनि विशिष्ट आलोके प्रवर्तमाने सति यस्सूर्यस्योदयः तस्मिन्नुत्पन्ने सति । कीदृशौ बाहू—हिरण्यवर्णौ सुवर्णखचितकवच प्रतिमोकेन हिरण्यवद्भासमानौ अयस्स्थूणौ लोहस्तम्भवत् अत्यन्तदृढौ । ततो रथारोहणादूर्ध्वं अदितिं अखण्डितां स्वसेनां दितिं खण्डितां परसेनां च चक्षाथां क्रमेणानुग्रहनिग्रहदृष्ट्या समीक्षेथाम् । विधत्ते—हिरण्यवर्णावुषसामिति ॥ उद्ग्रहणमुद्यतयोरभिमन्त्रणम् । बोधायनपक्षे तु—यथा ब्राह्मणं बाहूद्यमनार्थ एव मन्त्रः । इन्द्रियं वीर्यं हस्तपादादिगतसामर्थ्यं तत्सामर्थ्यप्रदत्वात्त्रिष्टुप्छन्दसस्तद्रूपत्वम् ॥

इति सायणीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः.

---

[1]द्वादशेऽभिषेकार्थजलसंस्कारादिमन्त्रा उक्ताः, त्रयोदशे दिग्व्यास्थापनमन्त्रा उच्यन्ते ॥ कल्पः—अथैनं पञ्चभिर्दिशो व्यास्थापयति

नु प्रक्रा॑मेत् । अ॒भि दिशो॑ जयेत् । उत्तु मा॑द्येत् ।

समिधमातिष्ठेति मनसा चानुप्रक्रामतीति । व्यास्थापयति विविध-दिगभिमुखत्वेन विजयाय प्रस्थापयतीत्यर्थः । तत्र प्रथममन्त्रपाठ-स्तु—"समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृथ्स्तोमो रथ-न्तरं सामाग्निर्देवता ब्रह्म द्रविणम्"[1] इति । समिध्यतेऽस्यामादित्य इति समित् प्राची दिक् तां दिशमातिष्ठ आक्रम्य तिष्ठ । तथा स्थि तं त्वां छन्दसां मध्ये गायत्री रक्षतु । स्तोमानां मध्ये त्रिवृत्स्तोमो रक्षतु । साम्नां मध्ये रथन्तरं साम रक्षतु । देवानां मध्येऽग्नि र्देवो रक्षतु । ब्रह्म ब्राह्मणस्त्वदीयं द्रविणं धनं रक्षतु । त्रि वृत्स्तोमस्य स्वरूपं सामब्राह्मणे समाम्नातं—'तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः' इति । अयमर्थः—"उपास्मै गायत"[2] इत्यादीनि तृचात्मकानि त्रीणि सूक्तानि सन्ति, तेषु तिसृभ्यः ऋग्भ्यः हिङ्करोति गायेत् । काभिस्तिसृभिः—प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत् । तथा सति ति-सृभिः गीतं भवति सोऽयं प्रथमः पर्यायः । द्वितीये सूक्तत्र-यगतया मध्यमया गायेत् । तृतीये पर्याये सूक्तत्रयगतयोत्तम-या गायेत् । अनेन प्रकारेण त्रिवृत्स्तोमसम्बन्धिनी विशिष्टा स्तुतिः सम्पद्यते । सेयं स्तुतिरुद्यतीनाम्नाऽभिधीयत इति । "अभि त्वा शूर नोनुमः"[3] इत्यस्यामृच्युत्पन्नं साम रथन्तरम् । द्वितीयमन्त्रपाठस्तु—'उग्रामा तिष्ठ त्रिष्टुप् त्वा छन्दसामवतु पञ्चदशस्स्तोमो बृहथ्सामे-न्द्रो देवता क्षत्रं द्रविणम्"[1] इति । पूर्वन्यायेन योजनीयम् ।

[1] सं. ४-४-१२. [2] आ. १-१-५. [3] सं. २-४-१४.

मनसाऽनु प्रक्रामति । अभि दिशो जयति । नो-

पापिनां शिक्षकेण यमेनाऽधिष्ठितत्वात दक्षिणा दिगुग्रा । पञ्च दशस्तोम एवमाम्नातः—'पञ्चभ्यो हिङ्करोति स तिसृभिस्स एकया स एकया । पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया । पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः । पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिः' इति । पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः अन्ये तु स्तोमाः एकैकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते । तत्रायं क्रमः—प्रथमपर्याय आवृत्तिः पञ्चभि ऋग्भिर्गायेत् तद्यथा—प्रथमामृचं त्रिर्गायेत् इतरे द्वे सकृत्सकृद्गायेत् । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याय उत्तमां त्रिर्गायेत् । सेयं पञ्चदशस्तोमस्य सम्बन्धिनी विष्टुतिरिति । तस्याः पञ्चपञ्चिनीति नाम । 'त्वामिद्धि हवामहे'[1] इत्येतस्यामृच्युत्पन्नं साम बृहत् । तृतीयमन्त्रपाठस्तु 'विराजमा तिष्ठ जगती त्वा छन्दसामवतु सप्तदशस्तोमो वैरूपं साम मरुतो देवता विड्द्रविणम्'[2] इति । जलाधिपेन वरुणेन पालिता सती सम्यक्फलितैः सस्यैर्विशेषेण राजत इति विराट् प्रतीची दिक् । सप्तदशस्तोम एवमाम्नातः—'पञ्चभ्यो हिङ्करोति स तिसृभिस्स एकया स एकया । पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया । सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिरिति दशसप्ता सप्तदशस्य विष्टुतिः' इति । प्रथमपर्याये प्रथमामृचं त्रिर्गायेत्, द्वितीयपर्याये मध्यमां त्रिर्गायेत्, तृतीयपर्याये मध्यमामुत्तमां च त्रिर्गायेत्, सेयं सप्तदशस्तोमसम्बन्धिनी विष्टुतिर्दशसप्तेत्यभिधीयते । 'यद्द्याव

[1] सं. २-४-१४. [2] सं. १-८-१३.

इन्द्र'[1] इत्यस्यामृच्युत्पन्नं साम वैरूपम् । चतुर्थमन्त्रपाठस्तु—'उदीचीमा तिष्ठानुष्टुप् त्वा छन्दसामवत्वेकविंशस्स्तोमो वैराजं साम मित्रावरुणौ देवता बलं द्रविणम्'[2] इति । एकविंशस्तोम एवमाम्नातः—'सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिस्स एकया । सप्तभ्यो हिङ्करोति स एकया स तिसृभिस्स तिसृभिः । सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिस्सप्तसप्तिन्येकविंशस्य विष्टुतिः' इति । प्रथमपर्याये उत्तमां सकृद्गायेत् द्वितीयपर्याये प्रथमां तृतीयपर्याये मध्यमां सकृद्गायेत् सेयमेकविंशस्तोमसम्बन्धिनी विष्टुतिरिति सप्तसप्तिनीत्यभिधीयत इत्यर्थः । 'पिबा सोममिन्द्र मन्दतु त्वा'[1] इत्यस्यामृच्युत्पन्नं साम वैराजम् । पञ्चममन्त्रपाठस्तु—'ऊर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिंशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणम्'[2] इति । त्रिणवस्तोम एवमाम्नातः—'नवभ्यो हिङ्करोति स तिसृभिस्स पञ्चभिस्स एकया । नवभ्यो हिङ्करोति स एकया स तिसृभिस्स पञ्चभिः । नवभ्यो हिङ्करोति स पञ्चभिस्स एकया स तिसृभिः वज्रो वै त्रिणवः' इति । प्रथमपर्याये प्रथमां त्रिर्गायेत् । मध्यमां पञ्चकृत्वो गायेत । उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां सकृद्गायेत् मध्यमां त्रिर्गायेत् उत्तमां पञ्चकृत्वो गायेत् । तृतीयपर्याये प्रथमां पञ्चकृत्वो गायेत् मध्यमां सकृद्गायेत् उत्तमां त्रिर्गायेत् । सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात्त्रिणवनामको वज्रसमानः । त्रयस्त्रिंशस्तोम एवमाम्नातः—'एकादशभ्यो हिङ्करोति स तिसृभिस्स सप्तभिस्स एकया, एकादशभ्यो हिङ्करोति स एकया स तिसृभिस्स सप्तभिः, एकादशभ्यो हिङ्करोति स सप्तभिस्स एकया स तिसृभिरन्तो वै त्रयस्त्रिंशः' इति । प्रथमपर्याये

[1] सं. २-४-१४. [2] सं. १-८-११.

न्माद्यति । [2]समिधमा तिष्ठेत्याह । तेज एवावरुन्धे ॥ ४१ ॥ उग्रामा तिष्ठेत्याह । इन्द्रियमेवावरुन्धे । विराजमा तिष्ठेत्याह । अन्नाद्यमेवावरुन्धे । उदीचीमा तिष्ठेत्याह । पशूनेवावरुन्धे । ऊर्ध्वामा तिष्ठे-

प्रथमां त्रिर्गायेत्, मध्यमां सप्तकृत्वः, उत्तमां सकृत् । द्वितीयपर्याये प्रथमां सकृत् द्वितीयां त्रिस्तृतीयां सप्तकृत्वः । तृतीयपर्याये प्रथमां सप्तकृत्वः द्वितीयां सकृत् तृतीयां त्रिरिति सोऽयं त्रयस्त्रिंशः स्तोमानामन्तः । यत्तु—वाजपेय उज्जित्यनुवाके त्रयोदशस्तोमश्चतुर्दशस्तोम इत्यादिकमाम्नातं, तत्सर्वमुक्तेयस्तोमाभिप्रायेणेति द्रष्टव्यम् । उन्नयनप्रकारस्तु—सामसूत्रे द्रष्टव्यः । 'प्रोष्वस्मै पुरोरथम्'[3] इत्यस्यामृच्युत्पन्नं साम शाक्करं, 'रेवतीर्नः सधमादः'[3] इत्यस्यामृच्युत्पन्नं साम रैवतम् । त्रिषु मन्त्रेषु—ब्राह्मणक्षत्रियवैश्या द्रव्यरक्षका उक्ताः । चतुर्थे शारीरबलस्य तद्रक्षकत्वम् । पञ्चमे वर्चसः प्रयुगानशूरनामकृतस्य तेजसो भनरक्षकत्वम् । विधत्ते—**दिशो व्यास्थापयतीति** ॥ यजमानं दिक्षु प्रस्थापितवतोऽध्वर्योर्मानमनुक्रमणं विधातुं प्रस्तौति—**यदनु प्रक्रामेदिति** । यद्यध्वर्युर्यजमानमनु पादेन प्रक्रामेत् दिशामभिजयो भवेत्, किन्तु उन्माद्येत् बुद्धिभ्रमं प्राप्नुयात्—विधत्ते—**मनसाऽनु प्रक्रामतीति** । प्रक्रमणस्य कृतत्वात् दिग्विजयः, पादेन तदकरणात् उन्मादाभावः॥

[2]समिदादीनि दिशां नामानि प्रशंसति—**समिधमातिष्ठेत्याहेति** ॥ समिच्छब्दस्य दीप्तिप्रतिपादकतया तेजःप्राप्तिः । उग्रशब्द इन्द्रियबलोपेतत्वमाचष्ट इतीन्द्रियप्राप्तिः । 'अन्नं वै विराट्'[3] इति

[1] सं. १-७-११. [2] सं. १-७-११. [3] ब्रा. ३-९-८.

त्याह । सुवर्गमेव लोकमभिजयति । अनूज्जिहीते । सुवर्गस्य लोकस्य समष्ट्यै ॥ ४२ ॥ [3]मारुत एष भवति । अन्नं वै मरुतः । अन्नमेवावरुन्धे । एकविंशतिकपालो भवति प्रतिष्ठित्यै । योरण्येऽ-

श्रुत्यनुसारेणान्नप्राप्तिः । 'यर्हि पशुमाप्रीतमुदञ्चं नयन्ति'[1] इति पशोरुत्तरादिक्सम्बन्धश्रवणात्पशुप्राप्तिः । स्वर्गलोकस्योर्ध्वभावित्वादभिजयः । विहितं मानसमनुक्रमणं प्रशंसति—अनूज्जिहीत इति ॥

[3]कल्पः——मारुतमेकविंशतिकपालं निर्वपति वैश्वदेवीमामिक्षां तस्यारण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधाति ईदृङ्ङ्चान्यादृङ्ङ्चेत्येताभ्यां मध्येऽरण्येऽनुवाक्येनेति । पाठस्तु—'ईदृङ्ङ्चान्यादृङ्ङ्चैतादृङ्ङ्च प्रतिदृङ्ङ्च मितश्च सम्मितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्चर्तपाश्चात्यंहाः'[2] इति । ईदृङित्यादीनि मरुद्विशेषाणां नामधेयानि । तद्रूपेण भावितत्वात् कपालानामपि तन्नाम । हे प्रथमकपाल ! त्वमीदृङ्ङसि एतन्नामकमेवासि । एवमन्यत्रापि योज्यम् । विधत्ते—मारुत एष भवतीति ॥ एष पुरोडाश इत्यर्थः । तस्मिन् गुणं विधत्ते—एकविंशतीति । 'एकविंशस्स्तोमानां प्रतिष्ठा'[3] इत्युक्तत्वात प्रतिष्ठाहेतुत्वम् । कपालोपधानमन्त्राणां शेषं पूरयितुं विधत्ते—योऽरण्य इति । अत्राम्नातः ईदृङ्ङ्चेत्यादिः सप्तसङ्ख्यायुक्त एको गणः । शुक्रज्योतिश्चेत्यादिः सप्तसङ्ख्यायुक्तोऽपरो गणः । तयोर्गणयोर्मध्ये गणान्तरं

[1] सं. ३-१-३. [2] सं. १-८-१३. [3] सं. २-६-१०.

नुवाक्यो॑ ग॒णः । तं मध्य॑त उप॑दधाति । ग्रा॒म्यैरे॒व प॒शुभि॑रार॒ण्यान्प॒शून्परि॑ गृह्णाति । तस्मा॑द्ग्रा॒म्यैः प॒शुभि॑रार॒ण्याः प॒शव॒ः परि॑गृहीताः । ⁴पृ॒थि॒वै॒न्यः । अ॒भ्य॑षिच्यत ॥ ४३ ॥ स रा॒ष्ट्रं नाभ॑वत् । स ए॒तानि॑ पा॒र्थान्य॑पश्यत् । तान्य॑जुहोत् । तैर्वै स रा॒-

प्रक्षेपणीयम् । अरण्ये गत्वाऽध्येतव्यो योऽनुवाकः तस्मिन्ननुवाके स गण आम्नातः । तथा हि—'भुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयंश्च । निलिम्पश्च विलिम्पश्च विक्षिपः'[1] इति । एतस्य गणस्य मध्यत उपधाने सत्युभयतोपस्थितैर्ग्राम्यैः पशुभिः परितोऽवबध्यारण्यान् पशून् गृह्णाति यस्मादत्रारण्यगणो मध्ये प्रक्षिप्तः तस्माल्लोकेऽप्यरण्यवासिनो हरिणादय आनीयमानाः पलायनं वारयितुं ग्रामे परित्रयवद्भिर्हरिणादिभिरुभयत एकपाशेन बध्वा परिगृहीता भवन्ति॥

⁴कल्पः—अग्नये स्वाहेति षट्पार्थानि पुरस्तादभिषेकस्य जुहोतीति, इन्द्राय स्वाहेति षट्पार्थान्युपरिष्टादभिषेकस्य जुहोतीति च, पृथिव्यै स्वाहेति षड्भूतानामवेष्टीरिति च, अङ्ग्यस्स्वाहेति षड्भूतानामवेष्टीरिति च । एतस्मिन्नवेष्टिविनियोगेऽप्यभिषेकात्पूर्वं षट्कमेकं तत ऊर्ध्वमपरं षट्कमिति द्रष्टव्यम् । पाठस्तु—"अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहांशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा पृथिव्यै स्वा-

[1] आ. ४-२४.

ष्ट्रमभवत् । यत्पार्थानि जुहोति । राष्ट्रमेव भवति । बार्हस्पत्यं पूर्वेषामुत्तमं भवति । ऐन्द्रमुत्तरेषां प्रथमम् । ब्रह्म चैवास्मै क्षत्त्रं च समीचीदधाति । अथो ब्रह्मन्नेव क्षत्त्रं प्रतिष्ठापयति ॥ ११ ॥ [6]षड्ढुर-

हाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहाऽद्भ्यस्स्वाहौषधीभ्यस्स्वाहा वनस्पतिभ्यस्स्वाहा चराचरेभ्यस्स्वाहा परिप्लवेभ्यस्स्वाहा सरीसृपेभ्यस्स्वाहा"[1] इति । अत्र चतुर्थ्यन्तैरुक्तास्सर्वे देवताविशेषा द्रष्टव्याः । अत्र पार्थानि विधातुं प्रस्तौति—पृथिर्वैन्य इति ॥ वेनस्य पुत्रः पृथिनामा कश्चिद्राजा राजसूये पार्थहोमं विनैवाभ्यषिच्यत, ततस्स राष्ट्रं न प्राप्नोत् । अतः राष्ट्रप्राप्तये पार्थसंज्ञकानि 'अग्नये स्वाहा'[1] इत्यादीनि मन्त्रवाक्यानि अपश्यत् तैर्हुत्वा राष्ट्रं प्राप्नोत् । विधत्ते—यत्पार्थानीति । भवत्येव प्राप्नोत्येव । षष्ठसप्तममन्त्रौ प्रशंसति—बार्हस्पत्यमिति । 'बृहस्पतये स्वाहा'[1] इत्येतन्मन्त्रवाक्यं पूर्वेषां षण्णां प्रथमं, तथा सति बृहस्पतेरिन्द्रस्य च ब्राह्मणक्षत्रियाभिमानिदेवत्वादस्मै यजमानाय तज्जातिद्वयं समीचीदधाति परस्परस्नेहयुक्तं करोतीत्यर्थः । किञ्च—तयोर्मन्त्रयोः पूर्वोत्तरभावेन ब्राह्मणे क्षत्रियं प्रतिष्ठापयति ब्राह्मणानुकूलं करोतीत्यर्थः ॥

[6]विधत्ते—षड्ढुरस्तादिति ॥ वसन्ते देवैस्सोमस्य पीयमानत्वात् भोगस्थानत्वेन संवत्सरो देवानां पुरमिव भवति यथा पुरे पण्य-

[1] सं. १-८-१३.

स्तादभिषेकस्य जुहोति । षड्डुपरिष्टात् । द्वादंश सं पंद्यन्ते । द्वादंश मासांस्संवथ्सरः । संवथ्सरः खलु वै देवानां पूः । देवानामेव पुरं मध्यतो व्यवंसर्पति । तस्य न कुतंश्च नोपाव्याधो भंवति । [6]भूतानामवेष्टीर्जुहोति । अत्रांत्र वै मृत्युर्जायते । यत्रंयत्रैव मृत्युर्जायंते । तत एवैनमवंयजते । तस्माद्राजसूयेनेजानस्सर्वमायुरेति । सर्वं ह्यस्य मृ-

वीथी व्यवस्थिताभ्यामुभयतो वाटिकाभ्यां युक्ता भवति तस्यां गच्छन् पुरुषः चोरैरविद्धो भवति तद्वत्पार्श्वयोः षड्डयोर्मध्ये अभिषेकाय यजमानो देवपुरमध्ये प्रविशति । तस्य कुतोऽप्यन्यस्माद्व्याघो न भवति ॥

[6]विधत्ते—भूतानामिति ॥ भूतानां यक्षराक्षसपिशाचादीनां मृत्युहेतूनां अवयजनस्य विनाशस्य हेतव आहुतयः "पृथिव्यै स्वाहा" इत्यादिद्वादशमन्त्रसाध्या आहुतयः भूतानामवेष्टयः ताः जुहुयात् अत्रात्र सन्ध्याकाले मध्यरात्रे निर्जनदेशे उच्छिष्टदेशे बाल्याद्यवस्थायां च भूतोपद्रवरूपो मृत्युरुत्पद्यते, अनेन तु होमेन तत एव देशात् कालात् अवस्थाविशेषाच्चैनं मृत्युमवयजते नाशयति, यस्मात् मृत्युर्नाशितः तस्माद्राजसूयेनेष्टवतो यजमानस्यापमृत्युपरिहारेण कृत्स्नायुःप्राप्तिर्भवति । यस्माद्वैरिभिरापादितो भूताद्युपद्रवो राजसूययाजिनं न प्राप्नोति । तस्मादयं नाभिचरितवै नाभिच-

[1] सं. १-८-११.

त्यवोऽवेष्टाः । तस्माद्राजसूयेनेजानो नाभिचरितवै। प्रत्यगेनमभिचारस्स्तृणुते ॥ ४५ ॥

रुन्धे समेष्टया असिच्यत स्थापयति जायते पञ्च च ॥ ७ ॥

---

रणीयः स च परैः कृतोऽभिचारः प्रत्यक् कर्तुरेवाभिमुखो भूत्वा तमेनमभिचारकर्तारं स्तृणुते हिनस्ति ॥

इति सायणीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्येऽष्टम-
प्रपाठके त्रयोदशोऽनुवाकः.

---

*तस्माद्यत्रयत्र मृत्युर्जायते ततस्संवत्सरादेनमवयजते नाशयति । भुतानां पृथिव्यादीनां मृत्युरूपस्यावयजनत्वात् भूतानाम वेष्टय इति । तस्मादित्यादि ॥ गतम् । नाभिचरितवै नाभिचरितव्यो राजसूयेनेष्टवान् । अभिचरणं मारणम् । अथ यद्यभिचरेत् एनमभिचरितारमेव अभिचारः प्रत्यक् स्तृणुते प्रत्यगावृत्य हिनस्ति अभिचरितुरयजनत्वात् अभिचारस्य लक्ष्याकांक्षायां राजसूयायाज्येवाभिचरिता हिंस्यो भवति ॥

इति सप्तमे सप्तमोऽनुवाकः.

---

* अथ भट्टभास्करीयम्.

[1]सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्मोपस्तृणाति । यैव सोमे त्विषिः । या शार्दूले । तामेवावरुन्धे । मृत्योर्वा एष वर्णः । यच्छार्दूलः । अमृतꣳ हिरण्यम् । अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति । अमृतमेव मृत्योरन्तर्धत्ते । शतमानं भवति ॥ ४६ ॥ शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति तिष्ठति । दिवोन्मा पाहीत्युपरिष्टादधि निदधाति । उभयत एवास्मै शर्म दधाति । अवेष्टा दन्दशूका इति क्लीबꣳ सीसेन विध्यति । दन्दशूकानेवावयजते । तस्मात्क्लीबं दन्दशूका दꣳशुकाः । निरस्तं नमुचेश्शिर इति लोहितायसं निरस्यति । पाप्मानमेव

---

[1]सोमस्येत्यादि यजमानायतने शार्दूलचर्मोपस्तृणाति ॥ त्विषिः दीप्तिः । मृत्योरिति । अमृतमसीति । चर्मणोऽधस्ताद्रजतमुपास्यति । हिरण्यमिति रजतस्वर्णयोर्नाम । उपास्यति अधस्तान्न्यस्यति, स्वयं मृत्योरन्तर्हितं यजमानं करोति । शतमानमित्यादि । गतम्[1] । उपरिष्टादिति । चर्मण उपरि सुवर्णं निदधाति । दन्दशूकाः सर्पाः दंशुकाः । 'न लोकाव्यय' इति षष्ठीप्रतिषेधः । लोहितायसं पादेन निरस्यति । 'अनसन्तान्नपुंस-

---

[1] ब्रा. १-७-६.

नमुचिं निरवदयते । [2]प्राणा आत्मनः पूर्वेऽभिषि-च्या इत्याहुः ॥ ४७ ॥ सोमो राजा वरुणः । देवा धर्मसुवश्च ये । तेते वाचꣳ सुवन्तां तेते प्राणꣳ सुवन्तामित्याह । प्राणानेवात्मनः पूर्वानभिषिञ्च-ति । [3]यद्ब्रूयात् । अग्नेस्त्वा तेजसाऽभिषिञ्चामीति । तेजस्व्येव स्यात् । दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह । सौम्यो वै देवतया पुरुषः ॥ ४८ ॥ स्वयैवैनं देवतयाऽभिषिञ्चति । अ-ग्नेस्तेजसेत्याह । तेज एवास्मिन्दधाति । सूर्यस्य वर्चसेत्याह । वर्च एवास्मिन्दधाति । इन्द्रस्येन्द्रि-येणेत्याह । इन्द्रियमेवास्मिन्दधाति । मित्रावरुण-

कात्' इति टच् समासान्तः । नमुचेरिति । न मुञ्चतीति नमुचिः तादृशं पाप्मानं निरवदयते निर्वासयति ॥

[2]प्राणा इत्यादि ॥ 'सोमो राजा'[1] इति मन्त्रेण अभिषेकद्र व्यावेक्षणमेव प्राणानामभिषेकः ॥

[3]यत् ब्रूयादित्यादि ॥ गतम् । सोमस्येत्यभिषेकमन्त्रः । 'अग्ने-स्त्वा तेजसा' इति शाखान्तरीयः पाठो निरस्यते । देवतासंबन्धेन सौम्यः पुरुषः । अग्नेस्तेजसेत्यादि । गतम् । क्षत्राणां स-र्वेषां संबन्धी पतिः । अत्यन्यानिति । अन्यान् सर्वान्राज्ञोऽ-

[1] सं. १-८-१४.

योर्वीर्येणेत्याह । वीर्यमेवास्मिन्दधाति । मरुता-मोजसेत्याह ॥ ४९ ॥ ओज एवास्मिन्दधाति । क्षत्राणां क्षत्रपतिरसीत्याह । क्षत्राणामेवैनं क्षत्रपतिं करोति । अति दिवस्पाहीत्याह । अत्यन्यान्पाही-ति वावैतदाह । समाववृत्रन्नधरागुदीचीरित्याह । राष्ट्रमेवास्मिन्ध्रुवमकः । उच्छेषणेन जुहोति । उ-च्छेषणभागो वै रुद्रः । भागधेयेनैव रुद्रं निरवद-यते ॥ ५० ॥ उदङ्परेत्याग्नीध्रे जुहोति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते । रुद्र यत्ते क्रयी परं नामेत्याह । यद्वा अस्य क्रयी परं नाम । तेन वा एष हिनस्ति । यꣳ हिनस्ति । तेनैवैनꣳ सह शमयति । तस्मै हुतमसि यमेष्टम-

तिक्रम्य पाहीत्येतदाहार्यं मन्त्रः । समाववृत्रन्नित्यूर्ध्वां धारां समुन्मार्ष्टि समन्ताद्रावर्ततामिति । ध्रुवमिति । राष्ट्रमस्मिन् ध्रुव-मनपायं करोति ॥

'उच्छेषणेनेति ॥ 'रुद्र यत्ते'[1] इत्याग्नीध्रे अभिषेकशेषं जुहो-ति । हुतशेषभागो हि स्विष्टकृदादिरूपो रुद्रः । यद्वा इत्या-दि ॥ यदस्य क्रयी विश्वमात्मसात्कुर्वन् नाम उत्कृष्टं रुद्रादि तेन खलु केनचिन्नाम्ना इत्थंभूतो देव आगत्य हिंसितव्यं हि-

[1] सं. १-८-१४.

सीत्याह । यमादेवास्य मृत्युमवयजते ॥ ५१ ॥
[5]प्रजापते न त्वदेतान्यन्य इति तस्यै गृहे जुहु-
यात् । यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति ।
राष्ट्रमेवास्यै प्रजा भवति । पर्णमयेनाध्वर्युरभिषि-
ञ्चति । ब्रह्मवर्चसमेवास्मिन्त्विषिं दधाति । औदु-
म्बरेण राजन्यः । ऊर्जमेवास्मिन्नन्नाद्यं दधाति ।
आश्वत्थेन वैश्यः । विशमेवास्मिन्पुष्टिं दधाति ।
नैयग्रोधेन जन्यः । मित्राण्येवास्मै कल्पयति ।
अथो प्रतिष्ठित्यै ॥ ५२ ॥

भवत्याहुः पुरुष ओजसेत्याह निर-
वंदयते यजते जन्यो द्वे च ॥ ८ ॥

---

नास्ति तस्मात् तत्सहितमेवैनं शमयति । यत्तव परं नाम तस्मै हुतमिति दर्शनात् । यमेष्टमिति वचनात यमादेव ततोपि दूरात तावत् योऽयं मृत्युप्रकारः तमवयजते नाशयति ॥

[5]प्रजापतेनेत्यादि ॥ तस्या महिष्या गृहे औपासने जुहुयात् । यामित्यादि । गतम् । जन्यः प्रतिराज इत्येके । मित्रजन इत्यन्ये ॥

इति सप्तमे अष्टमोऽनुवाकः.

———

[1]इन्द्र॑स्य व॒ज्रो॑ऽसि॒ वार्त्र॑घ्न॒ इति॒ रथ॒मुपाव॑हरति॒ विजि॑त्यै । मि॒त्रावरु॑णयोस्त्वा प्र॒शा॒स्त्रोः प्र॒शिषा॑ युन॒ज्मीत्या॑ह । ब्रह्म॑णै॒वैनं॑ दे॒वता॑भ्यां युनक्ति । प्र॒ष्टि॒वा॒हिनं॑ युनक्ति । प्र॒ष्टि॒वा॒ही वै दै॑व॒र॒थः । दे॒व॒र॒थ॒मे॒वास्मै॑ युनक्ति । [2]त्रयो॒ऽश्वा॑ भवन्ति । रथ॑श्चतु॒र्थः । द्वौ स॑व्येष्ठसार॒थी । षट्स॒ंप॑द्यन्ते ॥ ५३ ॥ षड्वा ऋ॒तवः॑ । ऋ॒तुभि॑रे॒वैनं॑ युनक्ति । [3]वि॒ष्णु॒क्र॒मान्क्र॑मते । विष्णु॑रे॒व भू॒त्वेमान्लो॒का॒न॒भिज॑यति । [4]यः क्ष॒त्रि॒यः प्रति॑हितः । सो॑ऽन्वा॒रभते । रा॒ष्ट्रमे॒व भ॑व-

[1]इन्द्रस्येत्यादि ॥ उपावहरति रथं वाहनादवतारयति । मित्रावरुणयोरिति प्राष्टिवाहिनं रथं युनक्ति ब्रह्मणा मन्त्रेणानेन देवताभ्यां मित्रावरुणाभ्यामिति अश्वैरेव । प्राष्टिवाहिनामिति । प्राष्टिवाहिभिरश्वैर्युक्तत्वात्' प्राष्टिवद्यो वहति रथः स प्राष्टिवाही । 'कर्तर्युपमाने' इति णिनिः । गतमन्यत् ॥

[2]त्रयोऽश्वा इति ॥ सव्ये पार्श्वे स्थित्वा आयुधानि रथिने समर्पयति स सव्येष्ठः । 'सुपि स्थः' इति कः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ॥

[3]विष्णुक्रमानित्यादि ॥ 'विष्णोः क्रमोसि'[1] इत्यादि ॥

[4]यः क्षत्रिय इत्यादि ॥ प्रतिहितो राज्ञोऽनन्तरः यः वरुणजाति-(अवरजादि ?)स्सोऽन्वारभते यजमानं राष्ट्रमेव भवति राष्ट्रमेव प्राप्नोति॥

[1] सं. १-६-६.

ति । [5]त्रिष्टुभाऽन्वारभते । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति ॥ ५४ ॥ मरुतां प्रसवे जेषमित्याह । मरुद्भिरेव प्रसूत उज्जयति । आप्तं मन इत्याह । यदेव मनसैप्सीत् । तदापत् । [6]राजन्यं जिनाति । अनाक्रान्त एवाक्रमते । वि वा एष इन्द्रियेण वीर्येणर्ध्यते । यो राजन्यं जिनाति। समहमिन्द्रियेण वीर्येणेत्याह ॥ ५५ ॥ इन्द्रियमेव वीर्यमात्मन्धत्ते । [7]पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति वाराही उपानहावुप मुञ्चते । पशूनां

[5]त्रिष्टुभेति ॥ 'प्रससाहिषे'[1] इत्येतयेत्याहुः । 'मरुतां प्रसवे'[2] इति रथमातिष्ठति । 'आप्तम्'[2] इति कूबरमभिश्रयते । यदेव मनसा ईप्सते आप्तुमिच्छति तदापत् आप्नोति पुरुष इति । यद्धि मनसा इच्छति आप्तमेव तत्फलं तस्मान्मन एवाप्तव्यमिति आप्तं मन इत्युच्यते इति भावः ॥

[6]राजन्यमिति ॥ राजपूरुषं जयति । व्यत्ययेन श्ना । यद्वा— ज्या वयोहानौ । राजन्यमिषुभिर्विध्यति । केन चिदनाक्रान्त एव पृथिवीमाक्रमते । विवा एष इत्यादि । गतम् ॥

[7]पशूनामित्यादि ॥ वाराही वराहचर्मनिर्मिते—विकारे 'प्राणभृज्जाति' इत्यादिनाऽञ्प्रत्ययः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । मन्युः दीप्तिः ॥

[1] सं. ३-४-११. [2] सं. १-८-१९.

वा एष मन्युः । यद्वराहः । तेनैव पशूनां मन्युमा-
त्मन्धत्ते । [8]अभि वा इयꣳ सुषुवाणं कामयते । त
स्यैश्वरेन्द्रियं वीर्यमादातोः । वाराही उपानहावुप-
मुञ्चते । अस्या एवान्तर्धत्ते । इन्द्रियस्यं वीर्यस्या-
नात्यै ॥ ५६ ॥ नमो मात्रे पृथिव्या इत्याहाहिꣳ-
सायै । [9]इयदस्यायुरस्यायुर्मे धेहीत्याह । आयुरे-
वात्मन्धत्ते । ऊर्गस्यूर्जं मे धेहीत्याह । ऊर्जमेवात्म-
न्धत्ते । युङ्ङसि वर्चोसि वर्चो मयि धेहीत्याह ।

---

[8]अभि वा इत्यादि ॥ इयं पृथिवी सुषुवाणं राजसूयाख्येन सवेन इष्टं ईश्वरभूतमभिकामयते अभिवाञ्छति तस्येन्द्रियादिहानिम् । यद्वा—अभिमन्यते नाशयितुं चिन्तयति असहमानेव तनश्च तस्य सुषुवाणस्य इन्द्रियं च वीर्यं च आदातुमीश्वरा स्यात् पृथिवी । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । तस्माद्वाराहीभ्यामुपानद्भ्यां छादितपादः पृथिव्या एवान्तर्हितो भवति । ततश्च तदन्तर्धानमिन्द्रियवीर्ययोरनादानाय भवति । 'अच उपसर्गात्तः' । नमो मात्रे इति । इमामभिमृशति ॥

[9]सव्येंसे राजतं मणिं प्रतिमुञ्चते—इयदिति ॥ 'ऊर्गसि'[1] इति दक्षिणेंस औदुम्बरम् । 'युङ्ङसि'[1] इति दक्षिण एवांसे सौवर्णम् ॥ एकधेति ॥ मणित्रयं तदेकधा युगपदेव ब्रह्मणे ददाति मणित्रयफलान्यायुरादीनि युगपदेव ॥

---

[1] सं. १-८-१५.

वर्च एवात्मन्धत्ते । एकधा ब्रह्मण उप हरति । एकधैव यजमान आयुरूर्जं वर्चो दधाति । [10]रथविमोचनीया जुहोति प्रतिष्ठित्यै ॥ ५७ ॥ त्रयोऽश्वा भवन्ति । रथश्चतुर्थः । तस्माच्चतुर्जुहोति । [11]यदुभौ सहावतिष्ठेताम् । समानं लोकमियाताम् । सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति । हꣳसश्शुचिषदित्यादधाति । ब्रह्मणैवैनमुपावहरति । ब्रह्मणाऽऽदधाति । [12]अतिच्छन्दसाऽऽदधाति । अतिच्छन्दा वै सर्वाणि छन्दाꣳसि ।

[10]रथविमोचिनीया इति ॥ 'अग्नये गृहपतये'[1] इत्याद्याश्चतस्रः अश्वस्य रथविमोचनीयाः । अश्वानां रथस्य च चतुष्ट्वात् चतस्रः आहुतयो हूयन्ते ॥

[11]यदुभावित्यादि ॥ यदुभौ यजमानः सारथिश्च रथादन्यत्र सहावतिष्ठेतां सहावस्थानवन्तौ स्यातां समानं स्वर्गं लोकं गच्छेतां, तस्माद्वरूथे रश्मिसंग्रहीत्रा सह तत्सहितमेवाध्वर्युः रथवाहने रथमादधाति । तत आहिते संग्रहीता नारोहति राज्ञा सह । तत एनं सारथिं स्वर्गात् अन्तर्दधाति यजमानेन समानलोकत्वं निवर्तयति । हंसश्शुचिषदित्यादिनाऽऽदधाति । पूर्वं ब्रह्मणा 'इन्द्रस्य वज्रोऽसि'[1] इत्यनेनोपावहराति रथं वाहनादवतारयति, इदानीमपि 'हंसः'[1] इति ब्रह्मणाऽऽदधाति ॥

[12]अतिच्छन्दसेत्यादि ॥ 'हंसः शुचिषत्'[1] इत्यनया । चतु-

[1] सं. १-८-१५.

सर्वैभिरेवैनं छन्दोभिरादधाति । वर्ष्म वा एषा छन्दसाम् । यदतिच्छन्दाः । यदतिच्छन्दसा दधाति । वर्ष्मैवैनꣳ समानानां करोति ॥ ५८ ॥

पद्यन्ते दधाति वीर्येणेत्याहानात्यै प्रतिष्ठित्यै ब्रह्मणाऽऽदधाति सप्त च ॥ ९ ॥

[1]मित्रोसि वरुणोसीत्याह । मैत्रं वा अहः । वारुणी रात्रिः । अहोरात्राभ्यामेवैनमुपावहरति । मित्रोसि वरुणोसीत्याह । मैत्रो वै दक्षिणः । वारुणस्सव्यः ।

र्थस्य पादस्य चतुर्दशाक्षरत्वात् अतीत्य वर्तते सर्वाणि छन्दांसि । वर्ष्मवा इत्यादि सर्वच्छन्दसां तत्रान्तर्भावात् । गतमन्यत् ॥

इति सप्तमे नवमः.



[1] अथ वैश्वदेव्यामिक्षायां यजमानो दक्षिणं सव्यं च बाहुमुपावहरते—मित्रोसीत्यादि ॥ मित्रशब्दस्य सूर्यवाचित्वात्तन्नाम्ना व्यवहृतस्य दक्षिणबाहोरहोरूपत्वं, वरुणशब्दस्यान्धकारवदावरणवाचित्वात् तन्नाम्ना व्यवहृतस्य रात्रिरूपत्वमिति भावः । अहोरात्राभ्यामेनं दक्षिणं सव्यं चोपावहरति । किंच—मैत्रो दक्षिणो हस्तः प्राथम्यात् । सव्यो

वैश्वदेव्यामिक्षा । स्वमेवैनौ भागधेयमुपावहरति । [2]समहं विश्वैर्देवैरित्याह ॥ ५१ ॥ वैश्वदेव्यो वै प्रजाः । ता एवाद्याः कुरुते । [3]क्षत्त्रस्य नाभिरसि क्षत्त्रस्य योनिरसीत्यधीवासमास्तृणाति सयोनित्वाय । [4]स्योनामासीद सुषदामासीदेत्याह । यथायजुरेवैतत् । मा त्वा हिंसीन्मा मा हिंसीदित्याहाहिंसायै । [5]निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय

वारुणः संवृतत्वात्, आमिक्षा च वैश्वदेवी, विश्वेषु देवेषु चान्तर्भूतौ मित्रावरुणौ । तस्मात् स्वं भागधेयं भजनीयं संबन्धिनं संतानं प्रति मित्रं वरुणं च एतौ हस्तावुपावहरति ॥

[2]समहमिति तामभिमृशति ॥ वैश्वदेव्यः प्रजास्सर्वदेवसाधारणत्वात् । तास्सर्वा आद्या आत्मनो भोग्याः करदाः कुरुते ॥

[3]क्षत्रस्य नाभिरसीति आसन्दीं मिनोति ॥ क्षत्रस्य योनिरसीत्यधीवासमास्तृणातीत्येके । सयोनित्वाय यजमानस्य सयोनित्वख्यापनाय ॥

[4]स्योनामिति तत्रासीदन्तमनुमन्त्रयते ॥ स्योनत्वादि यथा यजुर्वदति तथा तद्भवत्येव ॥

[5]निषसादेति आसीनमभिमन्त्रयते ॥ साम्राज्यं सम्राजम् । स्वार्थे ष्यञ्, चातुर्वर्ण्यादित्वात् । साम्राज्यवन्तं वा । 'क्त्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् ॥

सुक्रतुरित्याह । साम्राज्यमेवैनꣳ सुक्रतुं करोति । [6]ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि सविताऽसि सत्यसव इत्याह । सवितारमेवैनꣳ सत्यसवं करोति ॥६०॥ ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसीन्द्रोसि सत्यौजा इत्याह । इन्द्रमेवैनꣳ सत्यौजसं करोति । ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि मित्रोसि सुशेव इत्याह । मित्रमेवैनꣳ सुशेवं करोति । ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि वरुणोसि सत्यधर्मेत्याह । वरुणमेवैनꣳ सत्यधर्माणं करोति । [7]सविताऽसि सत्यसव इत्याह । गायत्रीमेवैतेनाभिव्याहरति । इन्द्रोसि सत्यौजा इत्याह ।

---

[6]ऋत्विक्षु रत्निषु च सर्वतः पर्युपविष्टेष्वध्वर्युं राजाऽभिमन्त्रयते— ब्रह्मानिति ॥ अध्वर्युः प्रत्याह—त्वं राजन् ब्रह्माऽसीत्यादि । सवितारं प्रेरयितारं सत्यसवं अमोघानुज्ञम् । एवं ब्रह्मणो होतुरुद्गातुश्चामन्त्रणादि । इन्द्र ईश्वरोसि । सत्यौजाः अवितथबलः, मित्रं स्निग्धः सुशेवः सुसुखः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्याद्युदात्तत्वम् । वरुणो वारकः शत्रूणां सत्यधर्माणं अमोघक्रियम् । 'धर्मादनिच्केवलात्' ॥

[7]सविताऽसीत्यादि ॥ एतेन सवितृकीर्तनेन तदीयां गायत्रीं यजमानायाभिव्याहरति । इन्द्रकीर्तनेन त्रिष्टुभं मित्रकीर्तनेन जगतीम् । सत्यं अवितथफलहेतवः, एतानि छन्दांसि, तस्मादेतत्संबन्धात् सत्यम-

त्रिष्टुभमेवैतेनाभिव्याहरति ॥ ६१ ॥ मित्रोसि सुशेव इत्याह । जगतीमेवैतेनाभिव्याहरति । सत्यमेता देवताः । सत्यमेतानि छन्दाꣳसि । सत्यमेवावरुन्धे । वरुणोसि सत्यधर्मेत्याह । अनुष्टुभमेवैतेनाभिव्याहरति । सत्यानृते वा अनुष्टुप् । सत्यानृते वरुणः । सत्यानृते एवावरुन्धे ॥ ६२ ॥ नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद । [4]इन्द्रस्य वज्रोसि वार्त्रघ्न इति स्फ्यं प्रयच्छति । वज्रो वै स्फ्यः । वज्रेणैवास्मा अवरपरꣳ रंधयति । एवꣳ

---

वितथफलमेवावरुन्धे । यद्वा—सत्यमनुष्टुभमिति सत्यवचनान्वयात् विपर्ययाच्च सत्यानृतात्मत्वमनुष्टुभः, तस्य वाङ्मयत्वात् । वरुणोपि सत्यानृतात्मा पापिनो वारको गृह्णाति पाशेन, इतरांस्तु मोचकोऽनुगृह्णाति । तस्माद्वरुणकीर्तनेन अनुष्टुभमेवाभिव्याहरति । ततस्सत्यानृते अवरुन्धे विधेयीकरोति । ततस्ते उदिते उद्भूते उक्ते वा अयथाविषयोदिते एनं न हिंस्तः । एवं वेदितारमित्यपि, किंपुनः कर्तारम् ॥

[4]इन्द्रस्येति ब्रह्मा स्फ्यं राज्ञे प्रयच्छति ॥ वज्रस्थानीयेन स्फ्येन अस्मै यजमानाय अवरपरं अवरान् परांश्च सेनापुरुषान् रन्धयति वशीकरोति । 'रधिजभोरचि' इति नुम् । अवरपरस्य सेनाङ्गत्वादेकवचनम् । आहिताग्न्यादित्वात् परनिपातः । एवं हि तच्छ्रेयः

हि तच्छ्रेयः । यदस्मा एते रध्येयुः । दिशोऽभ्यय-
य५ राजाऽभूदिति पञ्चाक्षान्प्रयच्छति । एते वै स-
र्वेऽयाः । अपराजायिनमेवैनं करोति ॥६ ३॥ [१]ओ-
दनमुद्ब्रुवते । परमेष्ठी वा एषः । यदोदनः । पर-
मामेवैन५ श्रियं गमयति । सुश्लोकां४ सुमङ्गलां४
सत्यराजा३नित्याह । आशिषमेवैतामा शास्ते ।

प्रशस्ततरं भवति । यदस्मै एते अवरे परेचोभयेऽपि रध्येयुः संसिद्ध्येयुः। रध हिंसासंराध्योः, दैवादिकः । यद्वा—अवरः परोऽन्यो यथा भवति तथा रन्धयति तथा वज्रप्रदानात् । अन्तोदात्तत्वं छान्दसम् । प्रतिहिताद्यक्षावापान्तं प्रत्तेन वज्रेण सोऽक्षावापोऽन्ते अधिदेवनं परश्शतान् परस्सहस्रान् वाऽक्षान्युप्य 'दिशोऽभ्ययं राजाऽभूत्'[1] इति पञ्चाक्षानाह्मे प्रयच्छति । एते अक्षाः ये पञ्चास्मै दीयन्ते एते सर्वे अयाः कृतत्रेताद्वापरकलयश्चत्वारो युगपादाः पञ्चमं युगं तस्माद्यस्थानीयाक्षपञ्चकप्रदानेन एनं राजानं अपराजायिनं कदाचिदपि काले अपराजयशीलं करोति ॥

[१]ओदनमिति ॥ ब्राह्मणादयोपि दीव्यन्तः ओदनं उद्ब्रुवते उद्देश्यं ब्रुवते पणत्वेन परिभाषन्ते । परमेष्ठिस्थानीयः खल्वोदनः, धारकत्वात् सर्वस्य । परमां श्रियमेनं ऋचो गाथामिश्राः श्रियं गमयन्ति । सुश्लोकादिमङ्गलमनाम्नः संगृहीतृभागदुघक्षत्तॄन् एतैः पदैराह्वयति । आशिषमित्यादि । सुश्लोकादिहेतुत्वमेषामाशास्ते तेन लभते च तथेत्यर्थः ॥

[1]सं. १-८-१६.

[10]शौनश्शेपमाख्यापयते। वरुणपाशादेवैनं मुञ्चति। परश्शतं भवति। शतायुः पुरुषश्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। [11]मारुतस्य चैकविंशशतिकपालस्य वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्यति। देवताभिरेवैनमुभयतः परिगृह्णाति। अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रति तिष्ठति ॥ ६४ ॥

देवैरित्याह सत्यसवं करोति त्रिष्टुभमेवैतेनाभि व्याहरति सत्यानृते एवावरुन्धे करोति शतेन्द्रियष्षट् ॥ १० ॥

[10]शौनश्शेपमिति ॥ ऋचो गाथामिश्राः परश्शताः परस्सहस्रा वा शस्त्रविशेषः तं होतारमाख्यापयते वाचयति, यजमानः वरुणपाशात् पापपाशान्मुक्तो भवति। परश्शतमिति। शतात् परः परश्शतं, पारस्करादित्वात् सुट्। शतात्परा ऋचो भवन्ति। शतायुरित्यादि। गतम् ॥

[11]मारुतस्य चेत्यादि ॥ गतम्। अत्र मारुतेनैकविंशतिकपालेन वैश्वदेव्यामिक्षया प्रचरति। तत्राग्नये स्विष्टकृते उभयोस्समवद्यति। 'अपां नप्त्रे स्वाहा'[1] इत्यादयः तिस्र आहुतयः।

[1] सं. १-८-१६.

एतद्ब्राह्मणानि धात्रे रत्निनां देवसुवामर्थैतो दे-
वीर्दिशस्सोमस्येन्द्रस्य मित्रो दश ॥ १० ॥

एतद्ब्राह्मणानि वैष्णवं त्रिकपालमन्नं वै पूषा
वाशास्स्थेत्याह दिशो व्यास्थापयत्युदङ्परेत्य ब्र-
ह्मा३न्त्वः२ राजञ्श्चतुष्षष्टिः ॥ ६४ ॥

एतद्ब्राह्मणानि प्रति तिष्ठति.

हरिः ओम्.

---

अवभृथेन प्रचर्य अप्सु प्रथमा, उदकान्तगार्हपत्ययोर्मध्ये दर्भस्त म्बे द्वितीया, पुनरेव गार्हपत्ये तृतीया । त्रय इत्यादि । गतम् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये पारक्षुद्रभाष्ये
प्रथमेऽष्टके सप्तमप्रपाठके दशमोऽनुवाकः.

समाप्तश्च प्रपाठकः.

# अथ अष्टमप्रपाठकः.

हरिः ओम् ॥ [1]वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽपतत् । तथ्संसृद्भिरनु समसर्पत् । तथ्संसृपाꣳ संसृत्त्वम् । [2]अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त । सरस्वत्या वाचा द्वितीये । सवित्रा प्रसवेन तृतीये । पूष्णा पशुभिश्चतुर्थे । बृहस्पतिना ब्रह्मणा पञ्चमे । इन्द्रेण देवेन षष्ठे । वरुणेन स्वया देवतया सप्तमे ॥ १ ॥ सोमेन राज्ञाऽष्टमे ।

हरिः ओम्.

[1]वरुणस्येत्यादि ॥ वरुणस्य सुषुवाणस्य सवने ईश्वरीभूतस्य इन्द्रियं वीर्यं च दशधा भूत्वा पराऽपतत् अस्मादपाक्रान्तमभूत् । अथ तत् इन्द्रियादि संसृद्भिः हविर्विशेषैः 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा'[1] इत्यादिभिः वरुणः अनुसमसर्पत् अनुसृत्य संप्राप्तवान् तस्मादेषां संसृपां संसृत्त्वं संप्राप्तिहेतुत्वात् । सर्पतेः क्विप् । अन्त्यविकारः छान्दसः ॥

[2]अग्निनेत्यादि ॥ प्रथमे अहन् अह्नि अग्निना हेतुना अनुप्रायुङ्क्त वरुणः यागानन्तरमात्मानं प्रायुङ्क्त प्रकर्षेणायोजयत् । तेन देवेन देवयित्रा प्रकर्षेण देववन्तमात्मानमकरोत् । द्वितीयेऽह्नि सरस्वत्या हेतुना वाचाऽऽत्मानं समयोजयत् । तृतीये सवित्रा हेतुना प्रसवेन आत्मानं प्रायुङ्क्त । एवं सर्वत्र । चतुर्थे पशुभिः । पञ्चमे

[1] सं. १-८-१६.

त्वष्टा रूपेण नवमे । विष्णुना यज्ञेनाप्नोत् । यथ्सꣳसृपो भवन्ति । इन्द्रियमेव तद्वीर्यं यजमान आप्नोति । [3]पूर्वापूर्वा वेदिर्भवति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै । [4]पुरस्तादुपसदाꣳ सौम्येन प्रचरति । सोमो वै रेतोधाः । रेत एव तद्दधाति । अन्तरा त्वाष्ट्रेण । रेत एव हितं त्वष्टा रूपाणि विकरोति । उपरिष्टाद्वैष्णवेन । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रति तिष्ठति ॥ २ ॥

सप्तमे दधाति पञ्च च ॥ १ ॥

---

ब्रह्मणा अग्नेन मन्त्रेण वा । षष्ठे देवेन देवनेन इन्द्रेण । सप्तमे स्वया देवतया आत्मानं देवताभावेन योजितवान् । अष्टमे राज्ञा राजत्वेन । नवमे रूपेण प्रशस्तेन । ततो देवादिमत्तया विष्णुना हेतुना विष्ण्वात्मना वा यज्ञेन आत्मीयमिन्द्रियं वीर्यं च आप्नोत् । यदित्यादि । गतम् ॥

[3]पूर्वापूर्वेति ॥ पूर्वस्या वेदेः पुरस्तादुत्तरोत्तरा वेदिः भवति । यत्र पूर्वं आहवनीयः तत्रोत्तरो गार्हपत्यः । पुनःपुनरपि संबन्धेन इन्द्रियवीर्यलाभः ॥

[4]पुरस्तादिति ॥ दशपेये प्रक्रान्ते आतिथ्यया प्रचर्य सुब्रह्मण्यान्ते त्वाष्ट्रेण अष्टाकपालेन प्रचरति आपराह्णिकीभ्यां प्राक् ।

[1]जामि वा एतत्कुर्वन्ति । यथ्सद्यो दीक्षयन्ति सद्यस्सोमं क्रीणन्ति । पुण्डरिस्रजां प्रयच्छत्यजामित्वाय । अङ्गिरसस्सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत् । यत्पुण्डरिस्रजां प्रयच्छति । साक्षादेव दीक्षातपसी अवरुन्धे । [2]दशभिर्वथ्सतरैस्सोमं क्रीणाति । दशा-

उपरिष्टादिति । श्वोभूत उपसदामुपरिष्टात् प्रवर्ग्योद्वासनात् प्राक् वैष्णवेन त्रिकपालेन प्रचरति ॥

इति अष्टमे प्रथमोऽनुवाकः.

[1]जामि वा इत्यादि ॥ दशपेयमधिकृत्योच्यते । यत् सद्यः समान एकस्मिन्नहनि दीक्षयन्ति सोमं च क्रीणन्ति अध्वर्यवः एतज्जामि पुनरुक्तमिव आलस्यजननं कुर्वन्ति । तत्परिहारार्थं मध्ये अपोदीक्षायाः स्थाने पुण्डरिस्रजां पुण्डरीकस्रजं द्वादशपुण्डरीकां यजमानाय प्रयच्छति यजमानशरीरे* प्रमुञ्चति । तेनास्य जामित्वं निवर्तते । अङ्गिरस इत्यादि । गतम् ॥

[2]दशभिरित्यादि ॥ पूर्वमेव क्रीतं पुरोहितगृहे निहितं सोमं विक्रयिणे प्रदाय दशभिर्वत्सतरैः क्रीणाति । द्वितीयं वयः प्राप्ताः वत्सा वत्सतराः । 'वत्सोक्षाश्व' इति ष्टरच् । गतमन्यत् । मुष्करा इति । मुष्कवन्तः वृषणवन्तो महावीर्याः एकहायनाः ॥

* शीर्षे.

क्षरा विराट् ॥ ३ ॥ अन्नं विराट् । विराजैवान्नाद्य मवं रुन्धे । मुष्करा भवन्ति सेन्द्रत्वाय । [3]दशपेयो भवति । अन्नाद्यस्यावरुद्ध्यै । [4]शतं ब्राह्मणाः पिबन्ति । शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति तिष्ठति । [5]सप्तदशꣳ स्तोत्रं भवति । सप्तदशः प्रजापतिः ॥ ४ ॥ प्रजापतेराप्त्यै । [6]प्राकाशावध्वर्यवे ददाति । प्रकाशमेवैनं गमयति । स्रजमुद्गात्रे ।

---

[3]दशपेय इति ॥ एकैकस्मिन् चमसे दशदश ब्राह्मणा यस्मिन् सोमं पिबन्ति स दशपेयः । अधिकरणे यत् । कृदुत्तरपदप्रकृतिस्वरत्वम्। सप्तपर्णादिवत् वीप्सानिवृत्त्यर्थविशेषलाभः । विराड्रूपान्वयादन्नाद्यलाभः ॥

[4]शतमिति ॥ ब्राह्मणग्रहणमवशिष्टपरिग्रहार्थं षोडशभिः ऋत्विग्भिः सहान्ये चतुरशीतिः ॥

[5]सप्तदशमिति ॥ सप्तदशस्तोत्रीयः सर्वस्तोमो भवति । सप्तदशः प्रजापतिः (षोडशभिर्विकारैः सदस्यश्च) सप्तदशाक्षरत्वात् ॥

[6]प्राकाशौ आदर्शौ आदर्शेन प्रकाशं गमयत्येनम् ॥ आदर्शो हि प्राप्यं सर्वं प्रकाशयति इति । स्रजं हिरण्यमालाम् । इयमस्मै विवासयति व्युष्टिं करोति । यद्वा—सामर्थ्यादस्य श्रीर्व्युच्छति हिरण्यलाभात् । रुक्मं रुचकं, हिरण्यमिति केचित् । अस्मै आदित्य-

व्यैवास्मै वासयति । रुक्मꣳ होत्रे । आदित्यमेवा-
स्मा उन्नयति । अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । प्रा-
जापत्यो वा अश्वः । प्रजापतेराप्त्यै ॥ ५ ॥ द्वादश
पष्ठौहीर्ब्रह्मणे । आयुरेवावरुन्धे । वशां मैत्रावरु-
णाय । राष्ट्रमेव वश्यंकः । ऋषभं ब्राह्मणाच्छꣳ-
सिने । राष्ट्रमेवेन्द्रियाव्यंकः । वाससी नेष्टापोतृ-
भ्याम् । पवित्रे एवास्यैते । स्थूरि यवाचितमच्छा-
वाकाय । अन्तत एव वरुणमवयजते ॥ ६ ॥ अ-
नड्वाहमग्नीधे । वह्निर्वा अनड्वान् । वह्निरग्नीत् । व-

---

मुन्नयति उत्कृष्टोदयं करोति । अवितथोदयमभीष्टसंपत्त्या करोति । गतं परम् । पष्ठौही चतुर्वर्षा स्त्रीगवी । 'वहश्च' इति ण्विः । वाहः' इति ङीष् ऊठ्च । 'एत्येधत्यूठ्सु' इति वृद्धिः । तासां तरुणत्वादायुर्लाभः । वशा वन्ध्या राष्ट्रं वशि वश्यं करोति । वशाया वश्यत्वात् । ऋषभः । खेलनगतिस्सेक्ता । राष्ट्रमिन्द्रियव-त्करोति । पवित्रे इति । अस्यैव यजमानस्य एते पवित्रे सोमदशा-पवित्रस्थानीये भवतः । स्थूरि यवाचितमिति । स्थूरिः पृष्ठवाहकः तत्साधर्म्यादेकगोयुक्तं शकटमुच्यते । तत् यवाचितं यवभारसहि-तम् । वरुणमन्ततः अवयजते । निवर्तयति । यवसम्बन्धित्वात् वरुणस्य । अनड्वान् अनोवहनसमर्थः, व्रीह्यादेर्वोढा । अग्नीत् यज्ञस्य । ततश्च(वोढा) वोढुर्योगाद्यज्ञस्य लाभाद्यर्थं भवति ॥

र्हिनैव वर्हि यज्ञस्यावरुन्धे । [7]इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं पराऽपतत् । भृगुस्तृतीयमभवत् । श्रायन्तीयं तृतीयम् । सरस्वती तृतीयम् । भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्निष्टोमसामम् । सारस्वतीरपो गृह्णाति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै । श्रायन्तीयं ब्रह्मसामं भवति । इन्द्रियमेवास्मिन्वीर्यं श्रयति । वारवन्तीयमग्निष्टोमसामम् । इन्द्रियमेवास्मिन्वीर्यं वारयति ॥ ७ ॥

विराट्प्रजापतिरश्वः प्रजापतेराप्त्यै यजते ब्रह्मसामं भवति सप्त च ॥ २ ॥

[7]इन्द्रस्येत्यादि ॥ अनेनेष्ट्वा ईश्वरसंपन्नस्येन्द्रस्य इन्द्रियं वीर्यं च त्रेधा पराऽपतत् भृगुः । श्रायन्तिशब्दोऽस्मिन्नस्तीति श्रायन्तीयं साम । "मतौच्छस्सूक्तसाम्नोः" इति छः । सः श्रयति न पतति । वारवन्तीयं 'अश्वं नत्वा वा वारवन्तम्'[1] इत्यस्यामृचि कर्तव्यम् । पूर्ववच्छः । अग्निष्टोमसामम् । पूर्ववदच् समासान्तः । दशपेयोऽयं अग्निष्टोमसंस्थः । येन सन्तिष्ठते तदग्निष्टोमः । इन्द्रियादिकमस्मिन् वारयति यथा न परापतति तथा ततो निवार्य अस्मिन् स्थापयति ॥

इति अष्टमे द्वितीयोऽनुवाकः.



[1] सामसं. 1-1-2-7.

[1]ई॒श्व॒रो वा ए॒ष दि॒शोऽनू॒न्मदि॑तोः । यं दि॒शोऽनु॑ व्या॒स्था॒पय॑न्ति । दि॒शाम॑वे॒ष्टयो॑ भवन्ति । दि॒क्ष्वे॒व प्रति॑ तिष्ठ॒त्यनु॑न्मादाय । [2]पञ्च॑ दे॒वता॑ यजति । पञ्च॒ दिशः॑ । दि॒क्ष्वे॒व प्रति॑ तिष्ठति । [3]ह॒विषो॑हविष इ॒ष्ट्वा बा॑र्ह॒स्प॒त्यम॒भिघा॑रयति । यज॑मानदे॒वत्यो॒ वै बृ॒ह॒स्पतिः॑ । यज॑मानमे॒व तेज॑सा॒ सम॑र्धयति ॥८॥

[1]ईश्वरो वा इत्यादि ॥ यं दिशोऽनु दिशो लक्षीकृत्य व्यास्थापयन्ति 'समिभ्रमातिष्ठ'* इत्यादिभिः पृथक् पृथक् आस्थापयन्ति, स खलु तां दिशमनु उन्मदितोः उन्मत्तो भवितुमीश्वरस्स्यात् । 'ईश्वरे तोसुन्कसुनौ' । तस्माद्दिशामवेष्टयः कर्तव्या भवन्ति । 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा' इत्याद्याः आग्नेयैन्द्रवैश्वदेवमैत्रावरुणबार्हस्पत्याः । ततो दिक्षु प्रतिष्ठितो भवति नोन्मत्तो भ्रमति । दिशां सम्बन्धिनां उन्मादयितॄणां अवयजनहेतुत्वाद्दिशामवेष्टयः ॥

[2]पञ्च देवता इत्यादि ॥ गतम् ॥ दिक्ष्वेवेति । दिक्षु पुरोडाशान् मध्ये च बार्हस्पत्यं निधाय यजमानात् ॥

[3]हविषो हविष इति ॥ सर्वहविर्यागानन्तरं बार्हस्पत्यमभिघारयति । यजमानदेवत्य इति । यजमानदेवतायै अयम् । देवतान्तात्तादर्थ्ये यत् । बृहस्पतेः पुरोहितत्वाद्यजमानस्य प्राधान्यं, तस्माद्यजमानमेव प्रधानं तेजसा समृद्धं करोति ॥

*सं. १-८-१३. [1]तै. सं. १-८-१९.

[4]आदित्यां मलूहां गर्भिणीमा लभते । मारुतीं पृश्निं पष्ठौहीम् । विशं चैवास्मै राष्ट्रं च समीचीं दधाति । [5]आदित्यया पूर्वया प्रचरति । मारुत्योत्तरया । राष्ट्र एव विशमनुबध्नाति । उच्चैरादित्याया आश्रावयति । उपांशु मारुत्यै । तस्माद्राष्ट्रं विशमतिवदति । गर्भिण्यादित्या भवति ॥१॥ इन्द्रियं वै गर्भः । राष्ट्रमेवेन्द्रियाव्यकः । अगर्भा मारुती । विड्वै मरुतः । विशमेव निरिन्द्रियामकः । [6]देवासुरास्संयत्ता आसन् । ते देवा अश्विनोः पू-

---

[4]अत्र द्विपशुं पशुबन्धं विदधाति—आदित्यामित्यादि ॥ मलूहां मणिमालां यस्या ग्रीवायां मणिवन्मांसपिण्डद्वयं लम्बते । पृश्निः श्वेतवत्सा । पष्ठौही उक्ता । विशं चेत्यादि । राष्ट्रस्य आदित्याः धारयितारः । मरुतो विशः । तस्माद्विशं च राष्ट्रं च राष्ट्रपतिं च सङ्गते स्थापयति । 'समस्समि' इति सम्यादेशः । 'चौ' इति दीर्घत्वं, अन्तोदात्तत्वं च ॥

[5]आदित्ययेत्यादि ॥ गतम् । राष्ट्रं वीर्यवत् करोति । विशं निरिन्द्रियां निर्वीर्यां अस्वतन्त्रां करोति । अत्र 'विड्वै मरुतः' इति सर्वशेषः 'विशं चैवास्मै' इत्यादिष्वपि सम्बध्यते ॥

[6]देवासुरा इत्यादि ॥ अश्विनोः पूष्णि च वाचः सत्यं

षन्वाचस्सत्यꣳ संनिधाय। अनृतेनासुरानभ्यभवन्। तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निरवपन्न्। ततो वै ते वाचस्सत्यमवारुन्धत ॥ १० ॥ यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । अनृतेनैव भ्रातृव्यानभिभूय । वाचस्सत्यमवरुन्धे । सरस्वते सत्यवाचे चरुम् । पूर्वमेवोदितम् । उत्तरे-

---

सत्यत्वं रूपं निधाय अनृतेन छलेन असुरानभिभूय ततोऽश्विभ्यां पूष्णे च द्वादशकपालं निरुप्य वाचः सत्यत्वं लब्धवन्तः । यदश्विभ्यामित्यादि । गतम् । त्रिहविष्केयमिष्टिः । तत्राश्विनौ पूषा च संभूय एकदेवता । द्वादशकपाल एकं हविः । ततः सरस्वत्यै चरुर्द्वितीयः । सवित्रे द्वादशकपालस्तृतीयः । पूर्वमेवेति । अश्विभ्यां पूष्णे च यदुक्तं वाचस्सत्यावरोधाख्यं फलं तदेव उत्तरेण 'सरस्वते सत्यवाचे चरुम्' इत्यनेनापि हविषा सह अभिगृणाति फलत्वेनाभिसंबध्नाति, तस्मात्फलान्तरं न भ्रमितव्यमिति भावः । शब्दात् पूर्वमेव राजसूयब्राह्मणे विहितानां गुणवादार्थवादार्थः इहानुब्राह्मणेनानुवादः क्रियते । तत्र 'अश्विभ्यां पूष्णे' इत्यस्यास्ति गुणविधिः 'वाचस्सत्यमवरुन्धे' इति। 'सवित्रे सत्यप्रसवाय' इत्यस्यापि 'प्रसूत्यै' इत्युच्यते । 'सर-

णाभि गृणाति । सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं प्रसूत्यै । 'दूतान्प्रहिणोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति । अथो दूतेभ्य

स्वते सत्यवाचे' इत्यत्र न कंचिद्गुणविधिं पश्यामः । तत्र पुनर्वचनानर्थक्यमाशङ्क्याह—पूर्वमेव विहितं हविः उत्तरेणानुब्राह्मणेनाप्यभिगृणाति पुनरपि कीर्तयति हविषः क्रमविधानार्थम् । अर्थवादो न वक्तव्य एव, 'सत्यवाचे चरुम्' इति स्वरूपेणैव गतत्वादिति भावः । यद्वा—'सरस्वते सत्यवाचे चरुम्' इत्युक्ते को गुणोऽस्येति यद्यनुयोगं कश्चिद्ब्रूयात् तदयुक्तं पूर्वमेव 'सरस्वते सत्यवाचे चरुम्' इति विधिमात्रेणैव उक्तं स्पष्टं यदि ब्रूयात् सत्यवागवरोध इति । तदनेनाप्युत्तरेण वचनेन तदेवाभिगृणाति । गतमेव पुनरपि शब्दयति । न कश्चिद्विशेषः । तस्मात्सारस्वतेन न कंचिद्गुणं ब्रूम इति ॥

'दूतान् प्रहिणोति प्रतिराजभ्यः । आविदः शासनानि एते दूता भवन्ति तत्कारित्वात् । आविद्यन्ते राजसामन्ताः ख्याप्यन्ते आभिरित्याविदः । संपदादित्वात् क्विप् । एनं यजमानमाविदं सवख्याति गमयन्ति । प्रकाशं शासनहारिणो दूता आविदः । आविदः नोपबाधन्ते ।* अथो अपि च दूतेभ्यः न कदाचिदपि विच्छिद्यते गमनागमनयोरविच्छेदो भवतीति । यद्वा—

* त. आविदः नोपचयन्ते

एव न छिंयते । तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा स-
मृद्ध्यै ॥ ११ ॥

अर्धयति भवत्यरुन्धत गमयन्ति द्वे चं॥३॥

[1]आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे

दूतनिमित्तैर्दोषैः नायं छिद्यते ततः प्रभृति न बाध्यते, तिसृभिः इषुभिः युक्तं धनुः तिसृधन्वं शुष्का केवला दृतिश्शुष्कदृतिः ॥

इति अष्टमे तृतीयोऽनुवाकः.

---

आग्नेयमित्यादि ॥ अत्र प्रयुजां हवींषि द्वादश भवन्ति 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम्'[1] इत्यादीनि । एतानि द्वितीयं शैशिरं समारुह्य * निरुप्यन्ते । वक्ष्यति च—'मासिमास्येतानि हवींषि निरुप्याणीत्याहुः । तेनैवर्तून् प्रयुङ्क्ते' इति । ऋतुधर्माणां यथायथं प्रकृतिः प्रयुक्तिः । तद्धेतवोऽग्न्यादयः प्रयुजः, तेषामेतानि हवींषि । तद्धेतुत्वं तेषामेतैर्हविर्भिः भवतीति । तत्र शैशिरयोः द्वितीये आग्नेयमष्टाकपालं निर्वपति । यस्मादत्र सर्वपाचकोऽग्निः हविषा आराध्यते 'तस्माद्धिस्संवत्सरस्य सस्यं पच्यते'[2] † इति । तत्परराष्ट्रेभ्योऽपहर्तुं कुरुपञ्चालाः कुरवः पञ्चालाश्च क्षत्रियाः शिशिरे मासि प्राञ्चो यान्ति ते दिशो जेतुं प्रारभन्ते । यद्वा—प्राच्यामेव जेतव्याः तेषामिति गम्यते । यद्वा—कुरुप-

---

*(क) समारभ्य. † क. यस्मिन् पाचकोऽग्निर्हविषाऽऽराध्यते तस्मिन्मासि सस्यं पच्यते ॥

[1] सं. १-८-२०. [2] सं. ६-१-७.

कुरुपञ्चालाः प्राञ्चो यान्ति।[2]सौम्यं चरुम्। तस्माद्वसन्तं व्यवसायोदयन्ति।[3]सावित्रं द्वादशकपालम्। तस्मात्पुरस्ताद्यवानाᳪ सवित्रा विरुन्धते।

---

ञ्चालवासिनो जनाः पक्कसस्यग्रहणाय प्राञ्चो यान्ति प्राच्यामेव तेषां केदारसम्भवात्। तत्र कुरुपञ्चालग्रहणं निदर्शनं सर्वक्षत्रियाणाम्, पुष्टत्वात्तु तेषां ग्रहणम्। ऋतुधर्माणां च तत्र विपर्यासात्॥

[2]अथ वासन्तिकयोः प्रथमे सौम्यं चरुं निर्वपति। यस्मादन्नस्य देवता सोमोऽत्र चरुणा इज्यते, तस्माद्वसन्तं वासन्तिकं प्रथममासं व्यवसाय अनुप्राप्तोऽयमिति निश्चित्य आदयन्ति परकीयमन्नमुपहृत्य भुञ्जानाः प्रजा अनुजानन्ति राजानः वसन्तः समुपस्थितो भुञ्जतां काममिति। यद्वा मृष्टं भोजयन्ति सर्वानात्मीयान्, तत्र समृद्धधान्यत्वात् सर्वेषाम्॥

[3]अथ द्वितीये वासन्तिके सावित्रं द्वादशकपालं निर्वपति। यस्मादत्र सविता सर्वस्यानुज्ञाताऽऽराध्यते, तस्मात्तेन सवित्रा अनुज्ञात्रा तदनुज्ञां लब्ध्वैव प्रथमं यवानां विरुन्धते शीघ्रपक्वान् पदैर्विरुध्य गृह्णन्ति। कर्मणस्तादर्थ्ये वा—यवार्थं विरुन्धत इति। यद्वा—यवादीन् प्रथमं विशेषेण लभन्तेऽत्र क्षेत्रिणः। सवितुरनुज्ञयेति वचनं अमोघत्वाय। इदं प्रथमपक्वधान्योपलक्षणं यवग्रहणम्। प्रथमं यवादीन् पक्वान् गृह्णन्तीति॥

[4]बार्हस्पत्यं चरुम् । सवित्रैव विरुध्यं । ब्रह्मणा यवानादधते । [5]त्वाष्ट्रमष्टाकपालम् ॥ १२ ॥ रूपाण्येव तेन कुर्वते । [6]वैश्वानरं द्वादशकपालम् । तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति । [7]सारस्वतं चरुं निर्वपति । तस्मात्प्रावृषि सर्वा वा-

---

[4]अथ ग्रैष्मयोः प्रथमे बार्हस्पत्यं चरुं निर्वपति ॥ यस्मादत्र बृहस्पतिर्ब्राह्मण आराध्यते तस्मात्पूर्वमेव सवित्रा विरुध्य आत्मीयं कृत्वा इदानीं ब्रह्मणा ब्राह्मणानुज्ञयैव यवानादधते ब्राह्मणाय किंचिद्दत्वैव स्थापयन्ति ॥

[5]अथ द्वितीये ग्रैष्मे त्वाष्ट्रमष्टाकपालं निर्वपति ॥ तत्र रूपाणां विकर्तुः त्वष्टुरिज्यया रूपाणि तण्डुलकुल्माषादीन्यन्नस्य रूपाणि बहुप्रकाराणि कुर्वते उत्पादयन्ति ॥

[6]अथ प्रथमे वार्षिके वैश्वानरं द्वादशकपालं निर्वपति ॥ यस्मादत्र विश्वेषां नराणां स्वामित्वेन संबन्धी पुष्ट्यादिप्रवृत्तिहेतुरिज्यते । तस्माज्जघन्ये नैदाघे निदाघसमाप्तेः काले वर्षाणामारम्भे प्रत्यञ्चः कुरुपञ्चालाः यान्ति परराष्ट्राणि मृदित्वा अपहृतसर्वस्वाः स्वदेशं गच्छन्ति दिग्विजयान्निवर्तन्ते ॥

[7]अथ द्वितीये वार्षिके सारस्वतं चरुं निर्वपति ॥ अत्र सरस्वत्या इज्यया सर्वाः लौकिकीः वैदिकीश्च वाचो वदन्ति प्रजाः । प्रौष्ठपद्यां पौर्णमास्यां उपाकृत्य वैदिकीर्वदन्ति । प्रजास्सर्वाः पानीय-

चौ वदन्ति । [4]पौष्णेन व्यवस्यन्ति । मैत्रेण कृष-न्ते । वारुणेन विधृता आसते । क्षैत्रपत्येन पाच-यन्ते । आदित्येनादधते ॥ १३ ॥ [5]मासिमास्येता-नि हवीꣳषि निरुप्याणीत्याहुः । तेनैवर्तून्प्रयुङ्क्ते इ-ति । अथो खल्वाहुः । कस्संवथ्सरं जीविष्यतीति।

तृप्ताः हाहारवं कुर्वन्ति, कर्षकाश्च कृषिवृद्धिमुत्पत्स्यन्तो देवान् स्तुवन्ति ॥

[4]अथ प्रथमे शारदे पौष्णं चरुं निर्वपति ॥ व्यवस्यन्ति तस्य पुष्टिहेतुत्वादेतावतीं भूमिं कृषामीति निश्चयं कुर्वन्ति । अथ द्वितीये शारदे मैत्रं चरुं निर्वपति । तस्य कृषिहेतुत्वात् । अस्मिन् मासि कृषन्ते क्षेत्रं विलिखन्ति, अथ प्रथमे हैमन्तिके वारुणं चरुं निर्वपति । तस्य वारकत्वेन, औदासीन्यहेतुत्वादस्मिन्मासि विधृताः निवृत्त-व्यापाराः प्रत्युप्तक्षेत्राः प्रजा गृहेष्वासते । अथ हैमन्ते द्वितीये क्षैत्र-पत्यं चरुं निर्वपति । अथ प्रथमे शैशिरे आदित्यं चरुं निर्वपति ॥

[5]मासिमासीत्यादि ॥ एवं प्रतिमासं एकमेकं निरुप्याणि निर्वप्तव्यानि । छान्दसः क्विप् । तेन प्रयोगेण ऋतून् प्रयुङ्क्ते ऋतु-धर्मान्यथायथं प्रवर्तयन्ति । तस्मान्मासिमासि निर्वप्तव्यानीत्याहुरेके ॥

अथो खलु अन्य आहुः—कस्संवत्सरं जीविष्यतीति एवं संवत्सरं जीविष्यामीति निश्चित्य को जीविष्यति तस्मान्मासिमासि निर्वप्तुमयुक्तमिति । कथं तर्हि निर्वप्तव्यानीत्याह—षडेवेत्यादि । गतम् । तेन षट्त्वान्वयेनैव ऋतून् प्रयुङ्क्ते । दक्षिण इति । दक्षिणतो

षडेव पूर्वेद्युर्निरुप्याणि । षडुत्तरेद्युः । तेनैवर्तून्प्रयुङ्क्ते । दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा । उत्तर उत्तरेषाम् । [10]संवथ्सरस्यैवान्तौ युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै ॥ १४ ॥

त्वाष्ट्रमष्टाकपालं दधते युनक्त्येकै च ॥४॥

[1]इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽपतत् । स यत्प्रथमं निरष्ठीवत् । तत्कलमभवत् ।

---

युक्तो रथवाहनवाहो बलीवर्दो दक्षिणा देया पूर्वेषां षण्णां षड्विष्करस्य यागस्य । रथ एव वाहनं तस्य वोढा रथवाहनवाहः । उत्तरः उत्तरतो युक्त उत्तरेषामुत्तरेद्युः निर्वप्तव्यानां उत्तरस्य यागस्य ॥

[10]संवत्सरस्येति ॥ संवत्सरस्यान्तौ पार्श्वे स्थितौ वोढारौ बलीवर्दौ युनक्ति सुवर्गस्य लोकस्य सम्यक्प्राप्त्यर्थम् । यद्वा—संवत्सरस्याद्यन्तौ दिवसौ बलीवर्दस्थानीयौ युनक्ति । आदिरप्यन्त एव ॥

इति अष्टमे चतुर्थोऽनुवाकः.

---

[1]अथ राजसूयेनेष्ट्वा सौत्रामण्या यजते, तामभिकृत्योच्यते—इन्द्रस्येत्यादि ॥ गतम् । वैश्वदेवमेव काण्डम् । प्रथमं निष्ठ्यूतं वान्तमास्यात् कलं कुवलयं बालखर्जूरं, द्वितीयं निष्ठ्यूतं बदरं,

यद्द्वितीयम् । तद्बदरम् । यत्तृतीयम् । तत्कर्कन्धु । यन्नस्तः । स सिꣳहः । यदक्ष्योः ॥ १५॥ स शार्दूलः । यत्कर्णयोः । स वृकः । य ऊर्ध्वः । स सोमः । याऽवाची । सा सुरा । त्रयास्सक्तवो भवन्ति । इन्द्रियस्यावरुद्धयै । त्रयाणि लोमानि ॥१६॥ त्विषिमेवावरुन्धे । त्रयो ग्रहाः । वीर्यमेवावरुन्धे । नाम्ना दशमी । नव वै पुरुषे प्राणाः । नाभिर्दश-

---

तृतीयं निष्ठ्यूतं कर्कन्धु । नासिकाया निष्ठ्यूतं सिंहोऽभवत् । अक्ष्योरिति । 'ई च द्विवचने' इतीकारः । शार्दूलः । यत् कर्णयोः निष्ठ्यूतं स वृकः । ऊर्ध्वः आस्य ऊर्ध्वः सोमः । अवाची अधोद्वारनिर्गता सुरा । एवं कलादीन्यष्टौ आस्यादीनि नव । तस्माद्दशधाशब्दो बहुत्ववचनः बहुधा पराऽपतदिति । यद्वा—ऊर्ध्वः शिरोमध्यान्निर्गतः । यद्वा—निष्यन्दोद्गीर्णभेदेन द्वे आस्ये, नासिकादयष्षट्, पायुप्रजननेत्येताभ्यां सह दश भवन्ति ॥

त्रया इत्यादि ॥ त्रयोऽवयवा येषां ते त्रयाः त्रिप्रकाराः सक्तवो भवन्ति त्रयाणां कलबदरकर्कन्धूनां विकाराः । त्रयाणि त्रिप्रकाराणि लोमानि भवन्ति, सिंहशार्दूलवृकाणाम् । त्विषिर्दीप्तिः । त्रयो ग्रहाः अश्विसरस्वतिसुत्राम्णाम् । नाम्नेति । सौत्रामणीति यन्नाम तेनेत्थंभूता न तु ग्रहादिनाम्नी, अवयविनी सौत्रामणी दशमी

मी । प्राणा इन्द्रियं वीर्यम् । प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन्धत्ते । [3]सीसेन क्लीबाच्छष्पाणि क्रीणाति । न वा एतदयो न हिरण्यम् ॥ १७ ॥

यत्सीसम् । न स्त्री न पुमान् । यत्क्लीबः । न सोमो न सुरा । यत्सौत्रामणी समृद्ध्यै । [1]स्वाद्वीं त्वा स्वादुनेत्याह । सोममेवैनां करोति । सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पच्यते ।

दशानां पूरणी । सक्त्वादगोऽवयवाः प्राणस्थानीया नव । नाभिस्थानीयाऽवयविनी सौत्रामणीति । प्राणस्थानीयमिन्द्रियं वीर्यं च । तस्मादेवं कुर्वन् प्राणस्थानीयमिन्द्रियं वीर्यं चात्मनि धत्ते यजमानः ॥

[3]सीसेनेत्यादि ॥ शष्पाणि यवाङ्कुराः । न वा इत्यादि । अयोहिरण्यविलक्षणं सीसं, स्त्रीपुंसविलक्षणः क्लीबः सोमसुराविलक्षणा सौत्रामणी सुराविशेषः सोमो नेति ज्ञायत एव, सुराऽपि न भवति परिभू(पू)तयागसाधनत्वात् । तस्मात् समानत्रिकयोगः समृद्ध्यै भवति ॥

[4]तत्र 'स्वाद्वीम्'[1] इति तोक्ममासरेणावोक्षन् सोमं संपादयति सोमवत्पवित्रामेनां करोति । 'सोमोसि' इति तामभिमृशति । एतदर्थमेषा सुरा पच्यते निष्पाद्यते । तस्मादेताभ्यः पच्यस्वेत्यु-

[1] सं. १-८-२१.

तिस्रस्संसृष्टा वसति ॥ १८ ॥ तिस्रो हि रात्रीः क्रीतस्सोमो वसति । [5]पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै । पवित्रेण पुनाति । पवित्रेण हि सोमं पुनन्ति । वारेण शश्वता तनेत्याह । वारेण हि सोमं पुनन्ति । वायुः पूतः पवित्रेणेति नैतया पुनीयात् । व्यृद्धा ह्येषा । अतिपवितस्यैतया पुनीयात् । [6]कुविदङ्गेत्यनिरुक्तया प्राजापत्यया

---

च्यत इति । तिस्रो रात्रीस्संसृष्टावयत्रा वसति तस्मात्तिस्रो रात्रीः क्रीतस्सोमो वसतीति 'स तिस्रो रात्रीः परिमुषितोऽवसत्'[1] इत्युक्तम् ॥

[5]पुनातु इति सुरां पुनाति ॥ यजुश्शब्दो मन्त्रपर्यायः । व्यावृत्त्यर्थं लौकिक्याः सुरायाः । पवित्रेण वालमयेन पुनाति सोमसाम्यार्थम् । वारेणेति । ऊर्णामयेन वालेन सोमं पुनन्ति तस्मात्सुरामपि वालेन पुनन्ति । तस्मात् वारेण शश्वतातनेति मन्त्रपदमिति । कपिलकादित्वाल्लत्वविकल्पः । 'वायुः पूतः'[2] इत्येषा व्यृद्धा तृतीयस्य पादस्य ऊनाक्षरत्वात् । तस्मान्नैतया पुनीयात् । अपि तु अतिपवितस्येति सोमातिपवितस्य सोमवामिनो वा एतयैव पुनीयात् । 'पूङश्च' इति इडागमः । 'पूङः क्त्वा च' इति क्त्वाभावः । अतिप्रवृत्त(पवित)स्सोमस्सोमातिपवितः । ज्येष्ठे अकृतसोमे कनीयान् सोमेन यजमानः सोमातिपवित इति केचित् ॥

[6]कुविदङ्गेति सुराग्रहान् गृह्णाति ॥ अनिरुक्ता अव्यक्तदेवताका,

---

[1] सं. ६-१-६. [2] सं. १-८-२१.

गृह्णाति ॥ १९ ॥ अनिरुक्तः प्रजापतिः । प्रजापते-राप्त्यै । [7]एकयर्चा गृह्णाति । एकधैव यजमाने वी-र्यं दधाति । [8]आश्विनं धूम्रमा लभते । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सारस्वतं मेषम् । वाग्वै सरस्वती । वाचैवैनं भि-षज्यति । ऐन्द्रमृषभꣳ सैन्द्रत्वाय ॥ २० ॥

अक्ष्योर्लोमानि हिरण्यं वसाति गृह्णाति
भिषज्यत्येकं च ॥ ५ ॥

[1]यत्त्रिषु यूपेष्वालभेत । बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेत् । एकयूप

---

अत एव प्राजापत्या, प्रजापतिर्ह्यनिरुक्तस्वभावः ॥

[7]एकयेत्यादि ॥ गतम् । कुविदङ्गेत्यस्या एकत्वस्तुतिः ॥

[8]आश्विनं धूम्रमित्यादि ॥ गतम् ॥

इति अष्टमे पञ्चमोऽनुवाकः.

---

[1]यत्त्रिष्वित्यादि ॥ प्रतिपशु यूपोपादानाद्यादि त्रिषु यूपेषु त्रीन् पशून् आश्विनादीनालभेत नियुञ्ज्यात् । अस्माद्यजमानादिन्द्रियादि

आलभते । एकधैवास्मिन्निन्द्रियं वीर्यं दधाति । नास्मै भ्रातृव्यं जनयति । [2]नैतेषां पशूनां पुरोडाशा भवन्ति । ग्रहपुरोडाशा ह्येते । युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः । सर्वा एव देवताः प्रीणाति ॥ २१ ॥ [3]ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् । ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता । यदि ब्राह्मणं न विन्देत् । वल्मी-

बाहिर्धा दध्यात् बहिष्प्रकारेण स्थापयेत् यूपानां बहुधाभावात् । छान्दसो धाप्रत्ययः । भ्रातृव्यं जनयेत् बहिर्भूतस्वभावात् । तस्मादेकयूपे एकस्मिन्यूपे त्रीनपि पशूनालभते एकधैव एकप्रकारमेवेन्द्रियादिकमस्मिन् दधातीति । 'पूर्वकालैक' इत्यादिना समासः । एवमेकादशिनीविकारत्वात् प्रतिपशु यूपप्राप्तौ इदमपोद्यते । इदमेव च लिङ्गं पशुगणा एकादशिनीविकारा इति ॥

[2]नैतेषामित्यादि ॥ ग्रहप्रशंसार्थेति । पशुभिस्तुल्यदेवत्याः पशुपुरोडाशा भवन्ति ग्रहाश्चैते पशुभिस्तुल्यदेवत्याः तस्मात्पुरोडाशसदृशाः । वक्ष्येते चात्रैव 'युवं सुरामम्'[1] इति ग्रहाणां याज्यानुवाक्ये । सर्वदेवत्यत्वमाश्विनादित्रयवत्त्वात् ॥

[3]परिक्रयणं कार्यार्थं स्वीकरणम् । उच्छेषणं ग्रहशेषः । ब्राह्मणः खलु होमातिरिक्तस्य पातृत्वेन दृष्टः । यदीत्यादि कंचित् ब्रा-

[1] ब्रा. १-४-२.

कुवपायामवं नयेत् । सैव ततः प्रायश्चित्तिः । [4]यद्वै सौत्रामण्यै व्यृद्धम् । तदस्यै समृद्धम् । नानादेवत्याः पशवश्च पुरोडाशाश्च भवन्ति समृद्ध्यै । [5]ऐन्द्रः पशूनामुत्तमो भवति । ऐन्द्रः पुरोडाशानां प्रथमः ॥ २२ ॥ इन्द्रिये एवास्मै समीची दधाति । पुरस्तादनूयाजानां पुरोडाशैः प्रचरति । पशवो वै पुरोडाशाः । पशूनेवावरुन्धे । ऐन्द्रमेकादशकपालं निर्वपति । इन्द्रियमेवावरुन्धे । सावित्रं द्वादशकपालं प्रसूत्यै । वारुणं दशकपालम् । अन्तत एव वरुणमवयजते । वडबा दक्षिणा ॥ २३ ॥ उत

---

ह्मणं पातारं यदि न लभेत वल्मीकच्छिद्रे अवनयेत् । सा ततो दोषात् प्रायश्चित्तिः । प्रायणं प्रायः दोषनिर्गतः तदर्था चित्तिर्ज्ञानं प्रायश्चित्तिः ॥

[4]यद्वा इत्यादि ॥ अस्याः सौत्रामण्याः यत् संबन्धि व्यृद्धं अन्यत्र कर्मणि वृद्धिहीनं यत्क्रियते पशुपुरोडाशानां भिन्नदेवत्यत्वं तदस्यां क्रियमाणं समृद्धं समृद्धिहेतुर्भवति अस्यास्समृद्धिः दैवतेन भवति ॥

[5]ऐन्द्र इत्यादि ॥ एषा खल्वपि सूते अश्वम् अप्यश्वतरं सूते । अश्वायां गर्दभेन उत्पादितोऽश्वतरः । 'वत्सोक्षाश्च' इति

वा एषाऽश्वꣳ सूते । उताश्वतरम् । उत सोमं उत सुरां । यथ्सौत्रामणी समृद्ध्यै । [6]बार्‌हस्पत्यं पशुं चतुर्थमतिपवितस्यालभते । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैव यज्ञस्य व्यृद्धमपिवपति । [7]पुरोडाशवानेष पशुर्भवति । न ह्येतस्य ग्रहं गृह्णन्ति । [8]सोमप्रतीकाः पितरस्तृप्णुतेति शतातृण्णायाꣳ समवनयति ॥ २४ ॥ शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति तिष्ठति । [9]दक्षिणेऽग्नौ जुहोति । पापवस्यसस्य व्यावृत्त्यै । हिरण्यम-

ष्टरच् प्रत्ययः । सौत्रामणी च अपि सोमः यागसाधनत्वात्, अपि च सुरा उत्पत्त्या । पयोग्रहापेक्षया वा सोमोपतीत्युक्तम् ॥

[6]बार्हस्पत्यमित्यादि ॥ उक्तोऽतिपवितः * । अपिवपतीति यद्व्यृद्धं तत्पूरयति ॥

[7]पुरोडाशवानित्यादि ॥ पशुना समानदेवत्यः पुरोडाश एव एष भवतीति तादृशस्य ग्रहस्याभावात् ॥

[8]सोमप्रतीका इति ॥ शतातृण्णायां शतच्छिद्रायां स्थाल्यां सुराशेषं समवनयति ॥

[9]दक्षिणेऽग्नौ जुहोति नाहवनीये पापेन वसीयस्त्वं यत् पापघन वसरत्वं तस्य व्यावृत्त्यर्थं पृथक् स्थापनार्थम् । यद्वा—पापवस्य

* आ. १-८-६.

न्तरा धारयति । पूतामेवैनां जुहोति । शतमानं भवति । शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति तिष्ठति । [10]यत्रैव शतातृण्णां धारयति ॥ २५ ॥ तन्निदधाति प्रतिष्ठित्यै । [11]पितॄन् वा एतस्यैन्द्रियं वीर्यं गच्छति । यꣳ सोमोऽतिपवते । पितॄणां याज्यानुवाक्याभिरुप तिष्ठते । यदेवास्य पितॄनिन्द्रियं वीर्यं गच्छति । तदेवावरुन्धे । तिसृभिरुप तिष्ठते । तृतीये वा इतो लोके पितरः । ताने व प्रीणाति । [12]अथो त्रीणि वै यज्ञस्यैन्द्रियाणि ।

सस्य शुभस्य च व्यावृत्त्यर्थ विभागार्थम् । 'विन्मतोर्लुक्' ईयसुन ईकारलोपः । हिरण्यमन्तरा अग्नेश्शतातृण्णायाश्च मध्ये धारयति । हिरण्येन सुरां जुहोति । शतमानमित्यादि । गतम्* ॥

[10]यत्रेत्यादि ॥ यत्राग्नौ यस्याग्नेरुपरि शतातृण्णां धारयति शतातृण्णां समवनयति तत्रैव शतातृण्णां निदधाति प्रतिष्ठार्थम् । तेन गम्यते—दक्षिणाग्नेरुपरि शतातृण्णां समवनयति तत्रैव चैनां निदधातीति ॥

[11]पितॄनित्यादि ॥ पितॄणां याज्याः 'उदीरताम्' †इत्यादयः ॥

[12]अथो त्रीणीत्यादि ॥ यज्ञस्येन्द्रियाणि वीर्यहेतवः अध्वर्य्वादयस्त्रयः सन्ति न यजमान एव केवलः । तस्मात्तेऽध्वर्य्वादय उप-

*ब्रा. १-७-८. † सं. २-६-१२.

अध्वर्युर् होता ब्रह्मा । त उपतिष्ठन्ते । यान्येव य-
ज्ञस्यैन्द्रियाणि । तैरेवास्मै भेषजं करोति ॥ २६ ॥

प्रीणाति प्रथमो दक्षिणा समवनयति धार-
यतीन्द्रियाणि चत्वारिं च ॥ ६ ॥

[1]अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्नि-
ष्टोमः । यज्ञमुखमेवारभ्य सवमाक्रमते । [2]अथै-
षोऽभिषेचनीयश्चतुस्त्रिꣳशपवमानो भवति । त्रयं-

तिष्ठन्ते । तैः यज्ञस्यापि वीर्यभूतैः अस्मै अतिपवित्राय भेषजं करोति ॥

इति अष्टमे षष्ठोऽनुवाकः.



[1]अग्निष्टोममग्र इत्यादि ॥ अग्रे आदौ राजसूयस्य अग्निष्टोमं पवित्राख्यं आहरति । यज्ञमुखं हि अग्निष्टोमः । तस्माद्यज्ञमुखमेवारभ्य राजसूयमाक्रमते अधितिष्ठति मुखमेवाक्रम्य सर्वं करोति ॥

[2]अथेत्यादि ॥ अथाभिषेचनीयः उक्थ्याख्यश्चतुस्त्रिंशपवमानो भवति । अथेत्यहरानन्तर्यं द्योतयति । चतुस्त्रिंशस्तोत्रीयस्तोमश्च-

स्त्रिꣳशद्दे॒वताः᳚ । ता ए॒वाप्नोति । प्र॒जाप॑तिश्चतु॒स्त्रिꣳ॒शः । तमे॒वाप्नोति । [3]स॒ꣳश॒र ए॒ष स्तोमा॑ना॒मय॑थापूर्वम् । यद्वि॑षमा॒स्स्तोमाः᳚ ॥ २७ ॥ ए॒ता॒वा॒न् वै य॒ज्ञः। यावा॒न्पव॑मानाः। अ॒न्त॒श्श्ले॒ष॒णं त्वा अ॒न्यत् । यथ्स॒माः पव॑मानाः । तेनास॑ꣳशरः । तेन॑ यथापूर्वम् । [4]आ॒त्म॒नै॒वाग्नि॒ष्टो॒मेन॒र्ध्नोति । आ॒-

तुस्त्रिंशः । तादृशपवमान एष इति अवयवद्वारेण अवयवी स्तूयते । त्रयस्त्रिंशदित्यादि । गतम् ॥

[3]संशर इति ॥ संशरणं संशरः । 'ऋदोरप्' थाथादिना उत्तरपदान्तोदात्तत्वम् । स्तोमानामेष संशरः शीर्णता संभूयविनाशः यत् स्तोमास्सर्वेऽपि अयथापूर्वं भवन्ति । यथा पूर्वस्तोमः तथा उत्तरे न भवन्ति । किमुक्तं भवतीत्याह—विषमा इति । बहिष्पवमाने चतुस्त्रिंशः, माध्यंदिनाद्यः पञ्चदशादय एव स्युरिति । यद्वा पूर्वं प्रकृतौ स्तोमानां साम्यं दृष्टं, तदतिक्रमणे यत् स्तोमा विषमाः स्युः एष संशरः स्तोमानामिति । ननु संशीर्णता संभूय स्तोमानां भवतु, का क्षतिर्यज्ञस्येत्याह—एतावानित्यादि । पवमाना एव यज्ञः, पवमानव्यतिरिक्तं सर्वं तु अन्तश्श्लेषणमेव यज्ञदार्ढ्यार्थं भित्तिपादावन्तर्निधीयते तदन्तश्श्लेषणम् । तस्मात् सर्वपवमानसाम्येन संशराभावः । यथापूर्वमेव च कृतं भवति ॥

[4]आत्मनैवेत्यादि ॥ आत्मा अग्निष्टोमसाम तस्मात् तत्संस्थेन

त्मना पुण्यो भवति । प्रजा वा उक्थानि । पशव उक्थानि । यदुक्थ्यो भवत्यनु संतत्यै ॥ २८ ॥

स्तोमाः पशव उक्थान्येकं च ॥७॥

[1]उप त्वा जामयो गिर इति प्रतिपद्भवति । [2]वाग्वै वायुः । वाच एवैषोऽभिषेकः । सर्वासामेव प्रजानाꣳ सूयते । सर्वा एनं प्रजा राजेति वदन्ति।

---

यागेन आत्मस्थानीयेन स्वयमृध्नोति । किंच आत्मस्थानीयेन तेन पुण्यश्च स्वयं भवति । 'प्रकृत्यादिभ्यः' इति तृतीया । अथ प्रजाः पशवश्च उक्थानि शस्त्रविशेषः । तत्संस्थ उक्थ्यः प्रजापशुस्थानीयः यस्मात् द्वितीयमहर्भवति तदनु संतत्यै अनुक्रमेण संतानसमृद्ध्यै भवति ॥

इति अष्टमे सप्तमोऽनुवाकः.

[1]उप त्वेत्यादि ॥ प्राथम्यात् बहिष्पवमानस्य प्रथमतः पद्यते स्वीक्रियत इति प्रतिपत् । संपदादित्वात् क्विप् ॥

[2]वाग्वा इत्यादि ॥ वाक् वायुः तन्निमित्तत्वात् वाच एवाय-मभिषेकः योऽभिषेचनीये क्रियते, वाक्समृद्धिहेतुत्वात् । तस्मात् 'वा

[3]एतमु त्यं दशक्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन सूयते । [4]यन्ति वा एते यज्ञमुखात् । ये संम्भार्यां अक्रन् ॥ २१ ॥ यदाह पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्न यन्ति । [5]अनुष्टुक्प्रथमा भवति । अनुष्टुगुत्तमा । वाग्वा अनुष्टुक् । वाचैव प्रयन्ति । वाचोद्यन्ति । [6]उद्वतीर्भवन्ति ।

योरनीके अस्थिरन्'[1] इत्युच्यत इति । तस्मात्सर्वासां प्रजानामेव सूयते ईश्वरीक्रियते । सर्वत्र ख्यातत्वात् सर्वाः प्रजाः एनं राजेति वदन्ति वागभिषेकात् ॥

[3]आदित्या वा इत्यादि ॥ उदयप्रकाशवर्षादिना आदित्यस्य स्वभूताः प्रजाः । तस्मात् सर्वासां प्रजानां सूयते ईश्वरो भवति । तस्मात् 'समादित्येभिरख्यत'[2] इत्युच्यत इति ॥

[4]यन्ति वा इत्यादि ॥ यन्ति अवगच्छन्ति यज्ञमुखात् यज्ञारम्भात्। के ये संभार्याः संभाराख्याभिः ऋग्भिः तृचानामाद्याभिः आद्यानि सामानि अक्रन् अकार्षुः । तस्मात् 'पवस्व वाचो अग्रियः'[3] इति वचनात् यज्ञमुखान्न यन्ति नापगच्छन्ति ॥

[5]अनुष्टुगित्यादि ॥ प्रथमोत्तमयोरनुष्टुक्त्वात् वाङ्मयत्वाच्च अनुष्टुभा वाचैव प्रयन्ति प्रारभन्ते । वाचोद्यन्ति समापयन्ति यज्ञम् ॥

[6]कथं गायत्रीणामनुष्टुप्त्वमित्याह—उद्वतीरित्यादि ॥ उच्छन्द-

[1] ऋक्सं. ८-१०२-१३. [2] ऋक्सं. ९-६१-७. [3] ऋक्सं. ९-६२-२६.

उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः ॥३०
तस्मादुद्वतीर्भवन्ति । सौर्यनुष्टुगुत्तमा भवति । सुवर्गस्य लोकस्य संतत्यै । [7]यो वै सवादेति । नैनꣳ सव उपनमति । यस्सामभ्य एति । पापीयान्थ्सुषुवाणो भवति । एतानि खलु वै सामानि । यत्पृष्ठानि । यत्पृष्ठानि भवन्ति ॥ ३१ ॥ तैरेव सवान्नैति । [8]यानि देवराजानाꣳ सामानि । तैरमुष्मिन्लोक ऋध्नोति । यानि मनुष्यराजानाꣳ सामानि।

---

वत्य ऋचो भवन्ति । अनुष्टुभो हि रूपमुद्वत् उद्गतत्वात् भवति गायत्र्यपेक्षया ऊर्ध्वं गतत्वात्, तस्मात् अनुष्टुप्त्वम् । राजन्यश्चायमानुष्टुभः तद्वीर्यप्रभवत्वात् । तस्मादुद्वत्य एता भवन्ति । सौर्यनुष्टुगित्यादि । गतम् ॥

[7]यो वा इति पृष्ठविधिः ॥ पृष्ठान्येव सवः । तस्मात् पृष्ठान्येव सामानि । तस्मात् यः सवात् पृष्ठात्मकादेति अपगच्छति नैनं सवः ऐश्वर्यं सवान्तरं अयमेव वा यज्ञ उपनमति । किंच यः सामभ्यः अपगच्छति स सुषुवाणः कृत्वाऽपि सवं पापीयान् पापतरः दरिद्रो भवति । तस्मात् पृष्ठैरेव सवात्रापगमः, तत्पापीयान् न भवति ॥

[8]यानीत्यादि ॥ देवीभूता राजानो देवराजानः देवानां राजानः । एवं मनुष्यराजानः । अन्यतरसम्बन्धिसामपरिग्रहे अन्यतरलोकर्द्धिः ।

तैरस्मिन्लोक ऋध्नोति । उभयोरेव लोकयोर्ऋध्नोति । देवलोके च मनुष्यलोके च । [9]एकविꣳशोऽभिषेचनीयस्योत्तमो भवति । एकविꣳशः केशवपनीयस्य प्रथमः । सप्तदशो दशपेयः ॥ ३२ ॥ विड्वा एकविꣳशः । राष्ट्रꣳ सप्तदशः । विशां एवैतन्मध्यतोऽभिषिच्यते । तस्माद्वा एष विशां प्रियः। विशो हि मध्यतोऽभिषिच्यते । [10]यद्वा एनमदो दिशोऽनु व्यास्थापयन्ति । तथ्सुवर्गं लोकमभ्यारोहति।

उभयपरिग्रहे उभयोरपि लोकयो ऋद्धिः भवति । सामविशेषाणामियमाख्या ॥

[9]एकाविंश इत्यादि ॥ अभिषेचनीयस्योत्तम अन्त्यः स्तोमः एकविंशस्तोत्रीयो भवति, उक्थ्यत्वादभिषेचनीयस्य उक्थ्यानामेकविंशत्वात् । केशवपनीयस्य प्रथमः स्तोम एकविंशो भवति । तस्यावृत्ताग्निष्टोमस्तोत्रत्वात् । दशपेयः सर्वोपि सप्तदशो भवति तत्र विडात्मकयोरेकाविंशयोर्मध्ये राष्ट्रात्मकस्य सप्तदशस्यावस्थानात् विशो मध्यतोऽभिषिक्तो भवति एतत् एतस्मिन्राष्ट्रे । 'सुपां सुलुक्' इति सप्तम्या लुक् । तस्मादेष राजा विशां प्रकृतीनां प्रियः अभीष्टो भवति । विश इति जातावेकवचनम् ॥

[10]यद्वा एनमित्यादि ॥ यत् यदा एनं दिशोऽनु व्यास्थापयन्ति 'दिशो व्यास्थापयति'[1] इति पूर्वं कृतं अद इति निर्दिशति ।

[1] ब्रा. १-७-७.

यदिमं लोकं न प्रत्यवरोहेत् । अति जनं वेयात् । उद्वां माद्येत् । यदेष प्रतीचीनस्तोमो भवति । इममेव तेनं लोकं प्रत्यवरोहति । अथो अस्मिन्नेव लोके प्रति तिष्ठत्यनुन्मादाय ॥ ३३ ॥

अर्कन्राजन्यौ भवन्ति दशपेयो माद्येत्त्रीणि च ॥ ८ ॥

[1] इयं वै रजता । असौ हरिणी । यद्रुक्मौ भवतः ।

तत् तदानीमेव अयं सुवर्गं लोकं अभ्यारोहति तत्रायं यदिमं लोकं न प्रत्यवरोहेत् पुनरत्र नावतरेत् । तदा अयं जनमात्मीयं अति वेयात् । यद्वा—जनपदमात्मीयं अतीयाद्वा, अतिक्रम्य पलायेत वा । तत्रैव वा उन्माद्येत्, तस्मादेष केशवपनीयः प्रतीचीनस्तोमः आवृत्तस्तोमोऽतिरात्रो भवति । इममेवेत्यादि । गतम् ॥

इति अष्टमे अष्टमोऽनुवाकः



[1] इयं वा इत्यादि ॥ अभिषेचनीयविषययो रुक्मयोः स्तुतिः क्रियते । पृथिवी रजता द्यौस्सौवर्णी । तस्मादध उपरि च यद्रजतसौवर्णौ रुक्मौ भवतः तस्मादाभ्यां द्यावापृथिवीभ्यामेव ह्येष परिगृहीतो भवति ॥

आभ्यामेवैनमुभयतः परि गृह्णाति । [2]वरुणस्य वा अभिषिच्यमानस्यापः । इन्द्रियं वीर्यं निरघ्नन् । तथ्सुवर्णꣳ हिरण्यमभवत् । [3]यद्रुक्ममन्तर्दधाति । इन्द्रियस्य वीर्यस्यानिर्घाताय । शतमानो भवति शतक्षरः । शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति तिष्ठति । [4]आयुर्वै हिरण्यम् । आयुष्या एवैनमभ्यर्ति क्षरन्ति । तेजो वै हिरण्यम् । तेजस्या एवैनमभ्यर्ति क्षरन्ति । वर्चो वै हिरण्यम् । वर्चस्या एवैनमभ्यर्ति क्षरन्ति ॥ ३४ ॥

शतक्षरोऽष्टौ च ॥ ९ ॥

---

[2]वरुणस्य वा इत्यादि ॥ गतम् ॥

[3]यद्रुक्ममिति ॥ सौवर्णं रुक्मं अन्तर्मध्ये राज्ञोऽपां च दधाति स्थापयति । तदिन्द्रियाः निर्घाताय अविनाशाय भवति । वरुणस्येव नास्यावघातः । शतमानः शतमानयवप्रमाणकः शतक्षरः शतच्छिद्रः ॥

[4]आयुर्वा इत्यादि ॥ हिरण्यस्य आयुर्हेतुत्वात् आयुष्याः आयुर्वृद्धिहेतुभूता एव सत्यः एनमभ्यतिक्षरन्ति एनमभिलक्ष्य परिक्षरन्ति । 'नौद्व्यचः' इति यत्, 'अभिरभागे' इति लक्षणे अनोः कर्मप्रवचनीयत्वम् । तेजो दीप्तिः वर्चो बलम् । गतमन्यत् ॥

इति अष्टमे नवमोऽनुवाकः.

अप्रतिष्ठितो वा एष इत्याहुः । यो राजसूयेन यजेत इति । यदा वा एष एतेन द्विरात्रेण यजते। अथ प्रतिष्ठा । अथ संवथ्सरमाप्नोति । यावन्ति संवथ्सरस्याहोरात्राणि । तावतीरेतस्य स्तोत्रीयाः। अहोरात्रेष्वेव प्रति तिष्ठति । अग्निष्टोमः पूर्वमहर्भवति । अतिरात्र उत्तरम् ॥ ३५॥ [2]नानैवाहोरात्रयोः प्रति तिष्ठति । पौर्णमास्यां पूर्वमहर्भवति ।

अप्रतिष्ठितो वा इत्यादि ॥ बहुयागकरणात् अप्रतिष्ठितो राजसूययाजी इत्याहुः । तस्य व्युष्टिद्विरात्रेण द्वित्वात् प्रतिष्ठा भवति संवत्सरं चाप्नोति । तत् कुत इत्याह—संवत्सरसंबन्धिनामहोरात्राणामेतत्सम्बन्धिनीनां च स्तोत्रीयाणां तुल्यपरिमाणत्वात् अहोरात्रेषु प्रतिष्ठितो भवति अवयवधर्मेण । द्विरात्रस्य हि द्विरात्रावयवस्य पञ्चषष्ट्यधिकशतत्रयं स्तोत्रीया भवन्ति । यथोक्तमाचार्येण—'चतुर्विंशाः पवमानाः, पञ्चदशानि त्रीण्याज्यानि, सप्तदशमच्छावाकस्य एकविंशानि त्रीणि चाच्छावाकस्य त्रयस्त्रिंशोऽग्निष्टोमसाम । एकविंशान्युक्थ्यानि सषोडशिकानि पञ्चदशी रात्रिः । त्रिवृत् सन्धिः' इति ॥

[2]नानैवेति ॥ नानास्वभावयोरहोरात्रयोः नानाप्रतिष्ठितो भवति, आश्रयनानात्वात् । व्यष्टका कृष्णप्रतिपत् । नानाभूतयोः अर्धमासयोः शुक्लकृष्णयोः नानाप्रतिष्ठितो भवति । उद्दृष्टः शु-

त्र्यष्टकायामुत्तरम् । नानैवार्धमासयोः प्रतितिष्ठति। अमावास्यायां पूर्वमहर्भवति । उद्दृष्ट उत्तरम् । नानैव मासयोः प्रति तिष्ठति । अथो खलु । ये एव समानपक्षे पुण्याहे स्याताम् । तयोः कार्ये प्रतिष्ठित्यै ॥ ३६ ॥ अपशव्यो द्विरात्र इत्याहुः । द्वे ह्येते छन्दसी । गायत्रं च त्रैष्टुभं च । जगतीम-

क्षाद्यमहः, यत्र चन्द्रमा उद्दृश्यते नानाभूतयोर्मासयोः पूर्वोत्तरयोः नानाप्रतिष्ठितो भवति । इदमेव लिङ्गं शुक्लादिर्मास इति । यदाह—'पौर्णमास्यां नानार्धमासयोः'[1] इति । यच्चाह—अमावास्यायां नानामासयोः'[1] इति । अथो अपि खलु पक्षान्तरमप्यस्तीत्याह—एकस्मिन्नपि पक्षे निरन्तरे पुण्याहे स्यातां तयोः कार्ये तदपि प्रतिष्ठित्यै भवति शीघ्रसमाप्त्या । उत्तमैकाभ्यां च' इति अह्नादेशाभावः । अर्धर्चादिर्द्रष्टव्यः ॥

[1]अपशव्यः इति ॥ पशुभ्यो हितो न भवति । 'उगवादिभ्यो यत्, ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । कथं अपशव्यत्वमित्याह—द्वे हीति । द्व्यत्र छन्दसी भवतः 'गायत्रं पूर्वेऽहन् साम भवति, त्रैष्टुभमुत्तरे'[1] इति । तत्राज्येषु त्रैष्टुभस्य साम्नो भावात् होतुरभिधानम् । यथोक्तमाचार्येण—'होतुराज्य एतानि संपादयेत्' इति छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम्' इति गायत्रीशब्दादञ् । त्रिष्टुप्शब्दादुत्सादित्वादञ् । एवमेते जगती-

[1] सं. ७-१-४.

न्तयँन्ति। न तेन जगती कृतेत्याहुः। यदेनां तृतीयसवने कुर्वन्तीति। यदा वा एषाऽहीनस्याह्र्भजते। साह्नस्य वा सवनम्। अथैव जगती कृता। अथ पशव्यः। [4]व्युष्टिर्वा एष द्विरात्रः। य एवं विद्वान्द्विरात्रेण यजते। व्येवास्मा उच्छति। अथो तममेवापहते। [5]अग्निष्टोममन्तत आहरति। अग्निस्स-

मन्तयँन्ति अन्तर्हितां कुर्वन्ति लुम्पन्ति। जागताः पशवः अपशव्यो द्विरात्रः इत्याहुः। अथ चेत ब्रूयुः—अथ ये तृतीयसवने जगतीति। अत्राप्येव त आहुः—यदेनां तृतीयसवने कुर्वन्ति सवनच्छन्दस्त्वेन न तावता जगती कृता कृतार्थेति। कथं कारमियं जगती कृता भवेदित्याह—यदा खल्वेषा अहीनस्य साह्नस्य क्रतोरवयवमहः कृत्स्नं भजते। साह्नस्य वा एकाहस्यावयवं सवनं भजते, अथानन्तरमेव जगती कृता भवति। न त्वहीने, तृतीयसवनमात्रान्वयात्। अथैवंसत्येव द्विरात्रः पशव्यो भवति जगतीलाभात्। तस्मादस्याहीनत्वात् यथेयमहरेकं कृत्स्नं भजते तथाविधः कश्चित्प्रकारोऽस्तीत्युक्तं भवति। स च द्विरात्रे दर्शितः 'वैखानसं पूर्वेऽहन् साम भवति तेन जगत्यै नैति'[1] पृष्ठेषु बार्हतं वैखानसं साम भवति। बृहती च त्रिरभ्यासात् षट्त्रिंशदक्षरा भवन्ति तत्र च तिस्रो जगत्यो भवन्ति इति॥

[4]व्युष्टिर्वा इत्यादि॥ एवं विदित्वा यजमानश्च व्युच्छति

[1]सं. ७-१-४.

वाँ देवताः । देवतास्वेव प्रति तिष्ठति ॥ ३७ ॥

उत्तरं प्रतिष्ठित्यै पञ्चाशयंस्सप्त च ॥ १० ॥

वरुणस्य जामीश्वर आग्नेयमिन्द्रस्य यत्त्रिष्वं-
ग्निष्टोममुप त्वेयं वै रजनाऽप्रतिष्ठितो दश ॥ १० ॥

वरुणस्य पदश्विभ्यां यत्त्रिषु तस्मादुद्वतीस्सप्त-
त्रिंशत् ॥ ३७ ॥ वरुणस्य प्रति तिष्ठति ॥

हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु.

प्रथमाष्टके अष्टमप्रपाठकः

प्रथमाष्टकं समाप्तम्.

---

वस्पसी ऽग्युच्छतीति सामर्थ्यात् । अथो अपि खलु तमश्च सर्वं बाह्यमाभ्यन्तरं चापहते । ऽव्यत्ययेनात्मनेपदम् ॥

[5]अग्निष्टोममिति ॥ अग्निष्टोममुदयनीयमन्ते आहरति । अग्नेस्सर्वदेवतात्वात् तासु प्रतिष्ठितो भवति । सन्तिष्ठते राजसूयः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये पारक्षुद्रे प्रथमेऽष्टके अष्टमप्रपाठके दशमोऽनुवाकः । समाप्तश्च प्रपाठकः.

इति प्रथमाष्टकम्.

